* श्रीः *

# पंक्तिप्रदीपः ।

( अजन्तपुल्लिँङ्गादिरव्ययप्रकरणान्तो )

द्वितीयो भागः ।

काशीस्थ-टीकमाणी-संस्कृत-महाविद्यालयाध्यक्षेण दर्शना-
लङ्कारोपाभिधेन श्रीमद्विद्वद्वर पण्डित देवकीनन्दन
शास्त्रिणा सङ्कलितः ।

स च



काश्यां
विद्याविलासनाम्नि यन्त्रालये
बाबू जयकृष्णदास गुप्त द्वारा-
रूँगटेत्युपनाम श्रेष्ठिभिः शिवनारायण-रामजीदास-
बद्रीदासादिभिर्मुद्रयित्वा प्राकाश्यं नीतः ।

प्रथमावृत्तिः १०००

# विज्ञप्तिः ।



इदानीन्तनान्प्रचरदध्ययनाध्यापनान् सर्वानेव व्याकरणग्रन्थानतिशय्य सिद्धान्तकौमुदी वर्तत इति सुविदितमेव सर्वेषां वैयाकरणानाम् ।

अस्याश्च तत्त्वविबोधनाय सिद्धान्तकौमुदीकारैरन्यैश्च मनोरमा शब्देन्दुशेखराभिधाना नैकविधाव्याख्याननिबन्धाः प्रणीताः सन्ति । किन्तु तेषामतीवदुरवबोधतया केवलसिद्धान्तकौमुदीमधीयानानां न तेभ्यः प्रकृततत्त्वावगमो भवतीत्यपि नाविदितं विदितवेदितव्यानाम् । अतस्तेभ्यः सारमाकलय्य गुरुपरम्परावगतानन्यांश्चार्थान्न्यासाँश्च सन्निवेश्य सिद्धान्तकौमुदीतत्त्वबुभूत्सूनां शस्त्रार्थप्रियाणामन्तेवासिनां परमोपकृतयेऽन्वर्थनामा पंक्तिप्रदीपो विद्वद्वर नानकरामशास्त्रि सङ्कलितः पञ्चसन्ध्यवसान एवेत्याकलय्य जयपुरराज्यान्तर्गत बगड़ग्राम-निवासिनः श्रीमन्तः **शिवनारायण रामजीदास बद्रीदासा**-द्यः श्रेष्ठिप्रवराः निरुक्तं ग्रन्थं सम्पूर्णतां नेतुं मां सादरमन्वरुत्सन्त । ततस्तद्वाक्यमभिनन्द्य वाराणसेय काशीस्थ सुविशदमति विद्वच्चक्रचूडामणीनां सुगृहीतनामधेयानां शिवसायुज्यमाप्तानां म०म० **श्री शिवकुमार** शास्त्रि पादानां चरणसेवन सञ्जातानुग्रहेण यथामति मयाऽजन्तपुल्लिङ्गादिरव्ययप्रकरणान्तो द्वितीयो भागो निरमायि अस्य तृतीयो भागश्च सत्वर-

मेव प्रकाशयितव्यः। सम्यक् संशोधितेऽप्यस्मिन् मदीयदृष्टिदोषात्सीसकाक्षरनियोजकदोषाद्वा सर्वजनसुलभा जाताऽशुद्धिः शुद्धिपत्रावलोकनेन स्वानुभवेन च संशोध्य मामनुगृह्णन्तु ।

इदन्त्ववश्यमेव वक्तव्यं यदस्य भागद्वयोपेतस्य ग्रन्थस्य मुद्रणे कृतधनव्यया विद्वद्भ्यो व्याकृतिमधीयानेभ्योऽन्तेवासिभ्यश्च मूल्य मन्तरेणैव समर्पणक्रमाः श्रीमन्तः श्रेष्ठि प्रवराः सरुपचन्द्र पृथ्वीराज वंशावतंसाः **श्रीशिवनारायण रामजीदास बद्रीदासादय** एव सर्वथा साधुवादार्हा इति ।

विदुषामाश्रवस्य—

**श्रीदेवकीनन्दनशास्त्रिणः,**

प्रिन्सिपल-टीकमाणी,

संस्कृत कालेज,

बनारस सिटी ।

# PREFACE

It is well known to all the distinguished Sanskrit grammarians that Siddhānt Kaumudi is an unparallel book of Sanskrit Grammar among the current text-books.

Though there are various editions of this grammar having explanatory notes, namely, Shabdendushekhara, Bālamanoramā etc., by various writers of Sanskrit, still every scholar of Sanskrit knows that none explain the matter so clearly as the students may understand its true meaning.

Owing to this reason an edition of this grammar upto Pancha Sandhi with elucidative notes by name 'Pankti Pradīpa' was prepared and published by Pt. Nānag Ram Shastri, a great scholar of Sanskrit for the benefit of the inquisitive Sanskrit students. Some how or other the rest of the said grammar remains unprepared and unpublished.

So, I have been requested by Sreemān Shivanārāyṇa, Rāmji Das, Badri Das and others, resident of Bagaḍa villege in Jaipur State, to prepare a similar note on the remaining portion of the said grammar.

The Second part of the said grammar with illustrative notes on the portion beginning from 'Ajanta pulinga and ending with Avyaya Prakaraṇa' has been prepared by me for the benefit of the Sanskrit students.

I dare to prepare this book only through the blessings of the Late Mahāmahopādhyāya Pandit Shiva Kumāra Shāstri, the world-renowned scholar of Sanskrit.

The Third part of the same grammar will be offered to the public very soon.

Though the proof of the book has been carefully corrected, yet, if through my oversight or through the oversight of the compositors, any mistakes are found, the readers are requested to kindly look into the corrigendum list or correct the same through their own learned experience.

I beg to say that I shall be very grateful for any corrections and suggestions that may be sent me by my indulgent readers and critics and will try to include them if the book reaches a second edition.

Lastly I have also to thank Sreemān Shivanārāyana, Ramji Das, Badridas and others, my publishers of these two parts, for the free distribution of a copy of these two parts to the learned scholars and the students.

Benares.
27-9-25

SHREE DEVAKINANDAN SHASTRI,
Principal, Teekmani Sanskrit College,
Benares.

Address from which the book should be brought is as follows.

*BOOK ADDRESS:—*

SETH SARUPCHAND &
PRITHWIRAJ RUNGTA,
Vi and P. O. Bagad,
Dt. Jaipur. ( Rajaputana ).

॥ श्रीः ॥

वैयाकरणसिद्धान्तकौमुदीकी कठिन पङ्क्तियों के समझने में यह पङ्क्तिप्रदीप ग्रन्थ अवश्य उपकारक होगा।

महामहोपाध्याय—

डाक्टर श्री गङ्गानाथ झा,

वाइस्चान्सलर यूनिवार्सिटी आफ इलाहाबाद।

---

काशीस्थटीकमाणीसंस्कृतमहाविद्यालयाध्यक्ष दर्शनालङ्कार-विद्वद्वर पण्डित श्रीदेवकीनन्दन शास्त्रिणा स्वरचितया टिप्पण्या समलङ्कृत्य संशोध्य च सङ्कलितः पङ्क्तिप्रदीपः मया बहुषु प्रदेशेषु विलोकितः सिद्धान्तकौमुद्यां सम्यग् व्युत्पत्तिमभिलषतां विद्यार्थिनामनेन ग्रन्थेन महानुपकारो भविष्यतीति मे सुदृढो विश्वासः।

महामहोपाध्याय—

श्रीप्रमथनाथतर्कभूषणशर्म्मणः।

काशीहिन्दूविश्वविद्यालयसंस्कृतविभागाध्यक्षस्य।

---

इदं पङ्क्तिप्रदीपपुस्तकं कतिपयांशदर्शनेन मयेदं निर्णीतम् यद्व्याकरणाध्येतृछात्राणां सिद्धान्तकौमुद्यर्थज्ञानाय परमोपयोगीति।

महामहोपाध्याय—

श्री जयदेवशर्म्ममिश्रः,

काशी।

---

श्रीश्रीविश्वनाथः शरणम् ।

दर्शनालंकारोपाधिकेन पण्डितवरेण श्रीमता देवकीनन्दन शास्त्रिमहोदयेन संकलितं पंक्तिप्रदीपाख्यं भागद्वयात्मकं व्याकरणग्रन्थं समालोक्य परं सन्तोषमध्यगच्छाम। ग्रन्थोऽयं परमरमणीय इत्यत्र नास्ति सन्देहः। शास्त्रिमहोदयेनापि परं प्रयत्य स्वरचितया टिप्पण्या ग्रन्थमिमं समलंकृत्य व्याकरणाध्येतॄणां सुमहान् उपकारः संसाधितः। इतः पूर्वमपि तेनैव तत्त्वबुभुत्सूनामुपकाराय महावाक्यरत्नावल्यनुभूतिप्रकाशाख्यौ मनोरमवेदान्तग्रन्थौ मुद्रयित्वा प्रकाशितौ। तदयं साधुसंकल्पः शास्त्रिमहोदयस्य सर्वथा समभिनन्द्यतेऽस्माभिः। सर्वेषामुपकाराय मुद्रणादिव्ययभारमावहन्तः सज्जनास्ते रामजीदास-शिवनारायण-बद्रीदासादयः श्रेष्ठिनोऽपि साधुवादार्हा इति शम्।

वाराणसी
१०-१०-१९

महामहोपाध्याय—
श्रीवामाचरणभट्टाचार्यः
न्यायशास्त्रप्रधानाध्यापकः
क्विन्सकालेज बनारस।

महामहोपाध्याय—
श्रीलक्ष्मणशास्त्री द्राविडः
काशी।

---

[ १ ]

पङ्क्तिप्रदीपस्य

# प्रथमभागस्य विषयानुक्रमणिका

| विषयः | पृ० | पं० |
|---|---|---|

इति स्वादिसन्धिः ॥



# पंक्तिप्रदीपस्य

# द्वितीयभागस्य विषयानुक्रमणिका ।

इत्यजन्तस्त्रीलिङ्गाः ।

इत्यजन्तनपुंसकलिङ्गाः ।

इ० हलन्तपुंल्लिँङ्गाः ।



इ० हलन्तस्त्रीलिँङ्गाः ।

समाप्ता विषयानुक्रमणिका ।

——:——

# शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ० | पं० |
|---|---|---|---|
| ( टिप्पण्यां ) | | | |
| स्वनिष्ठोद्दश्यता | स्वनिष्ठोद्देश्यता | २ | ४ |
| ताद्वस्थ्य | तादवस्थ्य | २ | १९ |
| ( मूले ) | | | |
| हस्वा | ह्रस्वा | ३ | १६ |
| हस्वत्वे | ह्रस्वत्वे | ३ | १७ |
| हस्वत्वं | ह्रस्वत्वम् | ३ | १८ |
| हस्वत्वे | ह्रस्वत्वे | ४ | २ |
| पत्यय | प्रत्यय | ४ | १० |
| ( टिप्पण्यां ) | | | |
| वन्निच्छ | वच्छिन्न | ६ | ५ |
| ( मूले ) | | | |
| हस्वो | ह्रस्वो | ११ | १ |
| नेत्युत्वात् | नेत्युक्तत्वात् | ११ | १२ |
| ( टिप्पण्यां ) | | | |
| योद्दश्यता | योद्देश्यता | १३ | ४ |
| वाक्येन च | वाक्ये च | १३ | ७ |
| ( मूले ) | | | |
| मर्थकत्वेन | मनर्थकत्वेन | १४ | १२ |
| सयुदाया | समुदाया | १८ | १८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| ( मूले ) | | | |
| लाक्षणार्थं | लक्षणार्थं | २६ | ८ |
| नुपन्न | नुपपन्न | २६ | १५ |
| ( टिप्पण्यां ) | | | |
| अत्राथ | अत्रेद | २८ | १ |
| ( मूले ) | | | |
| साधितायाः | साधितया | ३० | ७ |
| कारणे | कारेण | ३६ | २० |
| समाभ्यो | रमाभ्यो | ३८ | ८ |
| वयत्वेन | वयवत्वेन | ५७ | १० |
| दिति | दित्यति | ५९ | १८ |
| वाक्योपल्प | वाक्योपप्लव | ५९ | २३ |
| स्यादशा | स्यादेशा | ७२ | १८ |
| अङ् | अड् | ७७ | २ |
| भूति | भूदिति | ७७ | ९ |
| गौरि | गौ | ७७ | २५ |
| सेत्स्ये | सेत्स्य | ७८ | २० |
| यङन्ना | यङन्ता | ७८ | ८ |
| वेर्त्तलङि | वेर्त्तेर्लङि | ७८ | १२ |
| वाच्म | वाच्यम् | ८० | १६ |
| ककुद्दोपणी | ककुद्दोषणी | ८३ | १३ |
| संयोमान्त | संयोगान्त | ९३ | १७ |
| ( टिप्पण्यां ) | | | |
| विधित्वने | विधित्वेने | ९४ | १ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| ( मूले ) | | | |
| ग्रहणे | ग्रहणे | ९८ | १२ |
| सधि | सखि | ९९ | १० |
| वहूपतिने | वहुपतिने | १०९ | १ |
| षड्म्यः | षड्भ्यः | १११ | ७ |
| शड्भ्यः | षड्भ्यः | १११ | ८ |
| षट्सज्ञा | षट्संज्ञा | १११ | २१ |
| पर्याप्या | पर्याप्त्या | ११२ | ६ |
| भवत्वे | भत्वे | ११७ | १८ |
| नुपत्ति | नुपपत्ति | १२३ | ८ |
| दत्तावपि | देतस्यापि | १२४ | १४ |
| ( टिप्पण्याम् ) | | | |
| तत्मा | तस्मा | १२४ | ४ |
| भार्वो | भावो | १२५ | २ |
| स्वैफत्राक्यत्व | स्वैकवाक्यत्व | १२५ | ७ |
| ( मूले ) | | | |
| गुर्ण | गुंण | १२६ | ६ |
| क्षणित्वेन | क्षीणत्वेन | १२७ | २४ |
| नमभावो | नुमभावो | १३३ | २४ |
| दुर्वारा | र्दुर्वारा | १३५ | १२ |
| दवात्र | देवात्र | १३७ | ६ |
| ऐ ओज् | ऐ औज् | १३७ | १२ |
| इत्यन्त | इत्यजन्त | १३७ | १९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| प्रवृत्त्याभावा | प्रवृत्त्यभावा | १४३ | २ |
| विध उपाय | विधोपाय | १४३ | १४ |
| रुचितं | रैचित्यं | १४४ | ४ |
| स्त्र्याविति | स्त्र्याख्याविति | १४४ | ८ |
| स्त्रीशब्दावय | स्त्रीशब्दावयव | १५० | २ |
| पादान्तरं | पदान्तरं | १५० | ११ |
| वर्तमानात्व | वर्तमानत्व | १५० | ११ |
| विप्रकृष्टर्थे | विप्रकृष्टार्थे | १५१ | ३ |
| कुलमित्यत्र | कुलमजरमित्यत्र | १५७ | १ |
| स्वव्यवहित | स्वाव्यवहित | १५७ | ६ |
| समानाधिकरणं | सामानाधिकरण्यं | १५७ | ११ |
| मस्याने | मस्थाने | १५७ | १२ |
| वोपाध | वोपधा | १५७ | १३-१४ |
| सूत्राणं | सूत्राणां | १५९ | ९ |
| त्वादेशः | त्वादादेशः | १५९ | २१ |
| तदेव | तदव | १८४ | १५ |
| विशेप्य | विशेष्य | १८४ | २२ |
| स्थानिकनु | स्थानिकानु | २५३ | ३ |

॥ श्रीः ॥

# पङ्क्तिप्रदीपः ।

## द्वितीयोभागः ।

### अजन्तपुल्लिँङ्गप्रकरणम् ।

यदनुग्रहलेशेन सर्वाभीष्टमवाप्यते ॥
साम्बश्रीविश्वनाथाय तस्मै सर्वात्मने नमः ॥१॥
पङ्क्तिप्रदीपनामा यो ग्रन्थो नानकशास्त्रिणा ॥
आपञ्चसन्धि रचितः श्रेष्ठिभिर्मुद्रितः स तु ॥२॥
शिवनारायणः श्रीमान् रामदासश्च शीलवान् ॥
बद्रीप्रसादो मतिमान् उदाराः सर्व एव ते ॥३॥
असम्पूर्णतया तस्य पूर्त्यर्थं प्रार्थितश्च तैः ॥
अज्ञोऽपि तत्र यतते देवकीनन्दनो द्विजः ॥४॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । स्वादिविधिनिरूपणानन्तरं स्वादिविधिप्रसङ्गस्तद्विधौ च प्रातिपदिकाऽधिकारात्तां संज्ञामाह–अर्थवदिति । नच ङ्याप्प्रातिपदिकादित्यत्र ङ्यापोः प्रथममुपादानात्तयोरप्यधिकारत्वेन प्रथमतस्तयोरेव निरूपणमुचितमिति वाच्यम् । ङ्याब्ग्रहणस्याऽन्यप्रयोजनताया वक्ष्यमाणत्वात्तयोरपि निष्पत्तौ प्रातिपदिकत्व-

स्योद्देश्यतावच्छेदकत्वमित्याशयात् । अधातुरिति । अप्रत्यय इति पर्य्युदासो लाघवात् । प्रसज्यप्रतिषेधे हि असमर्थसमासस्य वाक्यभेदस्य चाऽङ्गीकारे गौरवं स्यात् । आरोपितो धातुरधातुरित्यादि(१)रर्थः । आवर्त्तिते प्रत्ययपदे प्रत्ययग्रहणपरि-

---

(१) अयं भावः, धातु प्रत्यय प्रत्ययान्तपदार्थस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन नञर्थभेदेऽन्वयो भेदस्य च स्वरूपसम्बन्धेन अर्थवत्पदार्थेऽन्वयस्तस्य च शब्दस्वरूपपदार्थे भेदसम्बन्धेनान्वयस्तस्य च स्वनिष्ठोद्देश्यतानिरूपिताविधेयताश्रयत्वसम्बन्धेन संज्ञायां संज्ञायाश्च वृत्तित्वसम्बन्धेन सत्तायान्तथा च धातुनिष्ठप्रतियोगितानिरूपको यो भेद एवं प्रत्ययनिष्ठप्रतियोगितानिरूपको यो भेद एवं प्रत्ययान्ततदादिनिष्ठप्रतियोगितानिरूपको यो भेदस्तदाश्रयार्थवदभिन्नशब्दस्वरूपनिष्ठोद्देश्यतानिरूपितविधेयताश्रयीभूतप्रातिपदिकसंज्ञावृत्तिसत्ता इत्याकारकः शाब्दबोधो भवति। अत्रेदं विचार्यते-पूर्वोक्तार्थस्वीकारे धातुघटोभयं न धातुरित्याद्याकारकभेदस्य धात्वादावपि सत्त्वेन तेषामपि प्रातिपदिकत्वापत्तेर्दुर्वारत्वेन धात्वादिपर्य्युदासो विफल इति चेन्न। अधात्वादिपदस्य स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेद एवार्थस्तथाचैतादृशभेदविशिष्टस्यार्थवच्छब्दस्वरूपस्य प्रातिपदिकसंज्ञाविधानात् पूर्वोक्तधातुघटोभयन्न धातुरित्याद्याकारकभेदमादायाधातुग्रहणसत्त्वेऽपि धातोः प्रातिपदिकसंज्ञा न वारिता भवतीति धात्वादिपर्य्युदासोऽनर्थक इति यदुक्तं तन्निरस्तम्। नचैवमपि धातुत्वेन धातुघटोभयन्नेत्याद्याकारकभेदमादाय पुनर्दोषस्य तादवस्थ्यमिति वाच्यम्। स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकतात्वरूपसम्बन्धस्यापि निवेशात्तथा च स्वावच्छेकतेत्यादिपूर्वोक्तसम्बन्धनिवेशाद्धातुघटोभयं नेत्याकारकभेदमादाय द्वितीयसम्बन्धनिवेशाद्धातुत्वेन धातुघटोभयं नेत्याकारकभेदमादायापि न दोषसम्भव इति संक्षेपः।

भाषया तदन्तग्रहणम्। संज्ञा तद्विषय इत्याह—प्रत्ययान्तमिति। सूत्रेऽर्थशब्दोऽभिधेयवाचको नतु प्रयोजनवाचकः। सर्वस्याऽपि यत्किञ्चित्प्रयोजनवत्त्वात् अर्थवद्ग्रहणस्याऽऽनर्थक्यप्रसङ्गात्। एवञ्च शक्त्या यत्किञ्चिदर्थविशिष्टं यत्तत्प्रातिपदिकसंज्ञं स्यादित्यर्थः। अर्थवद्ग्रहणस्य दश दाडिमानि षडपूपा इत्यादिव्यावृत्तिप्रयोजनम्।

अधातुरिति किम्। अहन् इत्यत्र नलोपः स्यात्। नच प्रत्ययलक्षणेन प्रत्ययान्तपर्युदासः स्यादिति वाच्यम्। प्रत्ययलक्षणेन प्रत्ययान्तपर्युदासाप्रवृत्तौ न ङिसम्बुद्ध्योरिति सूत्रस्थसम्बुद्धिग्रहणस्य ज्ञापकत्वसम्भवात्। नच धातोः प्रातिपादिकत्वाभावे सुपो धातुप्रातिपदिकयोरिति सूत्रस्थधातुग्रहणमेव ज्ञापकं भविष्यतीति वाच्यम्। श्येनायते इत्यादौ क्यङन्तस्य प्रत्ययान्तपर्युदासेनाऽप्रातिपदिकत्वात्तस्याऽऽवश्यकत्वेन ज्ञापकत्वाऽसम्भवात्।

अप्रत्यय इति किम्। काण्डे कुड्ये। अत्र हि प्रातिपदिकत्वे ह्रस्वापत्तिर्दोषः। ननु पर्जन्यवल्लक्षणप्रवृत्तिरितिन्यायेनाऽन्तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागेव ह्रस्वत्वे कृते ततः सुबुत्पत्तावेकादेशेऽपि लक्ष्ये लक्षणस्येति न्यायेन पुन ह्र्स्वत्वं न भविष्यति, विकारकृतो लक्ष्यभेदस्तु लक्ष्ये लक्षणस्येति न्यायप्रतिबन्धको न भवति, उदवोढामित्यादावकारस्याकारे तस्यौकारे ढत्वादीनामसिद्धत्वात्पुनराकारस्य प्राप्ताया हलन्तलक्षणवृद्धेरनेन न्यायेन वारणपरभाष्यप्रामाण्येन तादृशभेदस्यानाश्रयणादिति चेन्न। यद्धर्मावच्छिन्नस्य पूर्वकालिकप्राप्तिकर्तृकशब्दबोध्यकार्यविधावुद्देश्यता तद्धर्ममात्राश्रयोद्देश्यकविकारस्यैव भेदानियामकत्वकल्पनात्। यथोदवोढामित्यत्र हलन्तधात्ववयवाच्त्वमुद्देश्यतावच्छेदकं तद्धर्ममात्रावच्छिन्नस-

म्बन्धित्वमेव पुनः प्राप्तवृद्धेरिति। नचैवमूखतुरित्यत्र पूर्वम-भ्यासस्य ह्रस्वत्वे तत एकादेशे कृते पुनः प्राप्तह्रस्वत्वस्य नाऽ-भ्यासमात्रावयवः स्थानीति लक्ष्ये लक्षणस्येति न्यायेन स-माधानपरग्रन्थविरोध इति वाच्यम्। अभ्याससंज्ञाविधौ धात्व-वयवप्रथमैकाचो ग्रहणेन विधीयमानं यद्द्विर्वचनं तत्पूर्वभाग-स्योद्देश्यतया ह्रस्वत्वस्य तदच्स्थानिकत्वेन तद्धात्ववयवाच्स्था-निकैकादेशस्यापि न लक्ष्यभेदसम्पादकत्वमित्याशयात्। का-ण्डे, कुड्ये, इत्यत्र तु पूर्वं प्रातिपदिकान्त्यत्वविशिष्टमच्त्वं ह्रस्व-त्वविधावुद्देश्यतावच्छेदकं तदवच्छिन्नमात्रसम्बन्धित्वं नैकादे-शस्य किन्तु प्रकृतिप्रत्ययसम्बन्धित्वमित्येतादृशभेदमादाय लक्ष्य-भेदस्याश्रयणात्। अत्र च काण्डे, कुड्ये, इत्यत्र प्रत्ययान्तपर्यु-दासप्रयोजनप्रदर्शनपरभाष्यस्यैव साधकत्वमाश्रीयते। युक्तञ्चै-तत्। अन्यथा अतति यत्कुलम् तदम कुड्यस्याम् कुड्यम्–तस्मै कुड्यायेत्यत्र सवर्णदीर्घे कृते ह्रस्वो नपुंसकेति ह्रस्वानापत्तिः स्यात्। तथा विवक्षायान्तु कुड्यशब्दान्त्यावय-वाच्त्वं पूर्वकालिकप्राप्तिकर्तृह्रस्वत्वोद्देश्यतावच्छेदकं तदाश्रयमात्र-सम्बन्धित्वं नोत्तरकालिकविकारस्येति लक्ष्यभेदो भवत्येव। नचैवमपि काण्डे, कुड्ये, इत्यत्रैकादेशे विशिष्टस्य प्रत्ययान्ताभि-न्नत्वं शास्त्राश्रितं पूर्वान्तवद्भावेनेति ह्रस्वत्वं प्राप्नोत्ये-वेति वाच्यम्। ह्रस्वो नपुंसके यत्तस्येति न्यासेन सिद्धे प्राति-पदिकग्रहणात्सत्वप्रधानप्रातिपदिकस्यैव ग्रहणमिति स्वीकारात्। यद्यप्यत्रार्थवच्छब्दसद्भावे धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वे-ति मूलोक्तव्याख्यानं समानकर्तृकत्वाभावान्नोपपद्यते। तथा-पि प्रातिपदिकसंज्ञकत्वविशिष्टभवनेऽर्थवच्छब्दस्वरूपस्य कर्तृत्वे तात्पर्यमिति बोध्यम्।

अर्थवत्त्वं च वृत्त्याऽर्थबोधजनकत्वम् । ननु कृत्तद्धितेति सूत्रेऽर्थवदित्यनुवृत्तिसामर्थ्याच्चदन्तग्रहणमिति ग्रन्थानां गगनारविन्दत्वापत्तिरिति चेन्न । शब्दाऽधिकाराश्रयणात् । (१)एकार्थीभावेन लौकिके प्रयोगेऽर्थबोधजनकत्वमर्थवत्त्वमिति लक्षणान्तरस्वीकारादिति दीक्षितानामभिप्रायः । ये तु लक्षणद्वयस्वीकारे गौरवाद्वृत्त्याद्यनेककुसृष्टिकल्पनगौरवाच्च सूत्रद्वयसाधारणमेकमेव लक्षणं युक्तम् । तच्च, एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वमिति प्राहुः । अत एव प्रकृतसूत्रे भाष्ये, अप्रत्यय इति शक्यमकर्तुम् । कस्मान्न भवति काण्डे, कुड्ये इति, कृत्तद्धितग्रहणं-

---

(१) एकार्थीभावश्च शब्दविशिष्टशक्तिरेव वै० स्वपर्य्याप्तत्वं स्वघटकशब्दनिष्ठशक्तिज्ञानाधीनज्ञानविषयत्वमेतदुभयसम्बन्धेन कृष्णसर्पः प्रतिष्ठा निष्ठा इत्येतेषु नैकार्थीभावरूपा शक्तिः किन्तु रूढिरेव सा इति तत्र स्वघटकेत्यादिद्वितीयसम्बन्धाभावेऽपि नाव्याप्तिः राजपुरुषादिसमासनिष्ठा च राजसम्बन्धिपुरुषत्वावच्छिन्नरूपिता शक्तिरतिरिक्ता वर्त्तते वैयाकरणमते सा च राजपदनिष्ठशक्तिज्ञानादेव ज्ञायते इति तत्र राजपुरुषपदविशिष्टत्वादेकार्थीभावोपपत्तिः न च लक्षणात्मकशक्तावतिव्याप्तिस्तत्र स्वं लाक्षणिकः शब्दस्तद्घटको व्यपदेशिवद्भावेन स एव तन्निष्ठशक्तिज्ञानाधीनज्ञानविषयत्वस्वपर्य्याप्तत्वोभयसम्बन्धेन शब्दविशिष्टत्वस्य तत्रापि सत्वादिति वाच्यम् । द्वितीयसम्बन्धस्थाने स्वघटकविशिष्टत्वस्य निवेशात् वै० स्वनिष्ठशक्तिज्ञानाधीनज्ञानविषयत्व स्वभिन्ननिष्ठशक्तिज्ञानाधीनज्ञानविषयत्वोभयसम्बन्धेन तथा च लक्षणात्मकशक्तौ नातिव्याप्तिस्तत्र द्वितीयपदाभावादिति तथा चैकार्थीभावात्मकशक्तिज्ञानाधीनबोधजनकत्वमर्थवत्वमुत्तरसूत्रे इति सिद्धं भवति परन्त्वस्मिन्मते अर्थवत्त्वद्वयोपस्थितिद्वयस्य विभिन्नरूपेण बोधद्वयं प्रति कारणता स्वीकर्त्तव्या इति गौरवं उभयसूत्रे एतत्संज्ञेति अर्थवत्त्वस्वीकारे बोधद्वयं प्रति एकस्या एव उपस्थितेः कारणत्वमिति लाघवम् ।

नियमार्थं भविष्यति, कृत्तद्धितस्यैव प्रत्यान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्येत्यादिना प्रत्ययपर्युदासो नाङ्गीकृतः। नन्वेवमपि खट्वादिशब्दानामेतत्संज्ञाफलभूतविभक्तीतरटापमपेक्ष्य लौकिकार्थबोधजनकत्वात्प्रातिपदिकत्वाऽनापत्तिरिति चेन्न। लक्षणे विभक्तिपदस्य प्रत्ययमात्रोपलक्षकत्वेनाऽदोषात्। नच-रामोऽस्तीत्यादावस्तिक्रियासापेक्षत्वात्प्रातिपदिकत्वन्न स्यादिति वाच्यम्। सर्वविभक्तीनां कारकबोधकत्वात्कारकस्य क्रियाजनकत्वेन सर्वत्रैव क्रियाकांक्षत्वात्संज्ञासूत्रसामर्थ्यात्प्रातिपदिकत्वे बाधकाऽभावात्। नन्वेवं कारयाञ्चकारेत्यादौ कारयामित्यादेः प्रातिपदिकत्वं न स्यात्। तिङ्प्रकृतिककृञोऽपेक्षासत्त्वात्। नचेष्टापत्तिरिति वाच्यम्। प्रातिपदिकत्वाऽभावे सुबन्तत्वाऽभावात् ( तिङ्ङतिङ ) इति निघातानापत्तेः। नच प्रत्ययलक्षणेन तिङन्तत्वात्पदत्वेन निघातो भविष्यतीति वाच्यम्। ( अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ) इति न्यायेन तिबादेशापवादत्वाल्लुको लावस्थायामेव प्रवृत्तेः। तिङन्तत्वात्पदत्वेन निघातानापत्तेश्चेति चेत्सत्यम्। एतत्संज्ञाफलभूतविभक्तीतरानपेक्षयेति लक्षणे इतरशब्देन प्रत्यासत्तिन्यायादेतत्प्रकृतित्वयोग्यस्यैव ग्रहणेन सकलेष्टसिद्धेः। नच नीलो घट इत्यादौ नीलघटशब्दार्थयोः परस्पराकाङ्क्षत्वात्प्रातिपदिकत्वानापत्तिरिति वाच्यम्। स्वार्थे परिपूर्णं पदं पदान्तरेणाऽन्वेतीति न्यायेन सुबुत्पत्तेः प्राक् परस्पराकाङ्क्षाविरहात् पूर्वमेव प्रातिपदिकसंज्ञाप्रवृत्तेः। व्यावृत्तश्च पञ्चनावप्रिय इति। अत्र प्रातिपदिकसंज्ञाप्रयोजकप्रत्ययेतरप्रियशब्दार्थसापेक्षत्वेन लक्षणाऽप्राप्तेरवान्तरतत्पुरुषे कृत्तद्धितेति प्राप्तावपि समासप्रयुक्ता नेतिस्पष्टम्। सत्यां च तस्यां ङीबापत्तिदोषः। एतेन ढिड्ढेति सूत्रे-

ऽणञ्साहचर्यात् त्रिपदबहुव्रीहिघटिततत्पुरुषघटितातिरिक्तटिदन्तप्रातिपदिकान्ङीबित्यर्थाऽभ्युपगमेन नास्ति ङीपः प्राप्तिरित्यपास्तम् । ( सहचरित ) परिभाषया तद्वारणेऽपि द्विगोरितिङीपो दुर्वारत्वात् । ननु शशशृङ्गमित्यादौ लोकेऽर्थबोधजनकत्वाऽभावे प्रातिपदिकत्वानापत्त्या सिद्धान्तदर्शनारूढसमासग्रहणनियमार्थताया मतद्वयेऽप्यसिद्धिरिति चेन्न । लौकिकार्थबोधो द्विविधो, बाह्यो बौधश्चेति । तत्राद्यासत्त्वेऽपि द्वितीयसत्त्वेन दोषाभावात् । ननु काण्डे, कुड्ये इत्यादावेकादेशस्य पूर्वान्तत्वेन ग्रहणात्कार्यकालपक्षेऽपि प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वेन ह्रस्वो नपुंसके इति ह्रस्वापत्तिरिति चेन्न । क्लीबत्ववदर्थे विद्यमानस्याऽजन्तस्य इत्येव सामर्थ्यात्प्रातिपदिकत्वलाभे प्रातिपदिकस्येत्येतदसत्त्वप्रधानस्येत्यर्थकम् । तथा च सत्वभूताधिकरणशक्तिप्रधानकाण्डे इत्यादेर्ह्रस्वानापत्तेः । नच काण्डे तिष्ठत इत्यादौ नामार्थमात्रे प्रथमाविधानादसत्वार्थवाचकत्वापत्तिरिति वाच्यम् । प्रथमाया अपि अन्याभिहितकर्तृत्वादिशक्तिबोधकत्वेनाऽसत्वार्थकत्वविरहस्य सकलदर्शनारूढत्वात् स्पष्टं चेदं तिङ्समानाधिकरणे प्रथमेति वार्त्तिकव्याख्यानावसरे भाष्ये । नचोदवोढामिति भाष्योदाहरणाद्विकारकृतलक्ष्यभेदस्यानाश्रयणेन ( लक्ष्ये लक्षणस्ये ) तिन्यायेनात्र ह्रस्वाप्रवृत्त्या प्रातिपदिकग्रहणवैफल्यमेवेति वाच्यम् । प्रातिपदिकग्रहणस्य काण्डे इत्यादिप्रत्युदाहरणप्रदर्शनपरभाष्यप्रामाण्येन समानाङ्गघटितवर्णस्थानिकविकारकृतलक्ष्यभेदस्यैवानाश्रयणेनादोषात् । एतेनाऽततीत्यम् इति व्युत्पत्त्याऽत धातोरन्येभ्योऽपि दृश्यते इति वार्त्तिकेन डम्प्रत्यये कुलस्य अम् ज्ञातमिति समासे जाते कुला इत्यत्र (पर्जन्यवत् ) लक्षणप्रवृत्त्या ह्रस्वे कृते एकस्मिल्लँक्ष्ये सकृदेव प्रवर्तते

लक्षणमिति न्यायेन पुनर्ह्रस्वानापत्त्या ततः सोरमादेशऽयाद्त्त- येऽस्तोऽस्मीति सूत्रस्थतपरत्वस्य साफल्यात्तपरकरणं मुखसुखा- र्थमिति चिन्त्यमित्यपास्तम् । परेतु भाष्योदाहरणाद्विकारकृत- लक्ष्यभेदस्याऽनाश्रयणादित्यादिप्रश्नोत्तरवर्णनं प्रतारणमात्रमेव भाष्ये तदभावात् ॥ नचोदवोढामित्यादौ वृद्ध्यभावः कथमिति- वाच्यम् । ओदिति तपरकरणात् । अन्यथा ओस्येत्येव ब्रूयात्, वर्णग्रणं च न कर्तव्यमिति महल्लाघवमिति । ओ इति त्ववि- भक्तिको निर्देशो न लोपेतिवदिति प्राहुः ॥

अत्र तार्किकाः ॥ अर्थवत्त्वं वृत्तिमत्त्वम् । वृत्तिश्च, शक्ति- र्लक्षणा च, शक्तिश्चेश्वरेच्छा पदार्थान्तरम्वा । लक्षणा च शक्य- सम्बन्धः । तथा च प्रत्ययान्तपर्युदासो न कर्तव्यः । वृत्त्यभावा- देव तद्व्यावृत्तिसिद्धेः । कृत्तद्धितेति सम्पूर्णं सूत्रम्विध्यर्थम् । अर्थवद्ग्रहणानतुवृत्तेः शशशृङ्गमित्याद्यनर्थकसमासेऽपि संज्ञासि- द्धिरित्याहुः ।

अत्र शब्दतत्त्वविदः ॥ अर्थवत्त्वं वृत्तिमत्त्वम्, वृत्तिश्च नेश्वरेच्छा विनिगमनाविरहेण ज्ञानकृत्योरपि तदापत्त्या गौर- वापत्तेः । पदार्थान्तरत्वेऽपि तथात्वमेव लक्षणा च न शक्यस- म्बन्धरूपा गभीरायां नद्यामित्यादौ लक्षणानापत्तेः । तस्मात्—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।

इत्याद्यभियुक्तोक्त्या बोधकत्वं शक्तिः । एवं च गङ्गायां घो- ष इत्यादौ गङ्गापदस्यापि तीरबोधकत्वेन बोधकत्वरूपशक्तिस- त्त्वाल्लक्षणारूपवृत्त्यस्वीकारे लाघवम् । अर्थधीजनकज्ञानविष- यशब्दत्वमर्थवत्त्वं पर्यवसन्नम् । तादृशार्थवत्त्वं प्रत्ययान्ते वा-

क्येऽस्तीति तद्व्यावृत्त्यर्थं प्रत्ययान्तपर्युदासः । समासग्रहणं च नियमार्थं वाच्यम् । किञ्च तार्किकरीत्या समासग्रहणस्य नियमार्थत्वाभावेन मूलकेनोपदंशमित्यादौ (कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमि)ति परिभाषया कृदन्तत्वात्प्रातिपदिकत्वापत्तिः ।

ननु बोधकत्वशक्तिः स्वरूपसती कारणम् ज्ञाता वा । नाद्यः, अगृहीतशक्तिकस्यापि बोधापत्तेः । नान्त्यः, अन्योन्याश्रयापत्तेः । तथा हि, बोधोत्तरं शक्तिज्ञानं, शक्तिज्ञानोत्तरं बोध इति चेन्न । यथा सन्निकर्षादिसहितस्यैवेन्द्रियादेः कारणता तथा तात्पर्यग्रहसहितस्यैव घटादेः कारणता । एवं च गृहीतशक्तिकस्य तात्पर्यग्रहरूपसहकारिकारणाभावेन प्रथमपक्षे दोषाऽभावात् । द्वितीयपक्षेऽपि न बोधानन्तरं शक्तिज्ञानं येनान्योन्याश्रयः स्यात् किन्तु व्यवहारादिनेति दोषाभावात् । अन्यथेश्वरेच्छा पदार्थान्तरमेवेति मतेऽपि दोषस्तदवस्थः । तथा हि, बोधोत्तरमीश्वरेच्छाज्ञानं तदुत्तरं बोध इति बोधकत्वं शक्तिरित्यभिप्रायेणैकवाक्ये प्रत्ययान्ते बोधकत्वरूपशक्तिसत्त्वात्प्रातिपदिकसंज्ञाव्यावृत्त्यर्थं प्रत्ययान्तपर्युदासः । उत्तरसूत्रेऽर्थवद्ग्रहणमनुवर्त्य समासग्रहणस्य नियमार्थत्वमङ्गीकृतं भाष्यादिसकलग्रन्थकारैः । नचैवम्—

> एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
> मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्द्धरः ॥

इत्यादावर्थाभावेनार्थधीजनकज्ञानविषयशब्दत्वरूपार्थवत्त्वाभावात्सञ्ज्ञानापत्तिरिति वाच्यम् । शाब्दिकमते शब्दबो-

धेऽर्थसत्तायाः कारणत्वसत्त्वात् । अन्यथा नाहं बृहस्पतिरिति बोधनिश्चये सति त्वं बृहस्पतिरितिस्तावकवाक्यात्सुखम्, त्वं चाण्डाल इति निन्दावाक्याद्दुःखं च न स्यात् । परन्त्वस्मिन्मते नियमस्य परिसंख्यात्वेन स्वार्थहानिः, परार्थकल्पना, प्राप्तबाधश्चेति दोषत्रयसद्भावेन प्रत्ययपदस्यावृत्त्याश्रयणे च गौरवं स्पष्टम् । किञ्चोभयमतेऽपि रामादिपदे एकाक्षरकोषादिना प्रत्येकवर्णानामपि शक्तिग्रहादर्थवत्त्वेन प्रातिपदिकत्वापत्तिः । न च समुदायशक्तिरवयवशक्तेः प्रतिबन्धिकेति युक्तम् । श्वेतो गच्छति, वातः काकोदरो येनेत्यादि सभङ्गश्लेपस्य मण्डपं पश्येत्यादि यौगिकरूढेश्चोच्छेदापत्तिः । तदर्थं समुदायशक्तिः स्वशक्यतावच्छेदकानुपूर्वीभङ्गजनकावयवशक्तेः प्रतिबन्धिकेति निष्कर्षो वाच्यः । तथा च गौरवम् ।

ममत्वत्र प्रतिभाति । नात्र पूर्वोक्तवृत्ति र्युक्ता । किन्तु कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय इति शाब्दिकपरिभाषितवृत्तिमत्त्वमर्थवत्त्वं ग्राह्यम् । तथा च अर्थवत्प्रातिपदिकमित्येव न्यासः कार्यः । एवञ्च कृत्तद्धितेति सम्पूर्णं सूत्रमधातुरप्रत्ययग्रहणञ्च न कार्यमिति महल्लाघवम् । नच पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यत्र वृत्तित्वात्प्रातिपदिकसंज्ञापत्तिरिति वाच्यम् । प्राशस्त्यार्थकमतुपैकार्थीभावानन्तर्गतवृत्तेरेव तत्र ग्रहणात् । अन्यथा तथान्यासेऽपि तस्या दुर्वारत्वात् । पञ्चनावप्रिय इत्यत्र पञ्चनावेत्यस्य वृत्तिमत्त्वेनाऽर्थवत्त्वात् । नन्वेवं पचतकीत्यादौ तद्धितवृत्तिसद्भावात्संज्ञापत्तिरिति चेन्न । सत्यामपि संज्ञायां स्वाद्युत्पत्तौ स्वमो र्नपुंसकादिति लुकि रूपसिद्धेः । नचैवं तस्य नपुंसकत्वे पचतके इत्यादौ

ह्रस्वो नपुंसके इति ह्रस्वापत्तिरिति वाच्यम् । सप्तम्यधिकरणे चेत्यनेन तदभावस्य ज्ञापनात् । यद्वा सुपो धातुप्रातिपदिकयो-रित्यत्र प्रातिपदिकग्रहणादेव सिद्धे धातुग्रहणेन धात्वर्थविशेष्य-कवृत्तौ तदभावज्ञापनात् । न च पचतिकल्पमित्यादौ संज्ञाऽना-पत्तिरिति वाच्यम् । ज्ञापकस्य सजातीयत्वेन धात्वधिकारीय-प्रत्ययान्ते धात्वर्थविशेष्यकत्ववृत्तावेव तदभावस्य विवक्षित-त्वात् । कल्पप्प्रत्ययस्तु न धात्वधिकारीय इति न तत्राऽव्याप्तिः । न च भोक्तुं पाक इत्यादौ धात्वधिकारीयप्रत्ययोऽस्तीति वा-च्यम् । तत्रापि प्रत्ययार्थविशेष्यकत्वेन धात्वर्थविशेष्यकत्वा-भावात् । अव्ययत्वाच्च । युक्तं चैतादृशार्थवत्त्वम् । अन्यथा । संख्याया अतिशदन्तायाः कन्निति सूत्रभाष्ये न हि लोके केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेनेत्युक्तत्वात् । तुल्यन्यायेन प्रकृतेऽप्यर्थवत्त्वाभावः ।

धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते ।
कृत्तद्धितानामप्यर्थः केवलानामलौकिकः ॥
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ।

इति लौकिकार्थाभावादलौकिकार्थो ग्राह्यः स्यादिति क्लेशः । नन्वेवं वृत्तिरहितनिपातादीनां सञ्ज्ञा न स्यादिति चेन्न । व्यु-त्पत्तिपक्षे तत्रापि प्रकृतिप्रत्ययसत्त्वकल्पनासम्भवेन वृत्तिसत्त्वा-त् । एवञ्चाऽव्युत्पत्तिपक्षो न स्वीकार्यः । यदि स्वीक्रियेत तर्हि जातिव्यक्तिपक्षवल्लक्ष्यानुरोधात् व्यवस्थाऽऽश्रयणीया । ननु गवित्ययमाहेत्यादौ सर्वत्र व्युत्पत्तिपक्षस्वीकारेण वृत्तिसत्त्वात् प्रातिपदिकसंज्ञापत्तिरिति चेन्न । इतिपदसमभिव्याहारे वृत्ति-

प्रयुक्तकार्याभावबोधनात् । भाष्यकारैरनुक्तत्वादप्रमाणमिति न मन्तव्यम् ।

उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः,

इति न्यायेन लाघवमूलकस्यैव प्रमाणत्वादिति तत्त्वम् ।

पूर्वसूत्रेण सिद्धे समासग्रहणं (१)नियमार्थम् ;

---

(१) नियमार्थमिति ॥ न च

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते

इत्युक्तत्वादत्र वाक्ये समासे च प्राप्तत्वेन प्रातिपदिकत्वस्य पाक्षिकत्वाभावेन परिसंख्यार्थमित्यस्यैव वक्तुं युक्तत्वेन नियमार्थत्वकथनमयुक्तमिति चेन्न । अन्यनिवृत्तिरूपनियमसाधर्म्येणात्र शास्त्रे परिसंख्याया अपि नियमशब्देन व्यवहारात् । नियमत्वमत्र शास्त्रे यत्किंचिच्छास्त्रविशिष्टत्वं वै० स्वीयविधेयतावच्छेदकधर्म्मावच्छिन्नविधायकत्व स्वीयोद्देश्यतावच्छेदकव्याप्यधर्म्मावच्छिन्नोद्देश्यताकत्वोभयसम्बन्धेन समासग्रहणस्यार्थवच्छास्त्रविशिष्टत्वान्नियमत्वम् । वृद्धिरेचीत्यस्याद्गुणसूत्रवैशिष्ट्यवारणायाद्यः । ओमाङोश्चे त्यस्यैङिपररूपसूत्रवैशिष्ट्यवारणाय द्वितीयः सम्बन्धस्तस्य च द्विविधा प्रवृत्तिः निषेधमुखेन विधिमुखेन च आदौ स्वीयोद्देश्यतावच्छेदकव्यापको यः स्ववैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्म्मस्तद्धर्म्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्म्मावच्छिन्नातिरिक्तस्य स्वविधयाभावो बोध्यते यथा समासत्वव्यापकोऽर्थवत्सूत्रोद्देश्यतावच्छेदकीभूतधातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नार्थवत्त्वव्याप्यः पूर्वभागपदघटितसमुदायत्वरूपस्तदवच्छिन्नस्य समासत्वावच्छिन्नातिरिक्तस्य वाक्यस्य प्रातिपदिकत्वाभावो बोधनीयः समासग्रहणेन, परन्त्वस्मिन् पक्षे, वाक्ये प्राप्तस्य प्रातिपदिकत्वस्य बाधः, समासस्य प्रातिपदिकसंज्ञेति योऽयं स्वार्थस्तस्य त्यागः, वाक्यस्य नेतिपरार्थकल्पनेति त्रिदोषग्रस्तत्वेन विधिमुखेनैव प्रवृत्तिं नवीनाः स्वीकुर्वन्ति अत्र पक्षे स्वी-

(यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव तेन वाक्यस्य ने)ति । लिट्, धुगित्यादावधातुरिति पर्युदासे प्राप्ते औपगव इत्यादावप्रत्ययान्तमिति पर्युदासे च प्राप्ते कृत्तद्धि-तग्रहणस्यावश्यकत्वेऽपि समासग्रहणमनर्थकम् । राजन् ङस् पुरुष सु इत्यवस्थायामर्थवदिति सूत्रेणैव प्रातिपदिकसंज्ञायाः सि-द्धत्वादत आह—पूर्वसूत्रेणेति । नियमार्थमिति । स च रा-जन् ङस् पुरुष सु इतिसमुदायस्य प्रत्ययान्तत्वेन पूर्वसूत्राप्राप्तेः समासग्रहणस्यावश्यकत्वमिति वाच्यम् । (प्रत्ययग्रहणे यस्मा-त्स विहितस्तदादेस्तदन्तस्य ग्रहणमि)तिपरिभाषया राजन् ङस् इत्यस्य पुरुष सु इत्यस्य च प्रत्ययान्तत्वेऽपि राजन् ङस् पुरुष सु इतिसमुदायस्य प्रत्ययान्तत्वाभावात् पूर्वसूत्रेणैव सिद्धे समासग्रहणस्य नियमार्थत्वात् । नचैवमपि (उपसर्जनस्त्रीप्रत्यये तदादिनियमो न निषिद्ध) इत्यर्थकपरिभाषया राजकुमारीत्यादाव-न्तरङ्गत्वात्समासात्पूर्वं हल्ङ्यादिलोपे राजन् ङस् कुमारीतिसमु-दायस्य प्रत्ययान्तत्वेन पूर्वसूत्राप्राप्तेः समासग्रहणस्यावश्यकत्व-मिति वाच्यम् । (अन्तरङ्गानपि विधीन्वहिरङ्गो लुग्बाधते) इतिपरिभाषयाऽन्तरङ्गहल्ङ्यादिलोपस्य लुग्विषयेऽप्रवर्तनेन श्रूयमाण एव सुपि समासप्रवृत्तेः । तत्र च समुदायस्याऽप्रत्य-

---

योद्देश्यतावच्छेदकव्यापको व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेद-कव्याप्यो यो धर्म्मस्तद्धर्म्मावच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजक-शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति ! तथा च स्वी-योद्देश्यतावच्छेदकावच्छिन्ने शास्त्रान्तरेणाप्राप्तत्वात् स्वेन कार्य्यं वि-धीयते यथा प्रकृते धातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नार्थवति पूर्वभाग-पदघटितसमुदायत्वरूपं यत्समासत्वव्यापकमर्थवत्त्वव्याप्यन्तद्धर्म्माव-च्छिन्नातिरिक्तत्वेन संकोचे समासे वाक्येन च प्राप्ता संज्ञा समासे समासग्रहणेन विधीयत इति तत्त्वम् ।

यान्तत्वेन पूर्वसूत्रेणैव प्रतिपदिकसंज्ञायाया जाताया विभक्ति-लुक्यपि सत्त्वात् समासग्रहणस्य फलाभावात् । न च सूर्यं न पश्यतीत्यसूर्यम्पश्या राजदारा इत्यादौ नञः पश्यतीतिक्रियया-ऽन्वयेन सूर्यमित्यनेनाऽनन्वयात् । दश दाडिमानि षडपूपाः कुण्डमजाजिनमित्यादिवदनर्थकत्वेन पूर्वसूत्राप्राप्तेः समासग्रहण-स्यावश्यकत्वमिति वाच्यम् । असूर्यललाटयोरिति सूत्रेणाऽसू-र्यशब्दे उपपदे खश् विधीयते । उपोच्चारितं पदमुपपदम्, पद-न्तच्च सुप्तिङन्तमिति तत्सामर्थ्यादेव सञ्ज्ञायाः सिद्धत्वेन समा-सग्रहणस्यानर्थकत्वात् । न च

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्द्धरः ॥

इत्यादौ बन्ध्यासुतादीनामर्थकत्वेन पूर्वसूत्राप्राप्तेः समास-ग्रहणस्यावश्यकत्वमिति वाच्यम् । बन्ध्यासुतादीनां बौद्धे ब-न्ध्यासुतादौ शक्तिरिति पूर्वसूत्रेणैव प्रातिपदिकसंज्ञायाः सिद्ध-त्वात् । न च बौद्धपदार्थे प्रमाणाभाव इति वाच्यम् । (शब्द-ज्ञानानुपाती वस्तुशून्यो विकल्पः) इति पातञ्जलसूत्रानुरोधेन स्व-प्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वात् । स्वप्नादावनुभूतप-दार्थानां न कदाचिदपि सत्ता, प्रबोधोत्तरमनुपलम्भात् । यस्य व्याहारिकी सत्ता स पदार्थो घटादिरनुभूत एव । नचात्रापि संस्कारविषयपदार्थानामन्यथाख्यातिरूपमेव ज्ञानं किन्न स्या-दिति वाच्यम् ।

विप्रपृष्ठ्यादिचित्तस्थं न वहिष्ठं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ।

इति कूर्मपुराणीयस्मृते वासनारूपेणान्तःस्थितानामेव पदार्थानां विलक्षणान्तःकरणवृत्तिरभ्युपेयते । न तु तेषां पदार्थानां कदाचिदपि बहिः सद्भाव इति । एवञ्च तदर्थमपि समासग्रहणमनर्थकमिति वाच्यम् । समासग्रहणस्य व्यर्थत्वेन नियमार्थत्वात् । नियमाकारश्च यत्र संघाते पूर्वोभागः पदमित्यादिः । षड्विधेऽपि समासे पूर्वभागस्य पदत्वेन भवत्ययं सजातीयो नियमः । न च जन्मवानित्यादौ स्वादिष्विति सूत्रेण पूर्वभागस्य पदत्वेन तद्वारणं स्यात् । तद्धितग्रहणसामर्थ्याद्भविष्यतीति वक्तुमशक्यम् । यचि भमिति भसंज्ञाविषये भानत्र इत्यादौ तच्चारितार्थ्यादिति वाच्यम् । उत्तरस्तु प्रत्ययो नेत्यस्यापि तत्र निवेशात् । नचैवमपि राजेयानित्यादौ समुदायस्य प्रातिपदिकत्वं स्यादेत्र पूर्वभागस्य राजेत्यस्य पदत्वेऽपि उत्तरस्य प्रत्ययत्वेन नियमेन वारयितुमशक्यत्वादिति वाच्यम् । उत्तरस्तु प्रत्ययो नेत्यत्र तत्प्रकृतिकप्रत्ययो नेति व्याख्यानात् । पूर्वो भागः पदमिति किम् । बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात् । तत्फलं च बहुपटव इत्यत्रोपोत्तमोदात्तत्वसिद्धिः । प्रथमजसो लुकि । ( चितः सप्रकृतेर्बह्वकजर्थमिति ) वार्त्तिकेन चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थकेन चित्स्वरे कृते पुनर्जस उत्पत्तेः प्रातिपदिकसंज्ञायामसत्यान्तु जस एवोदात्तः स्यात् । नन्वत्र पक्षे गवित्ययमाहेत्यादौ समुदायस्य प्रातिपदिकत्वं स्यात् । गो इत्यादीनां सुबन्तत्वाभावेन पदत्वाऽभावादिति वाच्यम् । प्रकृतिप्रत्ययभावनापन्नसंघातस्य चेत्तर्हि समासस्यैवेति नियमाकारात् । नियमफलमाह—तेन वाक्यस्य नेति । दण्डेन गामाहर शुक्लामित्यादि वाक्यस्य न भवतीत्यर्थः । सत्यां हि प्रातिपदिकसंज्ञायां सुब्लुक्

स्यात्। नन्वेवमपि मूलकेनोपदंशं भुंक्ते, इत्यादिवाक्यस्य संज्ञा दुर्वारा, (कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमि)ति परिभाषया कारकपूर्वस्याऽपि ग्रहणादिति चेन्मैवम्। समासग्रहणकृतानियमेन परत्वाद्बाधादिति तत्त्वम्।

परे तु-ननु पूर्वो भागः पदमित्यत्र यदि पदशब्देन पदसंज्ञको न गृह्यते तदा वृषण्वसुरित्यत्र (वृषण्वस्वश्वयोरिति) वार्तिकेन भत्वात्तदसङ्ग्रहः। यदि पदशब्दे पदसंज्ञायोग्यस्य ग्रहणं तथापि भसंज्ञया पदसंज्ञायाः प्रकृते बाधात्तद्योग्यत्वमपि नेति स्वीकारे सर्वसमाससाजात्याभाव एव, यदि तेन पदसंज्ञाकारणीभूतप्रत्ययप्रकृतिपरत्वं गृह्यते तदा राज्ञः पुरुष इत्यादिवाक्यावयवपूर्वभागस्य विभक्त्यन्तस्योक्तप्रकृतित्वाभाव एव। ननु ङस्प्रकृतिप्रातिपदिकमादाय वाक्यसंग्रह इति वाक्यानां नियमेन व्यावृत्ति र्भविष्यतीति चेन्न। एवं सति पदशब्दस्य शक्त्यभावेन लक्षणाया आवश्यकत्वे जहत्स्वार्थालक्षणापेक्षयाऽजहत्स्वार्था लक्षणैवोचिता। किञ्च जन्मवानित्यादेः प्रातिपदिकत्वसिद्धये, उत्तरस्तु प्रत्ययो नेत्यपि निवेशनीयमिति महद्गौरवमिति चेन्न। स्वातन्त्र्येणापि प्रयोगार्हार्थवत्त्वमिति पदशब्देन ग्रहणात्। स्वातन्त्र्येण प्रयोगयोग्यत्वे सति यदर्थवदित्यर्थः। अत्र पूर्वशब्दोपादानात्परस्यापि तादृशस्यैवोपस्थितिरपि। स्वातन्त्र्येण प्रयोगयोग्यताविशिष्टार्थवत्त्वविशिष्टपूर्वोत्तरभागकसमुदायलाभाज्जन्मवानित्यादेः सङ्ग्रहः। पूर्वोत्तरपदयोः स्वातन्त्र्येण प्रयोगार्हत्वञ्च तत्तत्प्रयोगाभावेऽप्यर्थबोधजननाय प्रयुज्यमानत्वम्। न च स्तम्बेरमः, शकृत्करिरित्यादेः स्वातन्त्र्येण प्रयोगानर्हत्वान्नैतद्घटितरूपेण साजात्यविवक्षणं प्रयुक्तमिति वाच्यम्।

वेदव्यास इत्यत्रोपपदसमासे (विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप) इति वार्तिकेन वेदस्य लोपेऽपि व्यासेत्यस्य प्रयोगवत् स्तम्बेरम इत्यादावपि तथा सम्भवात् । उक्तनियमाभिप्रेतत्वादेवाऽङ्गसंज्ञासूत्रे भाष्ये । ( प्रत्ययग्रहणे यस्मादि )तिपरिभाषाफलनिरूपणप्रस्तावे देवदत्तो गार्ग्य इतिसमुदायस्य यञन्तत्वेन प्राप्तप्रातिपदिकत्वस्याभावः फलत्वेन प्रोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या तदसङ्गतिः स्पष्टैवेति वदन्ति ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येवेत्यादि । ननु ङ्याप्प्रातिपदिकादिति सूत्रे राम इत्यादौ स्वादिसिद्ध्यर्थं प्रातिपदिकग्रहणस्यावश्यकत्वेऽपि ङ्याब्ग्रहणमनर्थकम् । रमा गौरीत्यादौ ( प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि )तिपरिभाषया निर्वाहात् । परिभाषायां प्रमाणन्तु समानाधिकरणाधिकारे ( कुमारः श्रमणादिभिरि )तिसूत्रस्योपन्यसनम् । यदीयं परिभाषा न भवेत् तदा श्रमणादिगणे स्त्रीलिङ्गानामेव पाठात्तेषां कुमारशब्देन सामानाधिकरण्याभावात्तदधिकारे तत्पठनं निरर्थकं स्यात् । अस्याः प्रयोजनम्, अयस्कुम्भीत्यत्राऽतः कृकमीति सत्वम् । नन्वयस्कुम्भीत्यत्र प्रकृतिभागमादायाऽतः कृकमीत्यस्य प्रवृत्तिर्भविष्यतीति न परिभाषोपयोग इति चेन्न । यदीयं न भवेत्तदा कुम्भादिषूत्तरपदेषु विधीयमानमतः कृकमीति सत्वं कुम्भीशब्दे परे न स्यात् । ङ्यन्तस्योत्तरपदत्वेन कुम्भरूपोत्तरपदत्वाऽभावात् । नचातःकृकमीतिसूत्रे कुम्भश्च कुम्भी च कुम्भौ ( पुमान् स्त्रिया )तिसूत्रेणैकशेषे निर्वाहादियं परिभाषा निष्फलेति वाच्यम् । श्वश्रूरित्यादौ प्रत्ययान्तत्वेनाप्रातिपदिक-

त्वेऽपि स्त्राद्युत्पत्तेरेव फलत्वात् । कुमारीमाचष्टे कुमारयतीत्या-दौ णाविष्ठवदिति टिलोपस्य ग्रामि नयन्त्यहानीत्यादावाचार-क्विप्सिद्धेश्च फलत्वादिति चेन्न ॥

ङ्याप्ग्रहणस्य ङ्यन्तादाबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्या बृभ्यां प्राङ् माभूदित्यर्थकत्वात् । तेन एनिका आर्यिका च सिद्ध्यति । तथा हि सामिवचने, सामिपर्याये उप-पदे क्तान्तान्न कुत् । सामि कृतम् । अर्द्धकृतम् । सा-मिशब्दोऽर्धपर्यायः, इत्यर्थकेन ज्ञापयिष्यमाणोऽत्यन्तस्त्रार्थि-कः कन् , एनाऽऽर्यशब्दाभ्यां ङ्यापौ बाधते । ततश्चै-तिका, आर्यिकेत्यवे रूपं स्यात् । ( प्रत्ययस्थादि )ति-सूत्रेण नित्यमित्त्वबाधनात् । ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्ता-त्कनि एनिकेत्यपि सिद्ध्यति । वर्णादनुदात्तात्तोपधादित्यस्य वै-कल्पिकत्वात् । आबन्तात्तु कनि, ( उदीचामातः स्थाने ) इ-तीत्वविकल्पादार्यिका, आर्यकेति रूपद्वयं सिद्ध्यति । ननु अ-न्तरङ्गत्वात्कनि कृतेऽपि कन्प्रकृत्यार्यशब्दान्मध्ये टाबुत्पत्त्योदी-चामातः स्थाने इतिसूत्रप्रवृत्त्या विकल्पेनेत्वं सिध्यतीति चेन्न । आर्यशब्दात्कनि समुदायोत्तरं टापैव लिङ्गसम्बन्धबोधनसम्भ-वादेकाच्द्विर्वचन न्यायेन समुदायादेव टापि कनः पूर्वं टाब-भावे आतः स्थानिकत्वाभावाद्विकल्पासिद्धेः । न च दृष्टा मा-ला, दृष्टा गौरित्यादौ समुदायस्यानुपसर्जनस्त्रीप्रत्यये तदादि-नियमाभावेन ङ्याबन्तत्वात्ततः सुबुत्पत्त्यर्थं ङ्याब्ग्रहणमस्तु । ( लिङ्गविशिष्ट )परिभाषया तु न निर्वाहः । लिङ्गबोधकप्रत्यय-रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययवि-शिष्टतयातिदेशेन ङ्याब्राहितस्य दृष्टमाला इत्यादेः समुदा-

यस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेः। एवञ्च आम् दृष्टमाला देवदत्तेत्यादौ, एकपदान्तरत्वेन, आम एकान्तरमामन्त्रितमनन्तिके, इतिसूत्रेण, आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तमित्यर्थकेन एकपदान्तरितत्वप्रयुक्तस्य निघातनिषेधस्यापत्तिरिति वाच्यम्। ङ्याब्ग्रहणस्योक्तनियमार्थत्वप्रतिपादनपरभाष्यप्रामाण्येन पृथगर्थोपस्थापकविभक्त्यन्तानवयवकङ्याबन्तस्यैव ग्रहणेनाऽक्षतेः। प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाभावाच्च। गौणी मुख्या वा। उत्तरा संख्या पूर्वां संख्यां बाधते। इत्यइउणितिसूत्रीयभाष्यसिद्धान्तादुत्तरसंख्यायाः पूर्वसंख्याबाधकत्वात्। नचैवम्, आम्, अतिसुन्दरपुरुषेत्यत्र तस्य प्रवृत्तिर्न स्यादिति वाच्यम्। एकान्तरमिति पदे स्वरितत्वकल्पनेनाधिकं कार्यमिति स्वरितेनाधिकार इति सूत्रार्थात्प्रकृतैकपदेन समासात्मकैकपदस्यापि ग्रहणमित्यर्थेनादोषात्।

ननु ङ्याप्प्रातिपदिकादितिसूत्रस्थं ङ्याब्ग्रहणं स्त्रीप्रत्ययान्ताच्चेत् ङ्याबन्तादेवेति नियमार्थमस्त्विति चेन्न। युवतिः श्वश्रूरित्याद्यसंग्रहापत्तेः। नन्वेवं सति बहुगोमत्केति न सिद्ध्येत्। बहुगोमच्छब्दात्कपः प्राक्, उगितश्चेति ङीपि कृते बहुगोमतिकेति स्यादिति चेन्न। अकृते एव समासेऽलौकिकप्रक्रियावाक्ये, उत्तरपदस्यावयवीभूतः समासान्तः प्रवर्तत इति वक्ष्यमाणत्वात्। स च विभक्तेः पुरस्तादित्येके। परस्तादिति पक्षे तु तद्धितान्तत्वात्सुब्लुकि पुनः सुपि च कृते समास इति सिद्धान्तः। वस्तुतस्तु ङ्याब्ग्रहणं न कर्तव्यम्। घकालतनेष्वित्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति निष्क-

षः । तथा च सुपः प्रागेव ङ्याप्पौ प्रवर्तेते । स्वार्थद्रव्यलिङ्ग-संख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादिति तत्त्वम् ।

अतो गुणे, इति प्राप्ते परत्वात्पूर्वसवर्णदीर्घः । अतो गुणे, इति हि (पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्त-रानि)तिन्यायेनाकः सवर्णे इत्यस्यैवापवादो न तु प्रथमयोरित्य-स्यापि, रामाः । अयम्भावः, रामशब्दाज्जसि कृते जकारस्येत्सं-ज्ञालोपाभ्यामपहारेऽकः सवर्णे इति दीर्घं बाधित्वाऽतो गुणे इतिसूत्रेण पररूपे प्राप्ते परत्वात्प्रथमयोः पूर्वसवर्ण इति शास्त्रेण पूर्वसवर्णः । न च यथाऽतो गुणे इति शास्त्रमकः सवर्णे इतिसू-त्रं बाधते तथा प्रथमयोः पूर्वसवर्ण इति शास्त्रमपि बाधेतेति वा-च्यम् । पुरस्तादपवादन्यायेनाकः सवर्णे दीर्घ इत्यस्यैव बा-धकत्वात् । अयमभिप्रायः । अत्र शास्त्रे पक्षद्वयस्याश्रयणम् । कुत्रचिल्लक्ष्यानुरोधाद्बाध्यसामान्यचिन्तापक्षस्य कुत्रचिद्बाध्य-विशेषचिन्तापक्षस्य, तत्र बाध्यविशेषचिन्तापक्षे (पुरस्तादपवादा अनन्तरान् विधीन्बाधन्ते नोत्तरानि )तिन्यायः । पूर्वपठिता येऽपवादास्तेऽनन्तरान् विधीन्बाधन्ते, उत्तरान् विधीन्न बाधन्ते इति तदर्थः । मया किं बाध्यमित्याकांक्षायां स्वानन्तरबाधेना-ऽऽकांक्षानिवृत्तिर्हि तद्बीजम् । पुरस्तादपवादन्यायाश्रयणादेव ( नादिची )तिसूत्रे इज्ग्रहणं चरितार्थम् । तद्धि रामाः रामा-निसादौ निषेधाभावाय पररूपेण पूर्वसवर्णदीर्घबाधेऽज्ग्रहणानु वृत्त्यैव सिद्धे रिज्ग्रहणवैयर्थ्यं स्पष्टमेव । ननु अकः सवर्णे दीर्घ इत्यस्याप्युत्तरत्वेनाऽतो गुणे, इत्यनेन तद्बाधोऽपि न स्यादिति चेन्न । बाध्यापेक्षयोत्तरात्वेति तदर्थत्वादिति तत्त्वम् ।

सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह हे

कतरत् कुलेति । एङ् ह्रस्वात्सम्बुद्धेरिति सूत्रे सम्बुद्धेः प्रत्ययत्वेन (प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य ग्रहणमि) तिपरिभाषया यस्मात्स विहितस्तदादीत्यंशस्योपस्थितिः । स चार्थवशाद्विभक्तेर्विपरिणाम इति वचनात्पञ्चम्यन्तेन विपरिणम्यते, तथा चैङन्ताद्ध्रस्वान्तात्तदादिरूपाङ्गाद्धल्लुप्यते सम्बुद्धेरवयवश्चेदिति सूत्रार्थः । ननु अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते स चैङ्ह्रस्वाभ्यां परश्चेदित्यर्थ एवोचितः । येन यदाक्षिप्यते तत्तत्रैवान्वेती )तिन्यायेन सम्बुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्ध्यैवान्यस्योचितत्वादिति चेन्न । हे कतरदित्यत्र कतरशब्दात्सम्बोधने प्रथमैकवचने अदड्डतरादिभ्य इतिसूत्रेण सोरदडादेशे टेरिति सूत्रेण रेफोत्तराकारस्य लोपे (एकदेशविकृत) न्यायेन रेफान्तस्याङ्गत्वेन ततः परा या सम्बुद्धिरदिति तदवयवस्य हकारस्य ह्रस्वात्परीभूतस्य लोपापत्तेः । ननु एङन्ताद्ध्रस्वान्तादङ्गात्परा या सम्बुद्धिस्तदवयवो हल् लुप्यते, इत्यर्थस्वीकारे हे कतरादित्यत्र न दोषः । टेर्लोपेनाङ्गस्य ह्रस्वान्तत्वाभावादत आह—हे कुलेति । अत्रैङ्ह्रस्वादिति सूत्रं बाधित्वा परत्वात्पूर्वरूपे ह्रस्वाङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात् । नचैङ्ह्रस्वादितिलोपास्यापरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वरूपात्प्राक्प्रवृत्तौ न दोष इति वाच्यम् । अमि पूर्व इत्यस्य प्रतिपदोक्तत्वेन लोपात्पूर्वं प्रवृत्तेः । नच पूर्वरूपे कृतेऽपि परादिवद्भावेन लोपप्रवृत्तौ न दोष इति वाच्यम् । अङ्गस्य ह्रस्वान्तत्वाभावात् । नच पुर्वान्तवद्भावेन ह्रस्वान्तत्वमिति वाच्यम् । ततः सम्बुद्धेः परत्वाभावात् । नचोभयत आश्रयणेनेष्टसिद्धिरिति वाच्यम् । उभयत आश्रयणेऽन्तादिवद्भावविरहात् । ननु स्थानिवद्भावेन तादृशव्यवहारेणेष्टसिद्धिरिति चेन्न । ह्रस्वत्वस्य

वर्णवृत्तितया विशेषणतयाऽश्रवणात्स्थानिवद्भावाप्रवृत्तेः । नच पूर्वान्तवद्भावेन ह्रस्वाङ्गत्वमेकदेशविकृतमनन्यवदिति न्यायेन मकारस्य सम्बुद्धित्वं तस्यैव च व्यपदेशिवद्भावेन तदवयवत्वमिति रीत्या लोपस्य सुलभत्वमिति चेन्न । अर्द्धविकारे एकदेशविकृतमिति न्यायाप्रवृत्तेः । ननु स्थानिवद्भावेन तदवयवत्वमिति लोपो भविष्यतीति वाच्यम् । मकारस्यादेशत्वाभावात्स्थानिवद्भावाप्रवृत्तेः । नच सिद्धान्तेऽपि सम्बुद्धित्वस्य सकारमात्रवृत्तित्वेन स्थानिभूताल्धर्मत्वेनामः सम्बुद्धित्वाभावात्कथं मकारस्य सम्बुद्ध्यवयवत्वमिति वाच्यम् । सुप्संज्ञायाः सु इतिसमुदाये सत्त्वेन तदुपस्थाप्ये जायमानाया एकवचनसंज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसंज्ञायामित्संज्ञकोकारविशेषस्यैवोद्देश्यत्वेन स्थानिवद्भावस्य सुलभत्वात् ।

परे तु—एङ्ह्रस्वनिष्ठप्रकारतानिरूपितविशेष्यताशालिनः सम्बुद्ध्याक्षिप्तस्याङ्गस्य हल्निष्ठविशेष्यतानिरूपितप्रकारताशालित्वेन हेकतरदिंसादौ नातिव्याप्तिः । न वा कुलेत्यादावव्याप्तिश्चेति । एवञ्चोभयोरुपादानं सार्थकमिति । यत्तु सम्बुद्ध्याक्षिप्तस्येति सम्बुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यारभ्य हलित्यनुवर्तते इत्यन्तं यदुक्तं तन्न । भाष्येऽथवेत्यादिनाऽङ्गस्येत्यस्य न प्रयोजनानि प्रत्यय इत्यनेनापि सिद्धानीत्युक्तम् । न तु तत्रैवाग्रहस्तस्य दोषदुष्टत्वात् । तथा हि । अङ्गस्येत्यधिकृत्य कानि पुनरङ्गाधिकारस्य प्रयोजनानि, निरुतं दुरुतमित्यदौ हल इति दीर्घोऽभावः । क्रिमिणां पश्य । पामनां पश्येत्यदौ नामीति दीर्घो न । तथा दधि सनोतीत्यादौ सनि दीर्घो न । ब्राह्मणभिस्सेत्यादावैस् न । प्राकरोदित्यादावुपस-

र्गात्पूर्वमडाटौ न । युष्मत्सामेत्यादावाकं न । पच हि तात्वं प-चतु तात्वामित्यादौ तातङ् न । कुमारी आमित्याहेत्यादौ नुण् न । प्राण इत्यादौ ङ्मुण् न । कुमारीं कायतीति कुमारीकः, इ-त्यादौ केऽण इति ह्रस्वो न । दधि यानमित्यादौ यि दीर्घो न अब्भक्ष इत्यादौ तत्वं नेत्यादिप्रयोजनान्युक्त्वा नैतद्धि प्रयोजन-मित्युक्त्वाऽथवा प्रत्यय इति प्रकृत्याङ्गकार्यमध्ये भाष्ये । यदि प्रत्यय इति प्रकृत्याऽङ्गकार्यमर्धीषे प्राकरोदित्यादौ, उपसर्गात्पू-र्वमडाटौ प्राप्नुतः । सिद्धं तु प्रत्ययग्रहणे यस्मात्स विहितस्त-दादितदन्तविज्ञानात् इत्युक्तम् । कैयटे तु भितत्वे अयं परिहा-रो नोपपद्यते वर्णग्रहणात् अत एवाऽव्यापकत्वमस्य परिहार-स्येति मत्वाऽऽह—अथ वेति । अतो भिस ऐसित्यादिषु विभक्ति-कत्वाद्भिसादीनां प्रत्ययेन सम्बन्धो दुरुपपादः । हल इति स-म्प्रसारणं दीर्घत्वं च निरुतं दुरुतमित्यादौ न परिहृतं भवतीत्य-नेन पक्षद्वयेऽपि दोषा भिन्ना निर्दुष्टाऽङ्गाधिकार एव श्रेयानिति सूचितम् । अत एव सर्वैरपि ग्रन्थकारैरङ्गाधिकारेणैव प्रयोज-नानि अन्यथासाधयितुमशक्यानीत्येवं परं भाष्यं व्याख्यात-ञ्च तु अङ्गाधिकारप्रत्याख्यानपरं येन भवदुक्तं सङ्गच्छते स्वात-न्त्र्ये आग्रहश्चेत्स्वीक्रीयताम् ( अर्थवद्ग्रहण ) ( प्रत्ययग्रह-ण )परिभाषाभ्यां निर्वाह इति मध्यमः पक्षः । न च भितत्वे दोष इति वाच्यम् । ( न वर्णग्रहणेष्वि )ति परिभाषाज्ञापकेना-र्थवद्ग्रहणपरिभाषाऽनित्यत्वस्यैव ज्ञापनात् । तथा च ( न वर्ण-ग्रहणेष्वि )तिपरिभाषास्वीकारे लाघवम् । एवञ्च यथाश्रुतमू-लव्याख्यानसम्भवे भङ्क्त्वा व्याख्यानमनुचितमिति दिक् । यदप्यनुमानं न सम्भवतीत्युक्तम् । तदपि न अनुमानेऽनुमेया-तिरिक्तफलवत्त्वनियमाभावात् । अस्तु वाऽङ्गस्योपनीतभानमा-

क्षेपः। अङ्गस्य प्रत्ययव्याप्यत्वात्क्वचित्प्रत्ययेनाङ्गाक्षेपः। क्वचिदङ्गेन प्रत्ययाक्षेपः। यदपि क्विश्चेत्यादि भानाभाव इत्यन्तम्। तदपि न प्रत्ययस्योत्पत्तावङ्गापेक्षत्वाभावादिति वदन्ति ॥

एङ्ग्रहणं किम्। हे हरे हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात्परत्वं नास्तीति। अयमभिप्रायः। हे हरे, हे विष्णो इत्यादौ ह्रस्वस्य गुण इति शास्त्रस्याङ्गसंज्ञासापेक्षत्वेन बहिरङ्गत्वात्पूर्वं ह्रस्वान्तत्वादेव सिद्धेरेङ्ह्रस्वादिति सूत्रे एङ्ग्रहणन्न कर्तव्यमिति प्रश्नः। नच संज्ञासापेक्षबहिरङ्गत्वस्य भाष्यानारूढत्वेन कथं बहिरङ्गत्वमिति वाच्यम्। तस्य तथात्वेपि परनित्यत्वापेक्षत्वेन बहिरङ्गत्वात्। न च हे से इत्याद्यर्थमेङ्ग्रहणमावश्यकमिति वाच्यम्। (नान्तः पादमव्यपरे) इतिसूत्रस्थेन नचैङः पदान्तात्परो रुरस्तीति भाष्येण विरोधात्सावीदृशानामनभिधात्। सौ परे पदान्तत्वं नास्तीति तु न शङ्कनीयम्। स्वादिष्वसर्वनामस्थाने इति सूत्रे स्वादिष्विति योगविभागेन तस्य साधितत्वात्। हे हरे इति। न च (ह्रस्वस्य गुण) इति सूत्रेण सम्बुद्धिनिमित्तके गुणे कृते उपजीव्यविरोधस्यायुक्तत्वमूलक (सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये) ति परिभाषया (एङ्ह्रस्वादि)तिसूत्रेण सम्बुद्धिलोपो न स्यादिति वाच्यम्। गुणात्सम्बुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात् सन्निपातपरिभाषाया अप्रवृत्तेः। परत्वादिति। असमबलस्य परत्वं न नियामकमित्यरुचेराह–नित्यत्वाच्चेति। न च गुणस्य नित्यत्वेऽपि परनिमित्तानपेक्षत्वेन लोपस्यान्तरङ्गत्वात् पूर्वं प्रवृत्तिरिति वाच्यम्। (ह्रस्वस्य गुण) इतिशास्त्रस्यानवकाशत्वेनापवादत्वाल्लोपात्पूर्वं प्रवृत्तेः। न च

सम्बुद्धिगुणस्य नानवकाशत्वं, त्रपो इत्यादौ लुका बाधेनैङ्-ह्रस्वात्सम्बुद्धेरित्यस्याप्राप्तौ ( ह्रस्वस्य गुण ) इति शास्त्रस्य चारितार्थ्यादिति वाच्यम् । लुका बाधेऽपि प्रकृतसूत्रोद्देश्यतावच्छेदकसत्त्वेन गुणस्य प्रकृतसूत्राऽप्राप्तियोग्यविषये चारितार्थ्येनापवादत्वस्याक्षतत्वात् ।

अमि पूर्व इति । अत्र पूर्वग्रहणमदृष्टार्थमेव । (आयनेयीनीयिय ) इतिसूत्राद् ( झोऽन्त इत्यत्र प्रत्ययपदानुवृत्तिवत्प्रथमयोरितिसूत्रात्पूर्वपदमात्रस्यैकदेशानुवृत्त्या वाक्यार्थसिद्धेः । न च ( सन्नियोगशिष्ट )परिभाषया सवर्णपदसहितस्यानुवृत्तौ राममित्यादावान्तरतम्यात् द्विमात्रतापत्तिरिति वाच्यम् । पूर्वसवर्णदीर्घेण सिद्धेऽमीत्यस्य व्यर्थतापत्तेः । न च कुमारीमित्यत्र प्लुतसम्पादनेन चरितार्थत्वेन सामर्थ्याभावे पूर्वग्रहणं प्लुतव्यावृत्त्यर्थं सत्यम् । अथ वाऽमीत्येकादेशोत्तरं स्नुपि चेत्यनेन प्राप्तदीर्घव्यावृत्त्यर्थमिति वाच्यम् । प्रगृह्यमित्यादिनिर्देशेनोभयोरभावबोधनात् । एतेन पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणं तु राममित्यादौ द्विमात्रवारणायेत्युक्तिरपास्ता । अत्राज्ग्रहणानुवृत्तिरपि माऽस्तु । नच विशिष्टस्य पूर्वरूपत्वापत्तिरिति वाच्यम् । अचि नित्यमित्यादिनिर्देशैस्तद्वारणसम्भवात् । अत एव काशिकायामचीति नानुवर्तितमित्यलम् ।

पदव्यवायेऽपीति निषेधं बाधितुमाङ्ग्रहणं नुम्ग्रहणमनुस्वारोपलक्षणार्थं तच्चाकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशस्योक्तत्वादिति । नन्वडिति सूत्रे आङ्ग्रहणमनर्थकमित्याशङ्कां निराकुर्वन्नाह—पदव्यवायेऽपीति निषेधं बाधितुमिति । तेन पर्याणद्धमित्यत्रोपसर्गादसमासेऽपि णो-

४

पदेशस्येतिसूत्रेण णत्वं सिध्यतीति भावः । ननु इवि प्रीणने अस्माद्धातोः प्रपूर्वकाल्ल्युटि युवोरनाकाविति अनादेशे प्रेन्वन-मित्यत्र ( कृत्यचः )उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यादित्यस्य नियमार्थकेन, ( इजादेः सनुमः ) सनुमश्चेद्भवति इजादे र्हलन्ताद्विहितो यः कृत् तत्स्थ-स्यैवेत्यनेन णत्वं स्यादत आह–नुम्ग्रहणमनुस्वारोपलक्षणार्थ-मिति । नुम्स्थानिकस्य स्वाभाविकस्य चानुस्वारमात्रस्योप-लाक्षणार्थं नुम्ग्रहणमित्यर्थः । तेन बृहि वृद्धौ इति धातोरिदि-त्वान्नुम् तस्यानुस्वारः । तृंह हिंसायाम् । स्वाभाविकोऽत्रानु-स्वारः । बृंहणं तृंहणमुभयत्रापि णत्वं सिद्धम् । ननु स्वाभा-विकोऽनुस्वारो दुर्लभः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेत् षाट्टवर्गस्तवर्गजः ॥

इत्यभियुक्तोक्तेरिति चेन्न । स्वाभाविकस्येत्यस्य नुम्भिन्नस्था-निकस्येत्यर्थेनादोषात् । नन्वेत्रमपि स्वाभाविकत्वमनुपपन्नमिति-चेन्न । पाणिनिनोच्चारितो योऽनुस्वारस्तस्य ग्रहणमित्यर्थे ता-त्पर्यात् । यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदितिविधौ नक्षत्रदर्श-नस्य कालविशेषोपलक्षणत्वात्सत्यपि दिवानक्षत्रदर्शने वा-ङ्न विसृज्यते उपलक्षितस्य कालविशेषस्या ऽभावात् । रात्रौ त्वसत्यपि नक्षत्रदर्शने विसृज्यते तस्य सत्त्वात्तथेहापि बोध्यम् ।

नन्वेवं नुम्ग्रहणं व्यर्थमनुस्वारस्याट्त्वेनैव सङ्ग्रहादिति चेत्सत्यमित्याह–तच्चाकर्तुं शक्यमिति । अयोगवाहानामिति । न विद्यते योगः सम्बंधोऽक्षरसमाम्नाये येषां ते अयोगाः आचा-र्येणानुपदिष्टत्वादुपदिष्टैरकारादिभिरगृहीतत्वाच्चेत्यर्थः । वाह-

यन्ति प्रयोगं निर्वाहयन्ति ते वाहाः अयोगाश्च ते वाहाश्चेत्य-योगवाहाः ते चाऽनुस्वारविसर्गजिव्हामूलीयोपध्मानीययमा इति तत्त्वम् ॥

भवामि भविष्यामीत्यादौ विकरणविशिष्टस्या-ङ्गसंज्ञार्थं तदादिग्रहणमिति । ननु ( यस्मात्प्रत्ययविधि-स्तदादिप्रत्ययेऽङ्गमि )ति सूत्रे तदादिग्रहणं न कर्तव्यम् । तदभावेऽपि यः प्रत्ययो यस्मात्क्रियते तस्मिन्परे तदङ्गमित्यर्थे राम इत्यादौ निर्वाहादिति चेन्न । भवामीत्यत्र भू सत्तायामित्य-स्माल्लटि कृते तस्य स्थाने मिपि कृते ( कर्तरि शबि )ति सूत्रे-ण शपि (सार्वधातुकार्द्धधातुकयोरि)तिगुणे शब्विशिष्टस्याङ्गत्वा-भावादतो दीर्घो यञीति दीर्घानापत्तेः । नचातो दीर्घो यञीति सूत्रारम्भसामर्थ्यादेव भवामीत्यादौ दीर्घे सिद्धे तदादिग्रहण-मनर्थकमिति वाच्यम् । वय गतौ, पय गतौ आभ्यां यङ्लुकि वावामि वावाव पापामि पापाव इत्यादौ चरितार्थत्वात् । नच तदादिग्रहणे कृतेऽपि प्रकृतिमात्रस्य भूधातोरङ्गत्वाऽनापत्तौ भवामीत्यादौ सार्वधातुकार्द्धधातुकयोरिति सूत्रेण गुणो न स्या-दिति वाच्यम् । ( व्यपदेशिवदेकस्मिन्नि ) ति परिभाषया के-वलस्य भूधातोरपि तदादित्वेनाङ्गत्वस्य सुलभत्वात् ।

विधिरिति किम् । स्त्री इयतीति । ननु यस्मात्प्रत्य-यविधिस्तदादि प्रत्ययेऽङ्गमिति सूत्रे विधिग्रहणं न कर्तव्यम् । तदभावेऽपि यस्मात्प्रत्ययः परो भवति तदादि तस्मिन्प्रत्यये परेऽङ्गमित्यर्थेन रामे भविष्यामीत्यादावङ्गसंज्ञायाः सिद्धत्वादि-ति चेन्न । इदम्शब्दात्किमिदंभ्यां वोघः, आभ्यां वतुप् तदव-यववकारस्य घ इत्यर्थकेन वतुपि तदवयववकारस्य घादेशे

आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति सूत्रेण घस्थाने इयादेशे कृते इदंकिमोरीश्कीति सूत्रेणेशि कृते ( यस्येति च ) तिसूत्रेणेकारलोपे ( उगितश्च ) तिसूत्रेण ङीपि कृते इयतीति रूपं निष्पन्नम् । तस्मिन्परे स्त्रीशब्दस्य ( स्त्रियाः ) इति सूत्रेणेयङापत्तेः । न च विधिग्रहणाभावेऽपि स्त्री इयतीत्यत्र न दोषः, यस्येति चेति लोपस्य ( स्त्रियाः ) इति सूत्रेणेयङि कर्तव्ये असिद्धवदत्राभादित्यनेनासिद्धत्वादिति वाच्यम् । समानाश्रयत्वाभावेनासिद्धवदत्रेति सूत्राप्राप्तेः । तत्र हि समानाश्रयत्वम्, असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायाऽन्यूनानतिरिक्ताश्रयकत्वम् । अस्ति च ( यस्येतिचे )तिलोपापेक्षया ( स्त्रिया ) इति सूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षा । न च विधिग्रहणसत्त्वेऽपि स्त्री इयतीत्यत्रेयङादेशो दुर्वारः स्त्रीशब्दस्य सुनिरूपिताङ्गत्वस्य सत्त्वादिति वाच्यम् । प्रत्यासत्त्याजादिप्रत्ययनिरूपिताङ्गत्वग्रहणेनादोषात् । ननु समानाश्रयत्वम् असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तान्यूनानतिरिक्तकार्यनिमित्तान्यतरकत्वमित्येवास्तु, सूत्रे विधिग्रहणमनर्थकमिति चेन्न । (१)भनक्तीत्यदावतो दीर्घो यञीति दीर्घापत्तेः । न च सिद्धान्तेऽपि मिदचोऽन्त्यात्पर इति विधानमाश्रित्याङ्गत्वं दुर्वारमिति वाच्यम् ।

---

(१) भनक्तीत्यादीति । अत्रायमाकूतं प्रत्ययेऽङ्गमित्येव सिद्धे यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गमिति करणाद् यद्वधिकपरत्वावच्छिन्नविधेयताश्रयो यः प्रत्ययः तस्मिन् परतस्तदादि अङ्गसंज्ञं स्यादिति स्त्री इयतीत्यादौ स्त्रीशब्दावधिकाव्यवहितपरत्वावच्छिन्न विधयताश्रयत्वस्य चतुष्प्यभावात्स्त्रीशब्दस्याङ्गसंज्ञा न प्राप्नोतीति विधिग्रहणं किमर्थमिति प्रश्नः। भनक्तीत्यादौ मिदचोऽन्त्यात्पर इति परिभाषया भकारोत्तरावधिकपरत्वावच्छिन्नविधेयताश्रयत्वस्य श्नमि सत्वेनाकारस्याङ्गसंज्ञायामतो दीर्घो यञीतिदीर्घापत्तिरिति ॥

तेनाचः परत्वस्याज्ञातस्य ज्ञापनेऽपि प्रत्ययस्यापूर्वबोधनासम्भवात् । नचातो दीर्घो यञीतिसूत्रे भूसुवोस्तिङीति सूत्रात्तिङीत्यनुवर्त्य यञादौ सार्वधातुके तिङि अतो दीर्घ इत्यर्थस्वीकाराद् भवन्तीत्यत्र न दोष इति वाच्यम् । स्त्री अम्पश्यतीत्यत्र स्त्रीशब्दस्य स्त्रियाः इतिसूत्रेणेयङापत्तेः । अशब्दादम् प्रत्यये कृतेऽपि पूर्वं इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात् । विधिग्रहणसत्त्वे तु नायं दोषः, अम्प्रत्ययस्याऽकाराद्विहितत्वेऽपि स्त्रीशब्दाद्विधानाऽभावात् ॥

प्रत्यये किम् । प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत् । ननु यस्मात्प्रत्ययविधिरिति सूत्रे प्रत्यये इत्याकारकं पदं न कर्तव्यम् । तदभावेऽपि यस्मात्प्रत्ययो विधीयते तदाद्यङ्गसंज्ञमित्यर्थे तदादिरूपं किमदित्यपेक्षायां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति चेन्न । प्रत्ययस्याऽतत्वेऽपि प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वाऽङ्गसंज्ञावारणार्थत्वेन तदावश्यकत्वात् । यदि प्रत्ययविशिष्टस्याङ्गसंज्ञा स्यात्तदा को दोष इति तच्छृणु, उरदत्वस्य प्रत्ययपरत्वलाभानापत्तौ परनिमित्तत्वाऽभावेनाऽचःपरस्मिन्पूर्वविधाविति सूत्राप्राप्तावकारे सम्प्रसारणत्वाभावेन ( न सम्प्रसारणे ) इति सूत्रस्याप्राप्ते वकारस्य ( ग्रहिज्ये ) ति सूत्रेण सम्प्रसारणप्राप्ते वव्रश्चेत्यस्याऽसिद्धिरूप इति । ततोऽप्यधिकस्याङ्गसंज्ञायां देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरसुप्प्रत्ययं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमडाद्यापत्तिः । न च ( प्रत्यासत्ति ) न्यायेन लुङादिनिरूपिताङ्गस्य ग्रहणान्न दोष इति वाच्यम् । अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति तत्त्वम् ।

परे तु–अत्र प्रत्यये प्रकृत्यादिरङ्गमित्येव वक्तुमुचितम्। प्रत्यये परतः सन्निधानात्प्रत्ययनिरूपितप्रकृत्यादेरेवाङ्गत्वमित्यनेन स्त्री इयती भवामि भविष्यामीत्यादौ नासिद्धिः। आद्ये स्त्री इत्यस्य सुबूनिरूपिताङ्गत्वेऽपि स्त्रीशब्दस्येयतीनिरूपिताङ्गत्वाभावेनेयङ्प्राप्त्यभावात्। अयं निरूप्यनिरूपकभावो यथान्यासेऽप्यवश्यमाश्रयणीयः, अन्यथा सुब्निरूपिताङ्गत्वेन तत्रेयङ् दुर्वारः स्यात्। नच भाष्ये योगविभागेन साधितायाः ( प्रत्ययग्रण ) परिभाषयाऽसिद्धिप्रसङ्ग इति वाच्यम्। एवन्न्यासेऽपि सान्निधानात् यत्तच्छब्दावध्याहृत्य मयापि यत्प्रकृतेः स विहितस्तदादेस्तदन्तस्य च ग्रहणमिति वक्तुं शक्यत्वात्।

यत्तु प्रत्ययविशिष्टस्येति प्रतीकमुपादाय राजपुरुष इत्यादौ न लुमतेतिनिषेधात् पूर्वपदे पदत्वाभावेन नलोपानापत्तिरित्युक्तम्। तथा ततोऽप्यधिकस्येति प्रतीकमुपादाय देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमप्यडापत्तिः। अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति चोक्तम्।

तन्न सम्यक्। सुबन्तस्य पदसंज्ञाम्प्रति कार्यित्वेन ( नहि कार्यी निमित्तत्वेनाश्रीयते ) इतिपरिभाषया पदसंज्ञारूपकार्यम्प्रति सुपो निमित्तत्वाभावेन न लुमतेत्यस्याऽप्रवृत्तेः। नच प्रत्ययर्थेनिना रिरिषतीत्यत्रेव कार्यानुभवत एव तथेति वाच्यम्। प्रकृतेऽपि प्रत्ययलक्षणेन विशिष्टस्य कार्याऽनुभवस्याविशिष्टत्वात्।

यद्वा प्रत्ययग्रहणाभावेऽपि विशिष्टस्य नाङ्गसंज्ञा, फलाभावात्। नचोरादित्यादौ प्रत्ययस्यानाक्षेपे परनिमित्तत्वाभावेन

स्थानिवद्भावाप्रवृत्तौ ( न सम्प्रसारणे ) इत्यस्याप्रवृत्त्या वकारस्य सम्प्रसारणसिद्धिरेव फलमिति वाच्यम् । व्याप्येनाऽभ्यासेन व्यापकस्य प्रत्ययपरत्वस्याक्षेपसम्भवात् । नह्यव्यवाहितस्यैव तेनाक्षेपे प्रमाणफलं वाऽस्तीति, किञ्चैकवचनं सम्बुद्धिरिति सूत्रे ( सुः सम्बुद्धिरि ) तिन्यासे ( प्रत्ययग्रहण ) परिभाषया विशिष्टस्याङ्गसंज्ञामाश्रित्य सम्बुद्धावङ्गस्य गुण इतिव्यवहाराञ्च तदन्तस्य संज्ञेति भवद्भीत्याऽत्रापि ( जुसि च ) त्यादौ तथा व्यवहाराङ्गसंज्ञाविशिष्टे नेति मयापि वक्तुं शक्यत्वात् । ततोऽप्यधिकस्येत्याद्युक्तमपि सन्न । यथान्यासेऽपि सप्तम्यन्तप्रत्ययग्रहणाभावेऽपि अङ्गसंज्ञाया यस्माल्लुङादिविधिस्तदङ्गमिति तद्भावभावितमात्रेण प्रत्ययनिमित्तत्वातन्निमित्ताङ्गत्वमादायैवोपस्थितत्वेनाडादिव्यवस्थोपपत्तेः । एवं च यथान्यासेऽपि प्रत्यय इति मास्तु । उरदित्यादावभ्यासग्रहणेनापि प्रत्ययाक्षेपसम्भवेन वव्रश्चेत्यादिप्रयोगसिद्धेः । एवं च प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति पक्षेऽपि दोषाऽभाव इति प्राहुः ।

रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् ( सुपि च ) तिदीर्घः ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) तिपरिभाषा तु नेह प्रवर्तते ( कष्टाय क्रमणे ) इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनादिति । सन्निपतनं सान्निपातः संश्लेषः स लक्षणं निमित्तं यस्य स सन्निपातलक्षणः तं सन्निपातं विहन्तीति तद्विघातः ( कर्मण्यण ) ( हो हन्तेरि )ति कुत्वम् । ( हनस्तोऽचिण्णलोरि )ति तत्त्वम् । उपजीव्यकविधिः स्वोपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः । न च यञादिसापेक्षसुपिचे )तिदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात

इति वाच्यम् । आरोपिताऽसिद्धत्वेपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः । नच कष्टायेत्यस्य ( अकृत्सार्वधातुकयोरि )ति दीर्घेणोपपत्तेः, कथमनित्यत्वज्ञापकत्वमिति वाच्यम् । तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः । ननु सुपि चेतिदीर्घापेक्षयाऽकृत्सार्वधातुकयोरित्यस्य रत्वनिमित्तेनैव दीर्घो वक्तुं योग्य इति चेन्न । एककार्यसाधकत्वेन विरोधाभावादिति तत्त्वम् ।

बहुवचनेऽकिम् । रामः रामस्येति । ननु ( बहुवचने झल्येदि )ति सूत्रे बहुवचनग्रहणं न कर्तव्यमिति चेन्न । तदभावे राम इति प्रथमैकवचने एत्वापत्तेः । न च यदि प्रथमैकवचने एत्वं स्यात्तदा एङ्ह्रस्वादिति सूत्रे ह्रस्वग्रहणमनर्थकं स्यादिति तत्सामर्थ्यात्प्रथमैकवचने एत्वं न भविष्यतीति वाच्यम् । हे लक्ष्मीत्यादौ ह्रस्वग्रहणस्य चारितार्थ्येन सामर्थ्याऽभावात् । नचैङ्सम्बुद्धेरितिन्यासेनैव हे लक्ष्मीत्यादौ निर्वाहे ह्रस्वग्रहणमनर्थकमेवेति वाच्यम् । हे बधु इत्यादौ ह्रस्वग्रहणस्य चारितार्थ्येन सामर्थ्याभावात् । न च तथापि इदुदेङ्सम्बुद्धेरिति न्यासेन सिद्धे ह्रस्वग्रहणमनर्थकमिति वाच्यम् । सञ्ज्ञाशब्दस्यार्द्धमात्रिकत्वेन ह्रस्वग्रहणमपहाय इदुदेङ्सम्बुद्धेरिति न्यासे लाघवाऽभावात् राम इत्यत्र बहुवचनग्रहणस्य न फलम् । प्रत्ययः परश्चेत्यादिनिर्देशैः क्वचित् त्रिपाद्यामपि सिद्धत्वं भवतीति कल्पते अन्यथा रुत्वस्याऽसिद्धत्वाद्रेफान्ते पदत्वाऽभावाद्विसर्गो न स्यात् । एवञ्च राम स् इत्यवस्थायामेत्वरुत्वयोः प्राप्तौ परत्वाद्रुत्वे ( सकृद्गति )न्यायेनैत्वस्याऽप्रवृत्तिः स्यादित्यरुचेराह रामस्येति । अत्र टाङसीति स्यादेशेऽदन्तसन्निपातस्योपजीव्यत्वेन सन्निपातपरिभाषयैवैत्वव्यावृत्तौ बहुवचनग्रहणस्य फलं रामाभ्यामिति

बोध्यम् ।

झलि किम् । रामाणामिति । ननु ( बहुवचने झल्येदि )ति सूत्रे बहुवचनग्रहणं न कर्तव्यमिति चेन्न । रामा इत्यादौ रामशब्दाज्जसि कृते एत्वापत्तेः । नच बहुवचने झल्येदिति सूत्रे ( अतो वृद्धि लुँकि हली )तिसूत्राद्धलीत्यनुवर्त्य हलादौ बहुवचने सुप्येत्वमित्यर्थाद्रामा इत्यादौ न दोष इति वाच्यम् । रामाणामित्यादावामि नुटि च कृते हलादिबहुवचनसुप्परत्वेनैत्वापत्तेः । नच रामाणामित्यादौ सन्निपातपरिभाषयैत्वाभावसिद्धौ बहुवचनग्रहणमनर्थकमिति वाच्यम् । झल्ग्रहणस्यैत्वे कर्तव्ये सन्निपातपरिभाषया अप्रवृत्तिज्ञापनार्थत्वात् । तेन सर्वेषामित्यादावेत्वसिद्धिरिति भावः । नचात्र बहुवचने झलीगिति सूत्रमस्त्विति वाच्यम् । ज्ञानशब्दस्यौसि पर इगागमे कृते आद्गुण इति गुणस्येकोऽचीति नुमश्च प्राप्तौ वार्णादाङ्गस्य कार्यस्य बलवत्त्वाद्गुणात्पूर्वं नुमि सति ज्ञानयोरिति(१)रूपासिद्धेः । नच ( बहुवचने झलीडि )ति न्यासोऽस्तु एवञ्च ज्ञानयोरित्यत्र न नुमः

---

(१) न च वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नानुयोगिताकपर्य्याप्तिकस्थानिताकत्वरूपसमानस्थानिताकत्वस्य इकोचि विभक्तावित्यत्राभावेन वार्णपरिभाषाया अप्रवृत्तौ अन्तरङ्गत्वाद् गुणे इगन्तत्वाभावान्नुमोऽप्राप्त्या ज्ञानयोरित्यादौ न दोष इति वाच्यम्। ज्ञानशब्दस्य अशब्देन समासे तस्मादाचारक्विवन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वत्वे परमशब्देन समासे परमज्ञान ओसितिस्थिते इकि जाते इयङि निरुक्तस्थानिकत्वस्य सत्त्वेनेयङादेशापत्तेः। नच एरनेकाच इति यणि निरुक्तं परमज्ञानयोरितिरूपं सिध्यतीति वाच्यम । सपूर्वपदस्य चेद् गतिकारकपूर्वपदस्यैवेतिनियमपरेण गतिकारकपूर्वस्यैवेष्यते इतिवार्त्तिकेन यणोऽप्राप्तेरितिदिक् ।

प्राप्तिः । विभक्तौ यदङ्गं तस्येगन्तत्वाभावादिति वाच्यम् । बहुवचने झलीति सप्तम्या अचारितार्थ्येन झलादौ बहुवचने सुप्यत इतीत्यर्थापत्तावनिष्टापत्तेः । यदि च यत्तदेतेभ्य इति निर्देशेन सप्तमीनिर्दिष्टपदानां षष्ठ्यन्तत्वमत इत्यस्य च षष्ठ्यन्तस्य पञ्चम्यन्तत्वकल्पनं सप्तमीनिर्देशश्च ( यस्मिन्विधिरि )ति परिभाषाप्रवृत्तिसम्पादकत्वेन चरितार्थ इत्युच्यते तदाऽधिकज्ञानगौरवं स्पष्टमेव । किञ्च इदम्शब्दादु भ्यासि त्यदाद्यत्वे पररूपत्वे च कृते हलि लोपस्येडागमस्य च प्राप्तौ नित्यत्वादिट् स्यात् एवञ्च हलादिपरत्वाऽभावाल्लोपानापत्तिः । लोपविधानं तु द्विवचने चरितार्थमिति दिक् ।

केचिदत्रेत्थं व्याकुर्वन्ति । बहुवचने किम् । रामः रामस्येत्यत्र( ससजुषोरुरि )ति रुत्वे ( खरवसानयोरि )ति विसर्गे कृते तस्य झलत्वस्य स्थानिवद्भावेन सुप्त्वस्य च सत्त्वेन बहुवचनग्रहणाऽभाव एत्वप्रवृत्ते निर्बाधत्वेन रुत्वविसर्गयोरसिद्धत्वात्पूर्वमेवैत्वप्रवृत्त्या च दोषसत्त्वेन रामस्येति प्रत्युदाहरणं स्वाभिलषितसङ्ख्यापूरणार्थमेव प्रतिभाति । नच राम इत्यत्र झलत्वप्रयोजकसकारस्य रुत्वविसर्गविधायकाविधेयरुत्वादिभिर्विनाशोन्मुखत्वेन ( अकृतव्यूह ) परिभाषयैत्वस्याऽप्रवृत्तौ राम इत्यत्र नास्ति दूषणमिति वाच्यम् । पूर्वत्रासिद्धमिति विसर्गादीनामसिद्धत्वेनैतद्दृष्ट्या सकारस्यैव सम्भवेन विनाशोन्मुखत्वाऽभावात् । नच झल्येदिति सूत्रेण सौ परतो यद्येत्वं स्यात्तदा हे राम इत्यादावनेनैत्वे सिद्धे एङ्ग्रहणेनैव हे हर इत्यादावपि सुलोपे च सिद्धे ह्रस्वग्रहणमनर्थकं स्यात् तत्सामर्थ्यादेकवचनविभक्तावेत्वाप्राप्तौ रामस्येतिप्रत्युदाहरणं सम्यगेवेति वाच्यम् । हे गौरीत्यादावम्बार्थनद्योरितिह्रस्वे कृते एङन्तत्वाभावेनैङ्सम्बुद्धेरि-

तिसूत्राप्रवृत्तौ तत्र सम्बुद्धिलोपार्थं ह्रस्वस्य चरितार्थत्वेन तत्सामर्थ्याऽभावात्। न च हे गौरी हे लक्ष्मीत्यादाविकारान्ता-दुकारान्तादेङन्ताच्च परो हल् लुप्यते सम्बुद्धेश्चेत्यर्थकमिदुदङ्सम्बुद्धेरिति न्यासेन सुलोपसिद्धौ ह्रस्वग्रहणसामर्थ्यस्य सुस्थत्वमिति वाच्यम्। हे ज्ञानेत्यत्र सुस्थानेऽतोऽमित्यनेनाऽमादेशे झलादिसुप्परत्वाभावेन झल्येदित्येत्वाप्रवृत्तौ सम्बुद्धिलोपार्थं ह्रस्वग्रहणस्य चरितार्थत्वादिति चेन्न। इदुदेङ्सम्बुद्धेरित्यस्याग्रेऽप इति न्यासः कर्तव्यः तत्र च अ इति लुप्तपञ्चम्यन्तम्। अकारान्तान्मो लुप्यते सम्बुद्धेश्चेत्यर्थकेनोक्तन्यासेन हे ज्ञानेत्यत्र लोपे सिद्धे ह्रस्वग्रहणसामर्थ्यस्य सुस्थत्वात्। एवं च ह्रस्वग्रहणसामर्थ्याद्राम इत्यादौ दोषाऽभावेन रामस्येति प्रत्युदाहरणं सम्यगेवेति स्थितम्।

नच टाङसिङसामिनात्स्या इति सूत्रस्थाने टाङसिभ्यिनादस्या इति न्यासेन ङसः स्थानेऽस्यादेशे झल्परत्वाभावेन झल्येदित्येत्वाप्रवृत्तावतो इति पररूपे कृते रामस्येति लक्ष्यसिद्धेर्निष्प्रत्युहत्वेन बहुवचनग्रहणं निरर्थकमेवेति वाच्यम्। ङसः स्थानेऽस्यादेशाङ्गीकारे इदम्शब्दान्ङसि (त्यदादीनाम) इत्यत्वे कृते ङसः स्थानेऽस्यादेशे कृते हलादिविभक्तिपरत्वाभावेन हलि लोप इति सूत्राऽप्रवृत्तावनाप्यक इति सामान्यशास्त्रेणऽनादेशेऽस्येति रूपासिद्धिप्रसङ्गात्। नच (हलि लोप) इति सूत्रस्थाने (आपि लोपोऽकः) इति न्यासः कर्तव्यः। आपि विभक्तौ परतोऽककारस्येदम इदो लोपे इति हि तदर्थः। (अनाऽप्यक) इत्यस्य स्थाने अनसीति न्यासः कर्तव्यः। अनसीति तत्र पर्युदासः स्वीकार्यः। अककारस्येदम्शब्दस्य स्थानेऽनादेशः स्यादस्सदृशे प्रत्यये परत इतितदर्थः। अस्भिन्नोऽस्सदृशश्चाऽजादिप्रत्य-

यो गृह्यते । तथा च, अजादिविभक्तौ परतोऽनादेशो हलादौ-परत इद्भागस्य लोप, इति ङस्स्थानेऽस्यादेशेऽसादिप्रत्यय-यस्यैव सत्त्वेन अनसीत्यनादेशाऽप्रवृत्तेः । आपि लोपोऽक इत्य-नेनेद्भागस्य लोपेऽतो गुण इतिपररूपत्वे चाऽस्येति रूपसि-द्धेरप्रत्यूहत्वेन ङसः स्थानेऽस्यादेशेऽपि रामस्येत्यत्र दूषणाभावेन बहुवचनग्रहणं निष्प्रयोजनकमिति वाच्यम् । रामस्येत्यस्य रामा-भ्यामित्यस्योपलक्षणत्वेन बहुवचनग्रहणाभावे सुपि चेति सूत्रं बाधित्वा झल्येदित्येत्वप्रवृत्तौ रामभ्यामित्यनिष्टं प्रसज्येत तन्नि-वृत्त्यर्थं बहुवचनग्रहणस्यावश्यकत्वात् । नच ( सुपिचे )तिसू-त्रस्थाने ङेभ्याम्परतोऽतोऽङ्गस्य दीर्घः स्यादित्यर्थकेन ङेभ्या-मीति न्यासेन रामाय रामाभ्यामित्यादौ ङे भ्यां परतो विशेष-दीर्घविधायकत्वेनैतद्विषये झल्येदित्येत्वाप्रवृत्त्यनुमानेन दीर्घ एव स्यादिति बहुवचनग्रहणमनर्थकमिति वाच्यम् । ( सुपि चे ) ति-सूत्राऽभावे ( घेर्ङिती )त्यत्र सुपीत्यननुवृत्तौ ङिति परतो गु-णः स्यादित्यर्थेन पट्वीत्यत्र गुणः स्यात्तदर्थं सुपि चेति सूत्रस्या-वश्यकत्वम् । इत्थं च सुपि चेति सूत्रं बाधित्वा झल्येदित्येत्वं रा-माभ्यामित्यत्र यथा न स्यात् । तदर्थं बहुवचनग्रहणस्यावश्यक-त्वात् । नच पट्वीत्यत्र ( ओर्गुण ) इत्यनेन गुणाऽभावार्थं स्त्रि-यामिति सूत्रात्प्राक्पाठं परित्यज्य यूनस्तिरित्यतः प्राक् तद्धि-ताऽधिकारः सूत्रकारेण कृतः । यदि पट्वीत्यत्र गुणः सूत्रकृदभी-ष्टः स्यात्तदा प्राचां ष्फस्तद्धित इत्यादिषु तद्धितपदाकरणेन प्र-हल्लाघवमनुसृत्य स्त्रियामित्यतः प्राक् तद्धिताधिकारः ( ओ-र्गुण ) इत्यनेनैव गुणो भवेत् । एवं च तद्धिताधिकारस्य स्त्रि-यामित्यतः प्रागकरणेन पट्वीत्यत्र गुणाभावस्य सूत्रकृतैव बो-धितत्वेन ( सुपिचे ) तिसूत्राभावे पट्वीत्यत्र दोषाऽभावेन बहु-

वचनग्रहणमनर्थकमिति वाच्यम् । स्त्रियामित्यतः प्राक् तद्धिताधिकारे ङीप्प्रत्ययस्यापि तद्धितसंज्ञायां ( लशक्वतद्धित ) इति ङीपः ङकारस्येत्संज्ञाऽनापत्तेः । न च ( चुटू ) इत्यस्य स्थाने चुटूङ इतिन्यासेन ङीप्प्रत्ययङकारस्येत्संज्ञासिद्धिरिति वाच्यम् । ङीबादेस्तद्धितसंज्ञायां शुनीत्यादावतद्धित इति पर्युदासेन ( श्वयुवमघोनामतद्धित ) इति सम्प्रसारणाऽनापत्तेः । न च ( श्वयुवे ) ति सूत्रस्याग्रे ङ्यां चेति न्यासेन सम्प्रसारणस्य सिद्धिरिति वाच्यम् । दण्डिनीत्यादौ ( ऋन्नेभ्य ) इति ङीपि ( नस्तद्धित ) इति टिलोपापत्तेः । न च नस्तद्धित इत्यस्य स्थाने ( नस्तद्धितेऽङ्यामि )तिन्यासेन ङीभिन्नतद्धिते टिलोपविधानेन दण्डिनीत्यादौ दोषाऽभावात् । इत्थं च बहुवचनग्रहणमदृष्टार्थमेवेति स्थितमिति ।

परेतु—एङ्ह्रस्वादित्यत्र ह्रस्वग्रहणसामर्थ्यवर्णनेन इदुदेङ्सम्बुद्धेरिति सूत्रभञ्जनेन तदग्रेऽम् इति न्यासकरणने राम इत्यत्र दूषणोद्धारः कृतः । टाङसीत्यत्राऽस्येतिकरणेन ( हलिलोप ) इतिसूत्रस्थाने आपि लोपोऽक इति न्यासकरणेन अनाप्यक इत्यत्रानसीतिन्यासकरणेन रामस्येत्यत्र दूषणोद्धारश्च कृतः । इति कुक्कविकृतिवन्मूलभञ्जकाः सैषा महतो बंशस्तम्भाल्लट्वापकृष्यते इति भाष्यकारहास्यास्पदा अतीव मान्या इति वदन्ति । इत्थं च राम इत्यत्र न चैङन्तात्परो रुरस्तीति भाष्यप्रामाण्येनाऽकृतव्यूहपरिभाषया दोषाभावेन रामस्येत्यत्रैत्वनिवृत्त्यर्थं बहुवचनग्रहणं कर्मव्यमिति स्थितम् । नचैङन्तात्परो रुरस्तीति भाष्यात्पूर्वत्राऽसिद्धमित्यनेनैतद्दृष्ट्या सकारस्यैव तत्र सत्त्वेन निमित्तविनाशाऽभावेनोक्तपरिभाषाया अप्र-

वृत्तेः । उक्तभाष्यप्रामाण्येन पूर्वत्राऽसिद्धमित्यस्याप्यप्रवृत्तिस्वीकाराच्चेत्यलम् ।

झलि किम् । रामाणाम् इति प्रत्युदाहरन्ति । अत्रेत्थं प्रष्टव्यम् । सूत्रे झलीतिपदाऽभावे कृते नुट्येत्वं स्यादाहोस्विदकृते नुटि । न च ( ह्रस्वनद्याप ) इति सूत्रेण पूर्वं नुटि कृते तत एत्वं स्यादित्येतदर्थं झल्ग्रहणमिति वाच्यम् । पूर्वं नुटि सति नामीति दीर्घेऽदन्तत्वाभावेनैत्वस्याप्राप्तौ झल्ग्रहणस्य निष्प्रयोजनत्वापत्तेः । अन्यथा समाभ्यो विश्वपाभ्य इत्यादौ सिद्धान्तेऽप्येत्वापत्तेश्च । नच परत्वान्नामीति दीर्घं बाधित्वा पूर्वमेत्वं स्यात्तन्निवृत्त्यर्थं झल्ग्रहणमावश्यमिति वाच्यम् । कृताऽकृतप्रसङ्गित्वेन नामीत्यस्यैव पूर्वं प्रवृत्तेः । नचैत्वे कृते फलाभावान्नामीतिदीर्घस्याऽप्रवृत्तौ कृताकृतप्रसङ्गित्वरूपस्य नित्यत्वस्याऽभावेन परत्वादेत्वं स्यात्तन्निवृत्त्यर्थं झल्ग्रहणमिति वाच्यम् । एत्वे कृतेऽपि पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायेन नामीति दीर्घस्य प्रवृत्तौ कृताकृतप्रसङ्गित्वस्य सत्त्वात् । अथाकृते नुटि बहुवचन एदित्यनेनैत्वं प्राप्तं तन्निवर्त्तकं झल्ग्रहणमिति वाच्यम् । एत्वे कृते ह्रस्वान्तत्वाऽभावेन ह्रस्वनद्याप इति नुटोऽप्राप्तौ ह्रस्वग्रहणवैयर्थ्यापत्तेः । नच ह्रस्वग्रहणस्य हरीणां भानूनामित्यादाविगन्ते नुड्विधानेन चरितार्थत्वाद्वैयर्थ्यं वक्तुमशक्यमिति वाच्यम् । तदर्थं इक् नद्यापो नुडित्येव वक्तुं शक्यत्वात्, इगन्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडिति व्याख्यातुं शक्यत्वाच्च । नन्विक् नद्याप इति न्यासे प्रत्याहारे तद्वाच्यवाच्ये निरूढलक्षणास्वीकारेण वातप्रम्यामित्यादावपि नुट् स्यादितीग्ग्रहणं न कर्तव्यमिति चेन्न । लक्षणाया निराकृतत्वात् । तत्र बीजाऽभा-

त्वात् । इग्ग्रहणात्पृथङ्नदीग्रहणेन तस्याः कर्तुमशक्यत्वाच्च । इत्थश्च ( ह्रस्वनद्याप ) इत्यत्र ह्रस्वग्रहणसामर्थ्यादकृते नुड्व्यंत्वस्य प्राप्तिरेव नास्तीति झल्ग्रहणमदृष्टार्थमेवेति स्थितम् ।

अत्र केचित् । ननु ह्रस्वनद्यापो नुडिति योगं विभज्य अङ्गात्परस्यामो नुडिति नुड्विधिं कृत्वा नद्याप इत्यनेन दीर्घान्तांचेन्नद्याप एवेति नियमेन वातप्रम्यादौ दोषाऽभावेन हलन्तेष्वश्चेत्षड्चतुर्थ्य एवेति नियमेन हलन्तेषु दोषाऽभावेन च ह्रस्वग्रहणस्य प्रत्याख्यानात्तत्सामर्थ्यस्य वक्तुमशक्यत्वेनाऽकृते नुड्व्यंत्वं मा भूदिति झल्ग्रहणं कर्तव्यमिति चेन्न । सम्भवन्त्यां विधिसूत्रेणेष्टसिद्धौ नियमेन व्याख्यानस्याऽन्याय्यत्वात् । योगविभागं कृत्वा नियमस्य सुतरामन्याय्यत्वात् । स्त्रीलिङ्गानां चेन्नद्याप एवेति नियमस्यापि सम्भवेन नदीत्वाप्त्वयो र्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च मतीनामित्यादौ नुडनापत्तेश्च ? न च मदुक्तनियमस्वीकारे ह्रस्वग्रहणं कर्तव्यं भवतीति लाघवानुरोधेन स्वीकर्तव्य इति वाच्यम् । नियमप्रयुक्तदोषान्स्वीकृत्य ह्रस्वग्रहणप्रत्याख्यानापेक्षया ह्रस्वग्रहणसामर्थ्येनाकृते नुड्व्यंत्वस्याप्रवृत्तौ झल्ग्रहणं न कर्तव्यमिति लाघवस्यैवानन्दजनकत्वात् । ननु झल्ग्रहणप्रत्याख्यानापेक्षया ह्रस्वस्य मात्राद्वयाधिक्येन ह्रस्वग्रहणप्रत्याख्याने लाघवमिति चेन्न । झल्ग्रहणप्रत्याख्याने एवातिलाघवादिति वदन्ति ।

एके तु—नद्याप इत्यस्य स्त्रीलिङ्गानां चेन्नद्याप एवेति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयोर्ह्रस्वेऽपि दृष्टतया त्वदुक्तनियमे दृढतरप्रमाणाऽभावेन च मतीनामित्यादौ नुडनापत्तेरित्याद्युक्तिं सहन्ते । ह्रस्वेऽपि आप्त्वस्यैव, अस्त्रीलिङ्गेऽप्यति

खट्व इत्यादौ तद्दर्शनेन कुमारीमिच्छन् कुमारीत्यादौ (प्रथमलिङ्गग्रहणं चे' त्यनेन नदीत्वदर्शनेनोभयोस्तुल्यत्वात्। न च तत्र गौणमिति वाच्यम्। आप्त्वेऽपि गौणत्वाऽविशेषात्। तथा च विनिगमनाविरहादस्तूभयविधो नियमः। ननु तथापि मतीनामित्यादौ दोषस्तदवस्थ एवेति चेन्न। इकारप्रश्लेषेण तत्सिद्धेः। वस्तुतस्तु (नह्यनिष्टार्था शास्त्रप्रवृत्तिर्भवितुमर्हती)तिभाष्यालक्ष्यदर्शनाच्च दीर्घविषय एव नियमो भविष्यतीति तत्त्वम्॥

सुपि किम्। पचध्वम्। अत्र सूत्रे सुपीतिपदाभावे पचध्वमित्यत्रैत्वस्याऽऽपादनं मूले कृतं तन्न रम्यम्। बहुवचने झल्येदिति न्यासेन सकारभकारादिविभक्तावेत्वं स्यादित्यर्थकेन पचध्वमित्यत्र दोषाभावात्। न च क्रियासमभिहारे लोटलोटौ हिस्वावित्यनेन बहुवचनस्थाने स्वे कृते तस्मिन्परतः पचस्व इत्यत्रैत्वापत्तिरिति वाच्यम्। आदिसाहचर्येण सादिबहुवचनस्यापि सुप्सम्बन्धिन एव ग्रहणात्। न च सुट्तिथोरित्यत्रैकारोच्चारणेन शास्त्राबोधिताऽजव्यवहितहल्समुदायस्याऽसाधुत्वबोधनाद्बहुवचने झल्येदिति न्यासस्यासाधुत्वमिति वाच्यम्। स्कोः स्तोः ष्ट्वोरित्यादिनिर्देशैः स्वकपोलकल्पनाबोध्यस्याऽर्थस्याऽकिञ्चित्करत्वात्॥

जश्त्वमिति। जश्त्वं बाधित्वा (वावसाने) इति चर्त्वं प्रवर्तत इत्यर्थः। नन्वेवं व्याख्यानेन प्रकृतग्रन्थयोजनेऽपि रत्नमुडित्यादावान्तरतम्यात्पकारस्य चर्त्वेन पकार एव प्राप्नोति नटकारोऽल्पप्राणतया प्रयत्नभेदात्। अतस्तदादिशब्दे दकारस्य स्थाने (अकृतकारि खल्वपि शास्त्रमग्निवदि)ति न्यायेन फलाऽभावेन जश्त्वाऽप्रवृत्तौ तत्र चर्त्वस्य चारिताथ्र्यादपवाद-

त्वमेव नेति रामादित्यादावुभयोः प्राप्तावसिद्धत्वाच्चर्त्वात्प्राक् जश्त्वमेव व्याख्यातव्यमिति चेन्मैवम् । फलाऽभावेऽपि ( पर्जन्यवल्लक्षणप्रवृत्तिरि )तिन्यायेन शास्त्रप्रवृत्ते र्बहुशो दृष्टत्वेन ( येन नाऽप्राप्ति )न्यायेन चर्त्वस्य जश्त्वाऽपवादतयाऽसिद्धत्वस्याऽप्राप्तेः । रत्नमुडित्यस्य सिद्धिस्तु ( जक्षित्यादयः षडि )त्यादिनिर्देशेन षकारस्य स्थाने जश्त्वात्पूर्वं चर्त्वशास्त्राऽप्रवृत्तिकल्पनेन भविष्यतीति भावः । परे तु—जश्त्वे कृतेऽवसाने चर्त्वमित्यर्थो न करणीयः । ( येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः ) इतिन्यायेनाऽवसाने चर्त्वस्य जश्त्वाऽपवादत्वात् किन्तु चर्त्वाभावपक्षे जश्त्वमिति योजनीयमित्याहुः ॥

द्वित्वे रूपचतुष्टयमिति । पूर्वत्राऽसिद्धीयमद्वित्वे इतिवचनात् चर्त्वोत्तरं द्वित्वं बोध्यम् । ( द्वित्वे परसवर्णत्वं सिद्धंवक्तव्यमि )तिवार्त्तिकाद्वर्णद्वित्वे एतदप्रवृत्तिरिति चेन्मैवम् । वाक्क् वागितिभाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृत्तेः स्वीकारात् । द्वित्वे परसवर्णमिति वार्त्तिकं तु पूर्वत्राऽसिद्धीयमिति वचनस्यैवाऽव्युत्पत्याऽनुवाद इति बोध्यमिति तत्त्वम् ॥

रामस्य । सस्य द्वित्वपक्षे इति । अनचि चेत्यनेन वैकल्पिकद्वित्व इत्यर्थः । नन्वत्र सकारस्य स्थाने ( खरि च )तिस्थानतः प्रयत्नतश्च तुल्यस्तकारः प्राप्नोतीति भ्रान्तस्य शङ्कायामाह—आन्तरतम्यादिति । (स्थानेऽन्तरतम)इति सूत्रे तमब्ग्रहणे सदृशेनैवादेशेन भाव्यमित्युभयोरन्तरतमः सकार एव स्यादित्याशयः ॥

अत एव सः सीति तादेश आरभ्यत इति । अयमभावः, यदि खरि चेत्यनेन सकारस्य स्थाने तकारादेशः

स्यात्तदा वत्स्यतीत्यादौ ( सः स्यार्द्धधातुक ) इत्यनेन तकार-विधानमनर्थकं स्यात्। ननु सः स्यार्द्धधातुक इति सूत्रारम्भे वत्स्यति घत्स्यतीत्यादौ ( चयोः द्वितीयाः शरि )त्यनेन पक्षे थकारो भवति खरि चेति सूत्रेण तकारे कृते त्वस्याऽसिद्धत्वा-द्वितीयादेशाऽप्राप्त्याऽप्यकारघटितरूपं न सिध्येदिति चेन्न। सः स्यार्द्धधातुके इत्यस्यार्द्धधातुकशब्दाऽपेक्षत्वेन बहिरङ्गत्वात् चयो द्वितीयाः शरीत्यस्य तु सकारमात्राऽपेक्षत्वेनान्तरङ्गत्वाद् द्वितीयादेशे कर्त्तव्ये सः स्यार्द्धधातुके इत्यस्यापि बहिरङ्गपरि-भाषयाऽसिद्धत्वात् सिद्धान्तेऽपि द्वितीयादेशाप्राप्तेः। नचावा-त्सीदित्यत्र शास्त्रद्वयस्यापि समाननिमित्तकत्वेनाऽन्तरङ्गपरिभा-षाया विषयाऽभावात् द्वितीयादेशार्थं ( सः स्यार्द्धधातुके ) इति सूत्रमावश्यकमिति वाच्यम्। आर्द्धधातुकसंज्ञाया अधिकाया अपेक्षणत्वेन ( सः स्यार्द्धधातुके ) इत्यस्य बहिरङ्गत्वात्। न च संज्ञाकृतबहिरङ्गत्वस्याऽनाश्रयणादिदमसङ्गतमिति वाच्यम्। अस्य ग्रन्थस्य प्राचीनमताऽभिप्रायकत्वात् तन्मते संज्ञाकृता-न्तरङ्गबहिरङ्गभावस्य सत्त्वात्। न च त्रैपादिकेऽन्तरङ्गे बहिर-ङ्गपरिभाषाया अभावस्योपपादितत्वादिदमसङ्गतमिति वाच्यम्। प्राचीनमतानुरोधित्वादेतद्ग्रन्थस्य तन्मते त्रिपाद्यां तत्प्रवृत्तेर-ङ्गीकारात्। ( न मुने) इतिसूत्रे नेति योगविभागेन क्वाचिदासि-द्धत्वं नेत्यर्थकल्पनेन खरि चेत्यनेन तकारादेशेऽप्यसिद्धत्वं न भविष्यतीति कल्पनायाः सम्भवाच्चेति तत्त्वम्॥

(१)नामीति। अत्र नुटीति तु नोक्तम्, मात्रालाघवस-

---

(१)ननु आमीत्येवास्तु नित्यत्वात्पूर्वं दीर्घेऽपि ह्रस्वान्तान्नुडि-त्येतत्सामर्थ्यादभूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः। न च नृ च इ-

त्वेऽपि बहूनामर्थानां क्लृप्यत्वेन ज्ञानगौरवापत्तेः। तथा हि नुड्यजन्ताङ्गस्य दीर्घ इत्यर्थे अनश्व इत्यादौ दीर्घापत्तेः। न च नुटि यदङ्गन्तस्य दीर्घ इत्यर्थे सति नायं दोष इति वाच्यम्। नुटि परे यत्किञ्चिन्निमित्तकाङ्गस्य ग्रहणे तत्रैवाऽतिव्याप्तेः। अङ्गसंज्ञाप्रयोजके नुटीति तु वक्तुमशक्यम्। नुण्मात्रस्याऽङ्गसंज्ञाप्रयोजकत्वाऽसम्भवात्। नुटीत्यस्य नुडादौ लक्षणायां तु लक्षणैव दोषः। एवं सन्नच्युत इत्यत्र ङमो ह्रस्वादचीति सूत्रेण नुटि दीर्घापत्तिः। सन्निपातपरिभाषया संयोगान्तलोपस्याऽसिद्धतया वा तद्वारणकल्पनेऽपि ज्ञानगौरवं स्फुटम्। किञ्चाक्षण्वन्त इत्यत्राक्षिशब्दान्मतुपि अस्थिदधीति प्रकरणे छन्दस्यपि दृश्यते इत्यनङि अन्नन्तात्परस्य मतुपो नुडित्यर्थकेन ( अनो नुट् ) इति सूत्रेण नुटि कृते दीर्घापत्तिः। यदि तु नोपधाया इति दीर्घे कर्त्तव्येऽनो नुडित्यस्याऽसिद्धत्वं पूर्वत्राऽसिद्धमिति कल्प्यते तदाऽसिसिद्धत्वकल्पनैव दोषः। एतेन नुटीति न्यासेऽक्षण्वन्त इत्यत्र

---

तिदीर्घविकल्पान्नृणामित्यत्र नुट् चरितार्थः, नृ नद्याप इत्येव सिद्धेस्तदुक्तं भाष्ये नैकमुदाहरणं योगारम्भं प्रयोजयति। न च ह्रस्वनद्याप इति कल्पे नृ आमितिस्थिते परत्वात् नृ च इति दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या णणि न्नामिति दीर्घाभावे नृणामिति रूपद्वयं नृनद्याप इतिन्यासे तूभयत्र नुटि नृणां नृणामिति फलभेदः। एवं नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि तस्मादामि नृत् आमित्यत्र ह्रस्वनद्याप इति कल्पे नुण्न भवति नृनद्याप इतिन्यासे च भविष्यतीति फलभेदः एवं नृशब्दस्य ॠशब्देन समासे तत आमि सूत्रपक्षे नुडभावो न्यासपक्षे च नुडिति च फलभेद इति चेदत्र केचित् नृनद्याप इतिन्यासे शेखरकारस्य तात्पर्यकल्पनेनादोषात् तपरकरणसामार्थ्याच्च ह्रस्वऋकारान्तस्यैव नृशब्दस्य ग्रहणं नतु दीर्घान्तस्य तुगन्तस्य वेति न पूर्वोक्तफलभेद इत्याहुः॥

दोषो नास्ति नुटोऽसिद्धत्वादिति शङ्काया गर्भस्रावेण, पूर्वत्रा-सिद्धमित्यस्याऽनित्यत्वज्ञापनार्थत्वादित्युत्तरमपि प्रत्युक्तमेव, यदि त्वनश्च इत्यादौ दीर्घाऽपत्तिवारणाय तस्य ( नुगची ) ति न्यासेन लुप्तनकारस्य नञो नुगागमः क्रियते तदा नलोपः प्रातिपदिकान्तस्येति नलोपः प्राप्नोति, नुग्विधानसामर्थ्याल्लो-पाभावकल्पने तु कल्पनागौरवं स्फुटमेव । न च भृञः किन्नुट् चेति निष्पन्ने भृङ्गशब्दे दीर्घापत्तिरिति वाच्यम् । अव्युत्पन्नत्वे-न दोषाभावात् । नचेदमेव व्युत्पत्तिपक्षज्ञापकमिति वाच्यम् । सूत्रकारमतेऽव्युत्पत्तिपक्षस्यैव सत्त्वात् ।

रामाणाम् । सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते सन्निपातपरिभाषाविरोधात् । नामीत्यनेन तु आरम्भ-सामर्थ्यात्परिभाषा बाध्यते । परिभाषाविरोधादिति । न-नु नामीति दीर्घे कर्तव्ये यथा (१)सन्निपातपरिभाषा न प्रवर्तते तथा ( सुपिचे )ति दीर्घेऽपि न प्रवर्ततामिति चेन्न । सर्वत्रा-

---

(१) सन्निपातपरिभाषा न प्रवर्त्तते इति । अस्यायं भावः पूर्वपूर्वप्र-वर्त्तमानशास्त्रं उत्तरोत्तरं प्रवर्त्तमानशास्त्रे अभ्यनुज्ञां करोति यत्कि-ल मत्प्रवृत्त्युत्तरप्रवृत्तिमता शास्त्रेण यज्ज्ञाप्यं तदपि साध्वित्यादि रूपेणान्यथोत्तरोत्तरशास्त्रस्याप्रामाण्यं स्यात् । एवं च यत्रोत्तरशा-स्त्रस्य पूर्वशास्त्रप्रवृत्तिनिमित्तविघातकत्वं तत्र नाभ्यनुज्ञां करोति त-था च मत्प्रवृत्त्युत्तरं मत्प्रवृत्तिविघातकातिरिक्तेन प्रवृत्तिमता शा-स्त्रेण यज्ज्ञाप्यं तदपि साध्वित्येवंरूपेणैवेत्यतः सन्निपातपरिभाषा सिद्धा भवति । यत्र तु प्रवृत्तिविघातस्यापि वैयर्थ्यसम्भावना तत्र सङ्कोचं कृत्वा अभ्यनुज्ञां करोति यथात्रैव नामिविषये मत्प्रवृत्त्युत्तरं नामीत्येतदतिरिक्तेन मत्प्रवृत्तिविघातकातिरिक्तेनेत्यादिरूपेणैवेति त-त्र प्रवृत्तिविघातकस्यापि प्रवृत्तिर्भवत्येवेति परिभाषा अनित्या । इत्येवंरूपेण लोकानामुद्घोष इति तत्त्वम् ॥

नित्यत्वाश्रयणे मानाभावात् । न च कष्टायेति निर्देशेन सामान्यतो दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिं कल्पयित्वा सुपि चेति दीर्घ एव वक्तुमुचित इति वाच्यम् । कृताकृतप्रसङ्गित्वेन नामीत्यस्य नित्यत्वात् । न च विशेषाऽभावेन फलाभावान्न कृताकृतैतत्प्राप्तिरिति वाच्यम् । विशेषाभावेऽपि पर्जन्यन्यायेन शास्त्रप्रवृत्तेरिको झलिति सूत्रे भाष्ये उक्तत्वात् । आरम्भसामर्थ्यादिति । रामाभ्यामित्यादौ चारितार्थ्यात्सुपि चेत्यस्य तु न सामर्थ्यमिति भावः । ननु कतीनामित्यत्र ह्रस्वनद्यापो नुडिति सूत्रं बाधित्वा षट्चतुर्भ्यश्चेति सूत्रेण परत्वान्नुटि नामीति दीर्घः सन्निपातपरिभाषामबाधित्वैव प्रवर्तते इत्यारम्भसामर्थ्याभावान्नामीतिशास्त्रमपि रामाणामित्यत्र सान्निपातपरिभाषया न प्रवर्तते । तथा च (आदाचार्याणामि)तिनिर्देशेन सान्निपातपरिभाषाया अनित्यत्वमाश्रित्य सुपि चेतिदीर्घ एव परत्वात्प्रवर्ततामिति चेन्न । (षट्चतुर्भ्यश्च)तिसूत्रेण चतुश्शब्द (१)साहचर्याद्धलन्तषट्संज्ञकेभ्य एवामो नुडागमो भवति न तु कतिशब्दादिति । तथा च कतीनामित्यत्र ह्रस्वनद्यापो नुडिति सूत्रेणैव नुडित्यारम्भसामर्थ्यं नोपक्षीणमिति ।

---

(१)साहचर्यादिति । (सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमि)तिपरिभाषयेत्यर्थः । सदृशद्वयस्यैव सहचरणात्प्रकृते सहचरितशब्देन सादृश्यवतो ग्रहणम् । तथाच सादृश्यवदसादृश्यवतोर्मध्ये सादृश्यवत एव ग्रहणमिति तदर्थः । साहचर्यस्य लोकेऽभिधानियामकत्वमित्येतन्मूलिकेयं परिभाषा । तदुक्तमभियुक्तैः—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ।

न च ( षट्चतुर्भ्यश्च )तिसूत्रे साहचर्याश्रयणे रेफे हल्संज्ञकत्व-स्यैवामूसंज्ञकत्वस्यापि सत्त्वादमन्तषट्संज्ञकात्परस्यामो नुडि-त्यर्थापत्त्या षण्णामित्यत्र नुण् न स्यादिति वाच्यम् । (अनाम्नव-तिनगरीणामि)त्यत्राऽनामिति पर्युदासबलेन हलन्तविषये सा-हचर्याश्रयणेऽप्यमन्तविषये साहचर्यानाश्रयणेन षण्णामित्यत्र-नुट्सिद्धेः । न च ( द्वित्रिश्चतुरितिकृत्वोर्थे ) इतिसूत्रे कृत्वोऽर्थ-ग्रहणसामर्थ्येन साहचर्यपरिभाषाऽनित्या । अत एव ( दीधीवे-वीटामि )तिसूत्रे धातुसाहचर्येऽप्यागमस्येटो ग्रहणसिद्धिरिति-वाच्यम् । तथापि षट्संज्ञाश्रितत्वेन ( षट्चतुर्भ्यश्च )तिसूत्रस्य बहिरङ्गत्वात्कृतीनामित्यत्राऽन्तरङ्गत्वाद् ह्रस्वाश्रयनुट्प्रवृत्तेः ।

परे तु—आरम्भसामर्थ्यादित्यस्य (न तिसृ चतसृ) इतिनि-षेधारम्भसामर्थ्यादित्यर्थं मन्वते । तिसृणामित्यत्र ( ह्रस्वनद्या-प ) इतिनुटि कृते ( नामी )तिसूत्रेण दीर्घे प्राप्ते ( न तिसृ चतसृ ) इतिसूत्रेण निषिध्यते । सन्निपातपरिभाषया दीर्घाप्र-वृत्तौ तु किमनेन निषेधेन । अतो ज्ञायते नामीति दीर्घः स-न्निपातपरिभाषां बाधत इति ।

परे तु—सुपि चेतिदीर्घो यद्यपि पर इति । इदन्न युक्तम् । (१)प्रतिपदोक्तत्वान्नामीत्यस्यैव पूर्वमुपस्थितेः । नामी-त्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यत इति । इत्यपि न युक्तम् । अन्यथाऽऽरम्भसामर्थ्यात्परिभाषाबाधवदङ्गाधिकार-स्थत्वयुक्तप्रत्यासत्तेरपि बाधः स्यात् । तथा च नामधातो र्णि-

(१) प्रतिपदोक्तत्वादिति । (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)ति परिभाषयेति भावः । लक्षणानुसन्धानपूर्वकविलम्बोप-स्थितिकत्वं लाक्षणिकम् । शीघ्रोपस्थितिकत्वम्प्रातिपदोक्तत्वम् । इदमेव परिभाषायां बीजम् ।

जन्तात्क्विपि निष्पन्ने नामशब्दे परे रामशब्दस्य दीर्घः स्यात् । तस्मात्साम्नामित्यादिनिर्देशेनैव नामीति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिर्वक्तव्या । न च निर्देशस्याऽदन्तप्रकृतिकत्वेनाऽदन्तमात्रविषयत्वे हरीणामित्यादिसिद्धये निर्देशान्तरस्याप्याश्रयितव्ये गौरवम् । सूत्रसामर्थ्यादनित्यत्वस्वीकारे तु सूत्रविषयमात्रे निर्वाहान्न गौरवमिति वाच्यम् । निर्देशस्याऽसति बाधके इति न्यायेन सामान्ये पक्षपातादित्याहुः ॥

आदेशप्रत्यययोः । अत्र प्रत्ययपदं तदवयवे लाक्षणिकम् । तत्र तात्पर्यग्राहकं तु ( हलि सर्वेषामि ) त्यादिनिर्देशः, सातिग्रहणञ्च । तेन साहित्यसद्भावादद्वन्द्वासिद्धिः । प्रत्ययस्यैव विषयभेदाद्भेदस्वीकारे तु साहित्याभावात्सौत्रत्वाद् द्वन्द्वाश्रयणमिति क्लेशः । एतेन सौत्रद्वन्द्व इत्युक्तिः । ओस्सम्बन्धद्वयार्थक इति तद्व्याख्यातृग्रन्थोक्तिश्च परास्ता । यत्त्वादेशावयवग्रहणे तिस्र इत्यादौ षत्वापादनम् । तन्न । ( नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनामि )त्यनेन निषेधात्तत्र षत्वाप्राप्तेः । एवं च तिस्र इत्यत्र सकारोच्चारणसामर्थ्यात्षत्वाभावमाशङ्क्य तिसृभिरित्यत्र सकारोच्चारणस्य चरितार्थत्वापादनमयुक्तम् । तिस्र इत्यत्रैव सकारोच्चारणस्य चरितार्थत्वादिति दिक् । ननु दधिसेचावित्यादौ षत्वापत्तिः । नचोत्तरपदत्वे चापदादिविधौ प्रतिषेध इति प्रत्ययलक्षणप्रतिषेधस्याऽपदादिविषयत्वेनाऽन्तर्वर्त्तिसुपा प्रत्ययलक्षणेन पदत्वात्सात्पदाद्योरिति निषेधान्न दोष इति वाच्यम् । दध्नः सेचाविति विग्रहे सत्सम्भवेऽपि सोपपदात्सिचेर्क्विचि (१)( गतिकारकोपपदानां कृद्भिः सह

---

(१) परिभाषासिद्धिप्रकारश्चेत्थम्—( कुगतिप्रादय )इत्यत्र

समासवचनं प्राक् सुबुत्पत्तेरि )त्यनेन कृदन्तेन समासे तद- सम्भवादिति चेत् ।

अत्र कैयटः । अनभिधानाल्लक्ष्यैकचक्षुष्कतापक्षे तत्र वि- जेव नोत्पद्यते इति ब्रह्मास्त्रमाह ।

अन्ये तु–गतिकारकेत्यस्याऽनित्यत्वमाहुः ।

भाष्यकारास्तु–पदादादिरिति पञ्चमीसमासमाहुः । त- त्रानाभिधानमनित्यत्वं चागतिकगतिकम् । पञ्चमीसमासे बहुसे- चादिसिद्ध्यर्थं बहुचूपूर्वस्य नेतिवचनं कर्तव्यमिति गौरवम् । मम तु प्रतिभाति, (सातेरिति) सूत्रम् । सातेः सस्य षत्वं न स्यादिति तदर्थः । ततः, ( पदात् ) । पदादुत्तरस्य सस्य षत्वं न स्यादित्यर्थः । अत्र शक्तं सुबन्तं चोभयविधं पदं गृह्यते । तत्र षष्ठीसमासोत्पन्नदधिसेचावित्यादौ सुबन्तम् । उपपदसमासोत्प- न्नदधिसेचाविसादौ शक्तमिति यथा सम्भवं बोध्यम् । न च शक्तं पदं भाष्यासम्मतमिति भ्रमितव्यम् । ( नेविंश ) इत्यत्र निरपि पदं विशिस्पिपदं (१)(सर्वे सर्वपदादेशा) इत्यादौ तद्-

---

( उपपदमतिङ् )तिसूत्रादतिङ्ग्रहणापकर्षणादतिङन्तश्च समा- स इत्यर्थादेतस्मिन्सूत्रद्वये सुपेति तृतीयान्तस्य निवृत्त्या गत्युपप- दसमासयोः समर्थेनैव समासविधानलाभेन वहिर्भूतसंख्याकारक- सापेक्षोत्तरखण्डप्रकृतिकविभक्त्यपेक्षया शीघ्रोपस्थितनिमित्तकत्वेना- न्तरङ्गत्वात्सुबुत्पत्तेः प्रागेव समासः सचोत्तरखण्डो गत्युपपदसम- भिव्याहारादतिङिति निषेधाच्च कृदन्त एवेति परिभाषाया अंशद्व- यस्य ( स्थालीपुलाक ) न्यायेन कारकां ( तृतीयां ) शस्य च सिद्ध- त्वात्सिद्धेयं परिभाषेति बोध्यम् ।

(१) सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥
इति स्वरूपम् ।

र्शनात् । एवं चोत्तरपदत्वे इत्यत्रापदादिविधाविति बहुच्पूर्वेति वचनं सातिग्रहणं च न कर्तव्यमिति लाघवम् । न च शक्तपदत्वस्वीकारे पदादिति षत्वनिषेधप्रवृत्तौ बुभुषतीत्यादावपि निषेधापत्तिरिति वाच्यम् । मन्त्रेषु सर्वेषामित्यादिनिर्देशेन प्रकृत्युत्तरप्रत्ययस्य निषेधाभावबोधनात् । एवं च राजपुरुषेष्वित्यादावपि नातिप्रसङ्गः । अन्यथाऽन्तर्वर्तिसुपा पदत्वात्षत्वानिषेधः स्यात् । न च निर्देशाद्याश्रयणे गौरवम् । त्वद्रीत्यापि रामेष्वित्यादिसिद्ध्यर्थं तदावश्यकत्वादिति दिक् ।

भाष्ये तु उत्तरपदत्वेतिवार्तिकं प्रत्याख्यातम् । तथा हि भसंज्ञासूत्रे सुप्तिङन्तमिति सूत्रात्सुबन्तमित्यनुवर्तनीयम् । तदायं सूत्रार्थः । यजादावसर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्तथाभूतः पूर्वः समुदायो भसञ्ज्ञो भवति । तदवयवस्सुबन्तं यद्यस्ति तर्हि तदपि भसंज्ञं स्याद् यजादावनन्तरे इति । इह च समुदायस्य भसंज्ञा प्रधानशिष्टा अवयवस्य त्वन्वाचयशिष्टा । ( कर्तुः क्यङ्सलोपश्च )तिवत् तेन राज्ञ इत्यादौ सुबन्तावयवाऽभावेऽपि भवति । सुबन्तावयवसत्त्वे तु समुदायस्य चेत्युभयोरपि भवतीति विवेकः । ( स्वादिष्वसर्वनामस्थाने )इत्यत्रापि हि सुबन्तमित्यनुवर्तते । प्रसज्यप्रतिषेधश्चायं तत्सामर्थ्यादनन्तरस्य विधिर्वेतिन्यायो नाश्रीयते, तदायमर्थः, सर्वनामस्थाने परतः पूर्वः समुदायः पदं न स्यात् । तदवयवभूतं सुबन्तं च पदं न स्यादिति । तत्र समुदायस्य स्वादिष्विति प्राप्ता । अवयवस्य तु सुबन्तमिति प्राप्ता पदसंज्ञाऽनेन निषिद्धेति परमवाचावित्यादिसिद्धिः । असर्वनामस्थान इत्यत्रोत्तरसूत्राद्यचीत्यपकृष्य यजादौ सर्वनामस्थाने उभयविधपदसंज्ञानिषेधात्सु-

वार्क् सुराजेत्यादौ कुत्वादिसिद्धिश्चेत्यलम् । विवृताघोषस्य सस्य तादृश एव षः ।

रामेष्विति । विवृतत्वरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्च सकारस्य स्थाने विवृतत्वरूपाभ्यन्तरप्रयत्नवान् अघोषरूपबाह्यप्रयत्नवाँश्च षकार इत्यर्थः । बाह्याभ्यन्तरयोर्द्वयोरप्यान्तरतम्यपरीक्षोपयोगित्वं सवर्णसंज्ञायान्त्वाभ्यन्तरप्रयत्नस्यैव ( तुल्यास्यप्रयत्नं सवर्णमिति ) सूत्रे प्रशब्दबलादुपयोग इत्याशयः । विवृतस्य सस्येत्युच्यमाने ऋकारोपि स्यादिति तद्वारणायाऽघोषस्येत्युक्तम् अघोषस्येत्युक्ते ठकारेऽतिप्रसङ्गस्तद्वारणाय विवृतेत्युक्तम् ।

इण्कोः किम् । रामस्येति । ननु ( इण्कोरि )त्यधिकारसूत्रं न कर्तव्यमिति चेन्न । रामस्येत्यत्र सकारस्थाने षकारापत्तेः । न च ( टाङसिङसामि )तिसूत्रे षकार एव कर्तव्ये सकारोच्चारणसामर्थ्याद्रामस्येत्यत्र षत्वं न भविष्यतीति वाच्यम् । अमुष्येत्यत्र षकारानापत्तेः । न च ( नाडादिष्वमुष्ये )ति निपातनात् । फगादावामुष्यायणेत्यादिवार्तिकनिर्देशाच्चामुष्येत्यत्र षत्वं स्यादिति वाच्यम् । विश्वपास्वित्यादौ षत्वापत्तेः । न च तत्रापि स्विति वक्तव्ये सकारोच्चारणसामर्थ्यान्न भविष्यतीति वाच्यम् । लिट्सु प्रशान्स्वित्यत्र ( ङ्ःसि धुट् ) (नश्चे)ति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यकत्वात् ।

आदेशप्रत्यययोः किम् । सुपीः सुपिसाविति । ननु आदेशप्रत्यययोरिदं सूत्रं न कर्त्तव्यम् । इण्कोरित्यधिकारसूत्रस्यैव विधित्वस्वीकारे इण्कवर्गाभ्यां परस्य सस्य मूर्द्धन्यादेश इत्यर्थस्वीकारेण रामेष्वित्यत्र षत्वसिद्धिरिति चेन्न । सुपीरित्यत्र षत्वा

षत्तेः । ननु सुपीरित्यत्र न दोषः, कृतेऽपि षत्वे (ससजुषोरुरि) तिशास्त्रदृष्ट्या षत्वविधायकस्यासिद्धत्वेन रुत्वप्रवृत्त्येष्टसिद्धेरत आह—सुपिस्सावितिति ॥

तदन्तस्यापीयं सञ्ज्ञा ( द्वन्द्वे चे)तिज्ञापकात् । तेन परमसर्वत्रेति अल् परमभवकानित्यत्राकच्च सिद्ध्यतीति । शब्दस्वरूपस्य विशेष्यस्याध्याहारेण तदन्त विधौ सर्वादीनि शब्दरूपाणि सर्वाद्यन्तानि च सर्वनाम- संज्ञानि स्युरित्यर्थः । न च शब्दरूपं विशेष्यमादाय तदन्तविधौ न मानमिति वाच्यम् । (द्वन्द्वे चे)त्यस्य मानत्वात् । तत्र हि द्वन्द्व इति प्रथमार्थे सप्तमी । द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः । नहि तदन्तविधिं विना समुदाये संज्ञाप्रवृत्तिरास्ति या निषिध्येतेति भावः ।

ननु तदन्तस्य सर्वनामसंज्ञायां न फलम् परमसर्वस्मायि- त्यादौ स्मायादीनां तदन्तविधिना सिद्धत्वात् । न च ( सर्व- नाम्नः स्मै) इत्यादेः सर्वनाम्नो विहितस्य ङेरित्येतस्य स्मै इत्या- द्यर्थात्सर्वनाम्नो विहितत्वाभावान्न प्राप्तिरिति वाच्यम् । तदन्त- संज्ञाऽभावेऽवयवात्परत्वमादायाऽतिप्रसङ्गनिवारणरूपफलाभा- वाद् द्वन्द्वे चेत्यादीनामवयवनिषेधकत्वेन विहितविशेषणफला- भावादिसत आह·तेनेत्ति । नचात्रापि प्रातिपदिकाधिकारात्त- दन्तविधिनेष्टसिद्धिरिति वाच्यम् । ( समासप्रत्ययविधौ प्रति- षेध ) इत्यनेन तत्प्रतिषेधात् । । अकच्चेति । न च तदन्तस्य संज्ञाभावेऽप्यवयवनिष्ठसर्वनामत्वेनाऽकच् सिद्ध्यतीति वाच्यम् । ( कुत्सित) इति सूत्रोक्तभाष्यरीत्या संख्याकारकाभ्यां पूरणार्थ- स्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः । प्रत्यासत्तिन्यायेन सर्व-

नामप्रकृतिकसुबन्तात्ततदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसंज्ञाभावे तदसिद्धेः। अकच्चेति चकारात्परमसर्वत इत्यत्र तसिल्। नचावयवनिष्ठसर्वनामत्वमादाय तसिल्सिद्धौ नेदं तदन्तविधेः फलमिति वाच्यम्। सर्वनामप्रकृतिकपञ्चम्यन्तत्वाभावादिति।

परे तु-( सर्वनाम्नः स्मै ) इत्यादेः सर्वनाम्नो विहितस्य इत्याद्यर्थात्सर्वनाम्नो विहितत्वाभावान्न प्राप्तिरित्यादिशङ्कोत्तरत्वेन तदन्तसंज्ञाऽभावेऽवयवात्परत्वमादायाऽतिप्रसङ्गनिवारणरूपफलाभावाद् द्वन्द्वे चेत्यादीनामवयवनिषेधकत्वेन विहितविशेषणे फलाभावादित्याद्युक्तं तन्न रम्यम् परमसर्वस्मै इत्यादौ स्मायाद्यभावरूपफलस्य वक्तुं शक्यत्वात्। तस्मात्तदन्तसंज्ञायाः परमसर्वस्मै इति न फलम्। एवमकजपि न फलम्। सर्वनाम्ना प्रातिपदिकविशेषणे सर्वान्तप्रातिपदिकादित्यर्थसम्भवात्। न च समासप्रत्यये प्रतिषेधः शंक्यः। तस्यानित्यत्वात्। यच्च-तसिलितिप्रतीकमुपादाय नचावयवनिष्ठेत्यादिशंकोत्तरत्वेन सर्वनामप्रकृतिकपञ्चम्यन्तत्वाभावादित्युक्तम् तदपि न सम्यक्। तत्रापि सर्वनाम्ना प्रातिपदिकविशेषणे सर्वान्तप्रातिपदिकाद्या पञ्चमी तदन्तादित्यर्थसम्भवात्। एवञ्च सर्वनामसंज्ञायां तदन्तविधेः फलं चिन्तनीयमित्याहुः॥

अनेकाल्त्वात्सर्वादेशः। नचावर्णस्तॄ इत्यादाविव (१)(नानुबन्धकृतमनेकाल्त्वमि)ति वाच्यम्। सर्वादेश-

(१) एषा परिभाषाऽस्ति। इत्थञ्चास्याः सिद्धिप्रकारः। अष्टाभ्य औशि त्यादिसूत्रविहितौशादीनां शकारेत्संज्ञकत्वेन शित्वात्स-

त्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे इति । अयम्भावः, (जसः शी)तिसूत्रेण विधीयमानः श्यादेशोऽनेकाल्त्वात्सर्वादेशो भवति न तु शित्वादिति । नचार्वणस्त्रसावनञ इत्यत्रेव ( नानुबन्धकृतमनेकाल्त्वमि )तिनिषेधान्नानेकाल्त्वमिति वाच्यम् । सर्वादेशत्वात्प्राक् प्रत्ययादित्वज्ञानाभावेनेत्संज्ञाया अभावात् । तृ इत्यत्रोपदेशावस्थायामेव ऋकारस्येत्संज्ञा शीभावस्य तु सर्वादेशोत्तरं स्थानिवद्भावेन प्रत्ययत्वे लब्धे ( लशक्वतद्धिते ) इति सूत्रेण प्रत्ययादिभूतस्य शस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयो वैधर्म्यमिति भावः ।

परे तु अनुबन्धत्वमित्संज्ञायोग्यत्वम् । न तु इत्संज्ञाकत्वम् । तथाचात्रापि (नानुबन्धकृतमनेकाल्त्वमि)तिनिषेधप्रवृत्त्या शित्त्वादेव सर्वादेशः । इत्संज्ञायोग्यशकारवत्त्वमेवाऽनेकाल्शिदितिसूत्रे शित्त्वम् । अत एव कप्रत्ययणप्रत्यययोर्विषये (१)(नानुबन्धकृतमसारूप्यमिति)तिपरिभाषाप्रवृत्त्या ( वाऽसरूपोऽस्त्रियामि ) तिविकल्पाभावः । । अनुबन्धपदस्य वाचकतासम्बन्धेनेत्पदविशिष्टार्थकत्वे विधानकाले नानुबन्धकृतमसारूप्यमिति वचनाऽप्रवृ-

---

र्वादेशत्वार्थमेव ( अनेकाल्शिदि ) तिसूत्रे शिद्ग्रहणं तिष्ठति परमनुबन्धानामेकान्तत्वेऽनेकाल्त्वादेव सर्वादेशत्वसिद्धौ व्यर्थीभूतं शिद्ग्रहणं ज्ञापयति भवत्येषा परिभाषा ( नानुबन्धकृतमनेकाल्त्वमि)ति । अनुबन्धकृतमनेकाल्त्वं न भवतीति तदर्थः ।

(१) इत्थं हि सिद्धिप्रकारः । एतत्परिभाषाऽसत्त्वेऽनुबन्धकृतासारूप्यस्यापि ग्रहणापत्तौ णशप्रत्यययोर्विभिन्नानुबन्धत्वेनाऽसारूप्यात् ( वाऽसरूपोऽस्त्रियामि ) त्यनेनैव विकल्पसिद्धौ ( ददाति दधात्योर्विभाषे)ति सूत्रेण णप्रत्ययबाधकस्य शप्रत्ययस्य वैकल्पिकविधाने व्यर्थं सज्ज्ञापयति भवत्येषा परिभाषा(नानुबन्धकृतमसारूप्यमि)ति । अनुबन्धकृतः सारूप्याऽभावो न भवतीति तदर्थः ।

त्तौ वामरूपसूत्रप्रवृत्त्या विकल्पो दुर्वारः। न च पश्चादनुबन्ध-ज्ञाने परिभाषाप्रवृत्त्या विकल्पाभाव इति वाच्यम्। कविषये जातस्याऽणो निवृत्त्ययोगात्। यदि पश्चादनुबन्धज्ञानेऽणो निवृत्तिस्तर्हि जसः शीत्यत्रापि पश्चात्प्रत्ययत्वज्ञाने ( नानुबन्धकृतमनेकाल्त्वमि)त्यस्य प्रवृत्त्या सर्वादेशत्वस्यापि निवृत्त्यापत्तिरित्याहुः॥

उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। तस्येह पाठस्तूभकावित्यकजर्थः। न च कप्रत्ययेनेष्टसिद्धिः, द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादावविवाऽयच्प्रसङ्गात्। तदुक्तम्; उभयोऽन्यत्रेति। अन्यत्रेति द्विवचनपरत्वाभावे। अत एवेति। द्वयोर्द्विवचनस्यैव युक्तत्वादिति भावः॥

नित्यं द्विवचनान्त इति। सर्वदा द्विवचनान्त इत्यर्थः। नचैवमुभादुदात्तो नित्यमिति सूत्रकारप्रयोगः, उभयस्य सर्वनामत्वे कोऽर्थ इति भाष्यकारप्रयोगश्च विरुध्येतेति वाच्यम्। रूपानुकरणत्वेनादोषात्। नन्वेवं सर्वादिगणे व्यर्थ उभयशब्दस्य पाठः। ( जसः शी ) ( सर्वनाम्नः स्मै ) ( ङसिङ्योः स्मात्स्मिनावि )त्यादीनामेकवचनबहुवचनयोरेव प्रवृत्तेः। न च ( स्वाङ्गशिटामदन्तानामि )तिसूत्रेणाऽऽद्युदात्तत्वं सर्वनामसंज्ञाफलमिति वाच्यम्। वृषादीनाञ्चेति सूत्रेण तत्सिद्धत्वात्। नचोभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरित्यत्र सर्वनाम्नस्तृतीया तत्फलमिति वाच्यम्। ( निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि )त्यनेन गतार्थत्वात्। नच कथं निमित्तकारणेतिवार्त्तिकेन गतार्थता तत्र प्रायःपदस्य विभक्तिष्वेव सम्बन्धादिति वाच्यम्

प्रायोग्रहणेनोभातिरिक्ताऽसर्वनाम्नः प्रथमाद्वितीये न स्त इत्यर्थकल्पनसम्भवादसर्वनामत्वेऽपि तद्दोषाऽभावात् । न च वृत्तिकृता सर्वनाम्नस्तृतीया चेति सूत्रे पठितत्वेनेदं वार्त्तिकं सर्वनामसंज्ञामपेक्षते इति वाच्यम् । भाष्यकृता ( हेतावि ) तिसूत्रे तस्य पठितत्वादित्याशङ्क्याह—तस्येह पाठस्त्विति । ननु कप्रत्ययेनेष्टसिद्धौ किमकजर्थपाठेन । न च काऽकचोः स्वरे विशेषोऽस्तीति वाच्यम् । प्रत्ययस्वरेण चित्स्वरेण वाऽन्तोदात्तत्वे स्वरे विशेषाऽभावादित्याशङ्क्याह—न चेति । अकचि कृते उभशब्दस्य द्विवचनविषयत्वन्न विहन्यते (१)(तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ) इतिन्यायात् । कप्रत्येय तु विहन्यत एव, प्रातिपदिकात्परत्र जायमानत्वादित्याशयेनाह—द्विवचनपरत्वाभावेनेति । अयच्प्रसङ्गादिति । उभादुदात्तो नित्यमित्यत्रोभादुदात्त इति योगो विभज्यते । अवयववृत्तेः संख्यावाचिन उभयशब्दादवयविन्यर्थेऽयच् स्यात् । उभयो मणिः । नचाऽयच् स्यादित्येव कथनं नोचितम् द्वित्रिभ्यामिति सूत्रात्तयस्य प्रकरणमाप्तत्वादिति वाच्यम् । स्थानिवत्सूत्रभाष्यरीत्याऽयचः प्रत्ययान्तरत्वात् । तत्र हि तयादेशे उभयप्रतिषेधः स्थानिवद्भावेन तयपोग्रहणेन ग्रहणाद्विभाषा प्राप्नोतीत्यभिधायाऽयच् प्रत्ययान्तरमितिप्रतिपादितम् । ततो नित्यम् । उभशब्दादवृत्तिविषये नित्यमयच् स्यात्स्वार्थे । तेनोभयपक्षविनीतनिद्रा

---

(१)एतज्ज्ञापनप्रकारश्चेत्थम् । अकज्विशिष्टाभ्यामिदमदस्शब्दाभ्यां परस्य भिस ऐस्निषेधाभावाय ( नेदमदसोरकोरि ) ति सूत्रेऽको ग्रहणं तिष्ठति । परमेतन्न्यायाभावे साकच्कयोरुक्तशब्दयोरिदमदस्शब्दत्वाभावादेव निषेधाप्रवृत्तौ तदर्थं कृतमको ग्रहणं व्यर्थं सज्ज्ञापयति ( तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ) इति ।

इत्यादावयच् यथा नित्यः, एवं प्रत्ययेऽपि स्यादिति । ननु अकच्प्रत्यये कृतेऽप्ययच् कुतो नेति वाच्यम् । योगविभाग-स्येष्टसिद्ध्यर्थकत्वेनोभौ साभ्यासस्येति निर्देशेन च यत्र द्विव-चनं न श्रूयते तत्रैवायजिति व्याख्यानात् । तेनोभयोर्वास-इत्यत्र शयवासेत्यलुक्विधानेन द्विवचनस्य श्रवणादयजभावस्य सिद्धिः श्रूयते इत्युपादानादुभयपक्षविनीतनिद्रा इत्यादौ प्रत्य-यलक्षणेन द्विवचनपरत्वेऽप्ययच्सिद्धिः । न लुमतेति निषेधस्तु नात्र, लुप्तप्रत्ययनिमित्तककार्य एव कर्त्तव्ये तेन निषेधात् । तथा च वार्त्तिकम् , ( अन्याभावो द्विवचनटाब्विषयत्वादिति ) अन्येषां सर्वनामकार्याणामभाव इत्यर्थः । यद्यप्युभावित्यादौ द्विवचनपरत्वं दुरुपपादम् । उभयत आश्रयणेऽन्तादिवद्भाव-विरहात् । तथाप्युभयशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्राऽयजितीह विवक्षितोऽर्थः । नचात्यन्तस्वार्थिकप्रत्य-यानां सुबुत्पत्तेः पूर्वमेवान्तरङ्गत्वादुत्पत्तेरुभशब्दादित्यनुपपन्न-मितिवाच्यम् । उभशब्दादिसस्योभघटितशब्दादुभयशब्दादिस-र्थकत्वेनादोषात् । यत्र लुकापहृतं द्विवचनं तत्रायजिति तु नोक्तम् । उभाविवाचरत्युभयतीत्यर्थे उभशब्दादाचारक्विपि उभयतीत्य-त्राऽयजनापत्तेः । भवन्मते तत्र द्विवचनस्योभशब्दादुत्पत्तेरेवाऽ-भावेनोभशब्दाद्द्विवचनं लुकापहृतमिति नास्तीति विशिष्टाऽ-भावसत्त्वात् । नचोभशब्दस्य सर्वादिगणे पाठाऽभावेऽसर्वनाम-त्वेन ततस्त्रलादिविवक्षायाः कर्तुमशक्यत्वेन द्विवचनस्य लुकान-पहारस्यैव सत्त्वेन ततोऽयजनापत्तावुभयत्रेत्यसिद्धिरिति वा-च्यम् । यद्ययच् स्यात्तदा त्रलादिः स्यात्तस्मिंश्च लुगपि स्यादिति लुकापहारसम्भावनासत्त्वेन लुक्कृतापहारसम्भावनाभावस्य व-क्तुमशक्यत्वादिति ।

अन्ये तु अत्र सर्वादिषूभशब्दपाठो व्यर्थः। नचो-भकाविति प्रयोगसिद्धिः फलम् । अन्यथाऽकजभावे कप्रत्ययो द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवाऽयचूप्रसङ्गादिति वाच्यम् । उभादुदात्तो नित्यमिति योगविभागस्येष्टसिद्ध्यर्थतया नित्यमित्यनेन द्विवचनपरत्वयोग्यस्वार्थिकप्रत्ययातिरिक्तवृत्तावयजित्यर्थकेनाऽत्र तदभावात् । द्विवचनपरत्वयोग्येति विशेषणात् त्रल्तसिलादिव्यावृत्तिः । वृत्ताविति विशेषणादुभाभ्यामित्यादिव्यावृत्तिः । उभशब्दपाठप्रत्याख्यानं कुर्वतां (१)भाष्यकाराणामयमेवार्थः सम्मतः। कैयटेन तु कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थबोधकत्वम् । त्रल्तसोस्त्ववयत्वेन तदबोधकत्वमित्यनयोरयच्प्रवृत्तौ च विशेष उक्तः। एवं च लाघवाद्भाष्यसम्मतत्वाच्च मदुक्त एव नित्यमित्यस्यार्थ उचितः। एवं च नित्यमित्यनेन द्विवचनपरत्वाभावात्तत्राप्युभयशब्दादुत्पन्नाद्विवच-

---

(१) भाष्यकारस्यायमभिप्रायः द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वमेव द्विवचनत्वमिति कप्रत्ययस्यापि स्वार्थिकत्वेन द्विवचनत्वात्तस्मिन्नपि द्विवचनपरत्वाद्यथाऽकचि नायच् तथा कप्रत्ययेऽपि नेति । नचैवं त्रतसिलादेरपि स्वार्थिकत्वेन द्विवचनशब्देन ग्रहणात्तत्रापि अयच् न स्यादितिवाच्यम् यस्य द्विवचनत्वं चिकीर्षितं तत्प्रयोज्यप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठप्रधानता तादृशप्रधानताप्रयोजकत्वं द्विवचनत्वमितिस्वीकारेणादोषात् तथाचोभयत्रेत्यादौ सप्तम्यन्तात्त्रलाद्युत्पत्त्या त्रल्पदप्रयोज्याऽऽधाराधेयभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानतासमानाधिकरणैव द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठा प्रधानताजातेति त्रतसिलादेर्नोक्तद्विवचनत्वं कप्रत्ययस्य प्रातिपदिकादेवोत्पत्त्या संसर्गनिष्ठप्रधानताख्या विषयता न कपदप्रयोज्येति कप्रत्ययस्य नोक्तद्विवचनत्वभङ्ग इति ।

नं लुक्का नापह्रुतं ततोऽन्यत्राऽयाजिति तत्परिष्कारं स्वीकृत्य सर्वादिषूगशब्दपाठं च स्वीकृत्य भाष्यकारस्य प्रौढिवादपरत्व-प्रतिपादकग्रन्थस्तद्व्याख्यातृग्रन्थश्च पराहत इत्याहुरित्यलम् ॥

उभयशब्दस्य द्विवचनं नास्तीति कैयटः। अस्तीति हरदत्त इति। उभयशब्दाद्विवचनानुत्पत्तेरसर्वविभक्तित्वे तद्धि-तश्चासर्वविभक्तिरिति सूत्रेणाऽव्ययत्वे प्राप्ते परिगणनं भाष्यकृता कृ-तम्। यद्युभयशब्दाद्द्विवचनमुत्पद्येत तर्हि भाष्यकृत्कृतपरिगणनं विरुध्येतेति कैयटाशयः। हरदत्तस्याभिप्रायस्तु पचतिरूपमित्या-देरेकवचनस्यैवोत्पत्तेरसर्वविभक्तिकत्वेन प्राप्ताव्ययसंज्ञावारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति। अनयोर्मध्ये कैयटमतमेव ज्यायः। अत एवोभयो मणिरुभये देवमनुष्या इति भाष्ये उदाहृतम् यदि द्विवचनमपि स्यात्तदा तदन्तोदाहरणप्रद-र्शनेन न्यूनतापत्तिः स्यादिति भावः।

तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्य-यान्ततया प्रथमचरमेति विकल्पे प्राप्ते विभक्तिनिरपे-क्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति उभय इति। तस्मादिति उभयशब्दात्। जसीति। उभयशब्दाद्बहुवचनो-पपत्त्यर्थमवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः। नच सर्वादीनीत्यस्य सर्वार्थबोधकत्वरूपार्थसापेक्षत्वेन बहिरङ्गत्व-मिति वाच्यम्। तस्य प्रथमचरमेत्यत्रापि निमित्तत्वेन त-त्कृतनित्यसंज्ञाया बहिरङ्गत्वाभावात्। अत एव संज्ञोप-सर्जनीभूतप्रथमादिशब्दे प्रथमचरमेत्यनेनान्तरङ्गत्वात्। वि-कल्पो न भवति। वस्तुतस्तु प्रथमेत्यस्याभावबोधकत्वेन (निषेधाश्च बलीयांस) इत्यनेनास्य प्राप्तिः। अन्तरङ्गत्वादिति

तु न युक्तम् । युगपत्प्राप्त्यभावेनान्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय इत्यस्य विषयाभावात् । नचोभयेत्यत्र सर्वनाम्नो विहितत्वाभावेन जसः शीभावो न स्यादिति वाच्यम् । संज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसंज्ञासमकालमेव सर्वनामसंज्ञाप्रवृत्तेः । न च प्रातिपदिकसंज्ञासमकालमेव चेत् सर्वनामसंज्ञा तदा पूर्वपरेत्याद्यष्टाध्यायीस्थसूत्रवैयर्थ्यमिति वाच्यम् । पूर्वपरेत्यादीनां पक्षे तदभावमात्रबोधकत्वात् । नच ज्ञापकासिद्धाऽसिद्धं बहिरङ्गमिति परिभाषयाऽसिद्धत्वं भविष्यतीति वाच्यम् । अन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्याऽनयाऽसिद्धत्वप्रतिपादनेऽपि अन्तरङ्गप्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेस्तस्या वारयितुमशक्यत्वात् । नच जसीति सप्तम्या विषयसप्तमीत्वात्पूर्वं विकल्पप्राप्तिः स्यादिति वाच्यम् । जसीति विषयसप्तमीपक्षेऽपि प्रातिपदिकसंज्ञोत्तरमेव सर्वनामसंज्ञाप्रवृत्तेः । तदुत्तरमेव जसविषयत्वसत्वात् । नच मनुष्योऽयं प्रातरुत्थायेति दृष्टान्तेन पूर्वं यस्य निमित्तसम्पत्तिस्तस्य पूर्वं प्रवृत्तिरित्यर्थः सिध्यति तस्या अपि परिभाषायाः क्रोडीकारे न बाधकं तत्रासिद्धत्वं च निमित्ताभावादप्राप्तिरूपमिति युगपत्प्राप्त्यभावेऽपि परिभाषा सञ्चरत्येवेति वाच्यम् । स्थानिवदितिदेशप्रापिताया निरवकाशत्वात् । अयम्भावः, प्रकृतिभेदात्प्रत्ययो भिद्यते । स्थानिभेदादादेशो भिद्यते । आदेशभेदात् स्थानिवद्भाववाक्यं भिद्यते । अनल्विधिभेदाच्च । एवञ्चोभयशब्दावयवोऽयजादेशः सर्वनामत्वेऽनल्विधौ कर्तव्ये तयपूरूपस्थानिवदिति वाक्यं निरवकाशमिति । नच परिभाषाविरोधादतिदेशवाक्योपप्लव एव नेति वाच्यम् । प्रत्यक्षस्य स्थानिवद्भावस्याऽऽनुमानिकयाऽनया बाधायोगात् । नच कार्यकालपक्षे जसुत्तरमेव नित्यसंज्ञाया अपि प्राप्तिरिति

युगपत्प्राप्तिरस्त्येवेति वाच्यम् । सर्वनामसंज्ञायां यथोद्देशपक्षस्यैवौचित्यात् अन्यथोभय इत्यत्र सर्वनाम्नो विहितत्वाभावाच्छीभावानापत्तेः । नचायचः प्रत्ययान्तरत्वे उभयीत्यत्र टिड्ढेति सूत्रेण ङीप् न स्यादिति वाच्यम् । तत्र सूत्रे मात्रशब्दादारभ्याऽयचश्चकारात्प्रत्याहाराश्रयणेन तत्सिद्धेः । नचैवं कतीसत्रापि टिड्ढेति ङीप् स्यादिति वाच्यम् । अत इत्यनुवृत्त्या तत्र तदप्राप्तेः । नन्वेवं सति मात्रज्ग्रहणेनैव सिद्धे टिड्ढेति सूत्रे तयप्ग्रहणवैयर्थ्यापत्तिरिति चेन्न । अन्वयुत्यानुवादेन तदुक्तेः । नच द्वित्रिशब्दावयवे वर्तमानावयवित्रिनि यदा तयप् तदा तस्य स्थानेऽयजादेशे स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति जसि विकल्पो भवति । अयचः प्रत्ययान्तरत्वे तु न विकल्पप्राप्तिरिति वाच्यम् । द्वित्रिशब्दप्रकृतिकाऽयजन्तस्य जसः शीविषयेऽनभिधानात् । नच तस्थपामिति वक्तव्ये तस्थस्थमिपामिति गुरुनिर्देशात्समुदायानुबन्धस्यावयवानुबन्धत्वाभावो ज्ञापित इति । यदि मात्राजिति प्रत्याहारस्तदाऽयचाश्रितत्वं न स्यादिति वाच्यम् । (ज्ञापकसिद्धं न सर्वत्र) ति परिभाषया क्वचित्समुदायानुबन्धस्याप्यवयवानुबन्धत्वस्वीकारादिति तत्त्वम् ।

डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्ता ग्राह्याः । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति सुप्तिङन्तमिति ज्ञापकात् । तथापीह तदन्तग्रहणं केवलयोः प्रयोजनाभावादिति ॥ किं यत्तदो निर्धारणे द्वयोरेकस्य डतरच् । वा बहूनां जातिपरिप्रश्ने डतमच् । एकाच्च प्राचामिति विहितौ । तथापीहेति (प्रत्ययग्रहणे तदन्तग्रहणमि) ति परिभाषया, (प्रयोजनं सर्वनामाव्ययसंज्ञायामि) ति भाष्योक्त्या च तदन्तविधि-

द्वयेन डतरान्तान्तेत्याद्यर्थे परमकतरस्य व्यपदेशिवद्भावेन कतरस्य च संज्ञासिद्धेरित्याशयः । तत्र मानं दर्शयति—केवलयोरिति । प्रयोजनाभावादिति । फलाभावादित्यर्थः । अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्येव जसः शीत्यादेरर्थादिति भावः । नन्वेकेनापि तदन्तविधिना प्रयोजनलाभेन पाठसार्थक्ये तदन्तविधिद्वयप्रदर्शनमसङ्गतमिति चेन्न । सत्येकस्मिंस्तदन्तविधौ प्रत्ययग्रहणाऽभावेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति निषेधाऽप्राप्त्या प्रयोजनं सर्वनामाव्ययसंज्ञायामिति बोधिततदन्तविधिस्वीकारे बाधकाऽभावादिति। परेतु यत्तु तथापीति मूलप्रतीकमुपादाय प्रत्ययग्रहणे तदन्तग्रहणमिति प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तविधिद्वयेन डतरान्तान्तेत्याद्यर्थे परमकतरस्य व्यपदेशिवद्भावेन कतरस्य च संज्ञासिद्धेरिति भावः । तत्र मानमाह—केवलयोरिति । प्रयोजनाभावात् फलाभावात् ।

यद्वा प्रयोज्यतेऽनेनेति प्रयोजनं संज्ञाप्रयोजकसर्वार्थवाचकत्वमित्युक्तंनवीनैः । तन्न, केवलयोः संज्ञायामपि परमकतरेत्यादौ सर्वनाम्नः परत्वमुपजीव्य शीभावस्मैमुडादिप्रयोजनसम्भवात् । एवं च विहितविशेषणं कुत्रापि नाश्रयणीयमिति लाघवम् । संज्ञोपसर्जनव्यतिरिक्तयोस्त्वर्थपरयोः सर्वार्थवाचकत्वसम्भवात् । यद्वा सर्वार्थप्रकृतिकत्वात्सर्वार्थकत्वाद्द्वितीयमपि न । अजकादिसिद्धिस्तु सर्वार्थप्रातिपदिकेत्यर्थेनेत्युक्तमेव । किञ्च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नेत्यस्य बाधोऽपि नेति लाघवमित्याहुरित्यलम् ॥

अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुवि-

षये निर्द्धारणे वर्तते। तत्रान्यतमशब्दस्य गणे पाठा-भावान्न संज्ञा। ननु डतरग्रहणेऽन्यतरपाठो व्यर्थोऽत आह-अन्यतरेति। किं यत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच्। वा बहूनां जातिपरिप्रश्ने डतमच्। एकाच्च प्राचामिति। किं यत्त-देकशब्देभ्य एव तयोर्विधानेनान्यशब्दादप्राप्तेरिति भावः।

ननु बहुव्रीहावपरपदार्थस्य प्रधानत्वेन वृत्तिघटकपदार्था-नां स्वार्थाविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनप्रतिषेधेनैव संज्ञा-प्रतिषेधसिद्धत्वाद् व्यर्थं सूत्रमित्याशङ्क्य बहुव्रीहाविति विषयस-प्तमीत्वेन समासात्पूर्वं संज्ञानिषेधार्थं तत्सार्थकमित्याशयेनाह-त्वकं पिता यस्येत्यादि। न बहुव्रीहावित्यस्य, बहुव्रीहौ कृते सर्वादेः सर्वनामसंज्ञा नेत्यर्थकत्वे निषेधवैयर्थ्यम्। उपस-र्जनीभूता न सर्वादय इति वक्ष्यमाणत्वादतश्चिकीर्षितस्याऽध्या-हारेण बहुव्रीहौ चिकीर्षिते सर्वादेः सर्वनामसंज्ञा नेत्यर्थात्समा-सात्प्रागलोके प्रयोगानर्हत्वरूपेऽलौकिके विग्रहवाक्ये युष्मद्सु पितृसु अस्मत्सु पितृसु इत्याकारके सर्वनामसंज्ञा निषिध्यते। अध्याहारार्थमेव न बहुव्रीहिरिति वक्तव्ये बहुव्रीहाविति गुरु-निर्देशः कृतः। ननु यदि समासप्रवृत्तेः प्रागेव प्राप्तोऽकजनेन निवर्तितस्तर्हि त्वकं पितेत्यादि कथं विगृह्यते। त्वत्कः पिते-त्यादिकप्रत्ययदर्शनौचित्यादिति चेन्न। भ्रान्तोऽसि। नहि यस्मि-न्प्रक्रियावाक्यं उत्प्रेक्षामात्रगोचरे बहुव्रीहिसंज्ञा प्रवृत्ता सर्व-नामसंज्ञा च निषिद्धा तत्प्रयुज्यते, अपरिनिष्ठितत्वात् किन्तु तत्सदृशबहुव्रीहिसंज्ञाशून्यं वाक्यान्तरमेव यदाह कैयटः। अप्र-योगसमवायी यत्प्रक्रियावाक्यं तत्रायं निषेधो नतु लौकिके तस्य पृथगेव प्रयोगात्। तादर्थ्याभावादिति। अत एव दृष्टाः सर्वे येनेत्येव विग्रहो नतु सर्वा इति।

नन्वस्तु तत्राऽकजत आह—स चेति । नच सर्वनामसंज्ञानिमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वात्प्रागेव संज्ञा न भविष्यति (अकृतव्यूह) परिभाषाया जागरूकत्वात् । नचालौकिके प्रक्रियावाक्ये समासप्रयोजकैकार्थीभावारोपस्य सर्वजनप्रसिद्धत्वादेव निषेधस्य सूत्रस्य नष्टत्वाद्विनाशोन्मुखत्वादित्यसङ्गतमिति वाच्यम् । तत्र स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपजर्सनत्वाभावादेवमुक्तत्वादिति वाच्यम् । (अकृतव्यूहाः पाणिनीयाः)इति परिभाषाया अनित्यत्वज्ञापनार्थमेतदारम्भात् । अत एवातिभवकानित्यादिसिद्ध्यति । इष्टापत्तिं कृत्वेति । ननु न बहुव्रीहाविति सूत्रसत्त्वे तदकृतव्यूहपरिभाषाया अनित्यत्वे ज्ञापकम् । तस्य सूत्रस्येष्टापत्त्या प्रत्याख्याने तु किं तस्या अनित्यत्वे ज्ञापकमिति चेत् । च्छ्वोः शूडिति सूत्रे सतुक्ग्रहणस्य तदनित्यत्वे ज्ञापकत्वात् । ताद्धि प्रष्टेत्यादौ प्रकृतिसम्बन्धिवर्णमात्रापेक्षत्वेनान्तरङ्गत्वाज्जातस्य तुको निवृत्तये क्रियते । नचैवमलोऽन्त्यपरिभाषयाऽन्त्यस्य शादेशः स्यादिति वाच्यम् । सतुकनिर्देशसामर्थ्यात्तदप्रवृत्तेः । नच च्छ्वोरित्यत्र सतुकनिर्देशे राल्लोपे इति सूत्रेऽपि सतुकस्यैवानुवृत्तिः स्यात्तथा च मूः मुरावित्यादि सिध्येदिति वाच्यम् । (मूर्तौघन) इति निर्देशेन न ध्याख्याप्रमूर्च्छिमदामिति निषेधारम्भेण च राल्लोपे इति सूत्रे तुग्रहितस्यानुवृत्तिसम्भवात् । नचैवमपि उत्पुच्छयतेः क्विपि कृते उत्पुडिति प्राप्नोति, उत्पुदिति चेष्यते । तथा वाञ्छयतेः क्विपि वान् वान्शौ वान्श इति न सिध्यति, वान् वाञ्छौ वाञ्छ इति प्राप्नोतीति वाच्यम् । उत्पुच्छादिप्रकृतिकक्विबन्तादेरनाभिधानात् अकृतव्यूहपरिभाषासत्त्वेहि शादेशे सति निमित्तविनाशेन पूर्वं तदप्रवृत्तिरेवेति स

ण्यर्थ एव स्यादिति भावः। अथ वा कंसं घातयतीत्यादौ कृ-ल्लुकि यत्तन्निमित्तकादेशनिवृत्तये क्रियमाणम् (आख्यानात्कृ-तस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्ययापत्तिश्चेति वचनं तदनित्यत्वे-ज्ञापकम्। नच लुकि कृतेऽपि प्रत्ययलक्षणसत्त्वाद्राजा एनेय इत्यादाविव अकृतव्यूहपरिभाषाया अप्राप्तिः। यथा हल्ङ्या-दिलोपे यस्येति चेति लोपे जातेऽपि प्रत्ययलक्षणेन यथा निमि-त्तविनाशबुद्धिस्तया लुक्यपि सान्नियोगाविनाशबुद्ध्या (अकृते) ति परिभाषायाः प्रवृत्तिर्नभविष्यतीति तदर्थः। न लुमतेति न भवति लुप्तप्रत्ययपरतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसं-ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वा तस्मिन्कर्तव्येन तेन प्रत्ययलक्षणस्य प्रतिषेधात्। यद्यप्यत्र जायमानं कार्यं पूर्वस्यैव तथापि प्रत्ययसन्नियोगेन तद्विधानं नतु तस्मिन् परतः पूर्वस्येति तत्रोक्तमिति तस्य निषेधस्यायमविषय इति वाच्यम्। पुष्प-योगं जानाति पुष्पं योजयति इत्यर्थके पुष्पयोगज्ञीति वचने नक्षत्रवाचिपूर्वपदकयोगशब्दान्तात्प्रातिपदिकाज्ज्ञानातीत्यर्थे णिच् कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमित्यर्थके भाष्यका-रकृतप्रत्यापत्त्यनुवृत्तेस्तदनित्यत्वे ज्ञापकत्वात्। तत्र हि कुत्वनिमित्तस्य विनाशोन्मुखत्वात् चजोरिति घिति परतः कुत्वं न स्यात्। ननु स्मृतिद्वयमहिम्ना विकल्पेन भवितव्यमिति प्रत्याख्यानानिरुक्तेरप्रामाणिकत्वमत आह—यथोत्तरामिति। तथा चाद्यत्वे

अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ।

इति भाष्यकारीयवचनेनैव व्यवस्थेति भावः प्रत्यङ्गं प्रत्य-वयवम्। द्विका पुत्रः। त्वकत्पितृकं इत्यादावनकान्तेऽकच्।

विश्वमिव इत्यादावदन्ते स्त्राङ्गशिटामदन्तानामित्याद्युदात्तः स्वर इति भाष्यार्थः । मुक्तसंशयमिति । क्रियाविशेषणघटित-पाठान्तरम् । नच यथोत्तरं मुनीनां प्रामाण्यमित्यत्र माना-भावेन कथं भाष्यवचनेनैव व्यवस्थोक्तिरिति वाच्यम् । धिन्वि कृण्व्योरचेति सूत्रे किमर्थमत्वं विधीयते वलोप एवास्त्वित्या-शंक्य अत्वेऽल्लोपे तस्य स्थानिवत्त्वेन गुणाभावाय तत् । नच वलोपेऽपि ( न धात्वि ) ति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्याने गुणप्राप्तिरित्युक्तम् । अनेन सूत्रकारमतात्प्रत्या-ख्यानवादिमतं प्रबलमिति ध्वनितमिति तस्यैव मानत्वात् । ननु सामान्येन संज्ञाकरणात् सर्वनामसंज्ञा सर्वत्र स्यादत आह—सं-ज्ञोपसर्जनीभूतास्तु न सर्वादय इति । अयंभावः, सर्व-नामेति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम् । सर्वेषां नामानी-ति । तद्बलेन सर्वाभिधानसामर्थ्यविशिष्टानामेव संज्ञित्वमनुमीय-ते । तथाच तादृशां गणेऽनुकरणाव्ययकतयाऽन्यादृशानामनुकर-णे मानाभावेनैव विशेषेऽवस्थितानां संज्ञानामुपसर्जनानाञ्च स-र्वादिपाठबहिर्भावः । एकद्रव्यबोधिका हि संज्ञा । अन्यविशेषणे-नार्थोपस्थापकत्वं चोपसर्जनत्वमित्युभयप्रकाराणामन्वर्थसंज्ञा ।

ननु गुणत्वात्सर्वनामत्वं नेति तदाह—महासंज्ञेति । ननु कृत्स्नसकलादिशब्देष्वपि संज्ञातिप्रसक्तिरत आह—गणे स-न्निवेशादिति । एतेन पूर्वपरेति गणसूत्रेऽसंज्ञायामिति ग्रहणं मन्दप्रयोजनमिति ध्वनितम् । सञ्ज्ञाभूतानां गणे सन्निवेशाभा-वात् । एवमष्टाध्यायीस्थपूर्वपरेतिसूत्रेऽप्यसंज्ञायामित्येतत्त्यक्तुं श-क्यम् । नच तदभावे जसि परतः संज्ञायामुत्तराः कुरव इत्यत्राऽ प्राप्तविकल्पः स्यादिति वाच्यम् । सर्वनामसंज्ञाया अन्वर्थत्वेन

संज्ञायामप्राप्तविधेरसम्भवादसंज्ञायामेव पूर्वेणाप्राप्ता संज्ञा जसि वा स्यादिति वक्तुमुचितत्वात् । अन्वर्थसंज्ञायाः प्रयोजनमाह—अतः संज्ञाकार्यमित्यादि । परेतु यत्तु सतुग्ग्रहणस्येत्येतदारभ्य उत्पुच्छादिप्रकृतिकक्विबन्तादेरनभिधानेत्यन्तमुक्तं तन्न ( नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ) इत्यनयैवान्त्यव्यावृत्तिसिद्धौ सतुङ्निर्देशेन पुच्छादिव्यावृत्तिसिद्धावनभिधानाश्रयणस्य निष्फलत्वात् । यदपि कंसं घातयतीत्यारभ्य कुत्वं न स्यादित्यन्तमुक्तं तदपि न समीचीनम् । कंसं घातयतीत्यादौ क्विन्निमित्तक एव वधादेशो निखिलतन्त्रकारसम्मतः । तथा च न लुमतेत्यस्य प्रवृत्त्या निमित्तविनाशोन्मुखेऽकृतव्यूहपरिभाषया वधादेशाऽप्रवृत्तौ प्रकृतिप्रत्यापत्तेर्व्यर्थत्वेन (अकृतव्यूह) परिभाषाऽनित्यत्वज्ञापनसम्भवात् । अपि चात्र प्रत्ययलक्षणप्रवृत्तिः स्वीक्रियते उत न । नाद्यः । क्विन्निमित्तं विना प्रत्ययनिमित्तत्वाभावेन तन्निमित्तत्वे च न लुमतेत्यस्य प्रवृत्त्येत्युभयथापि प्रत्ययलक्षणाप्रवृत्तेः । नाप्यन्त्यः । प्रत्ययलक्षणसत्त्वादिति भवदुक्तव्याघातापत्तेरित्याहुरित्यलम् ॥

द्वन्द्वे च । द्वन्द्वशब्दस्य द्विशब्दनिष्पन्नत्वेऽपि स्थिमन्नादेशादिकं सर्वनामसंज्ञानिमित्तं कार्यं न भवति संज्ञात्वात् । समुदायस्यायं निषेधो नावयवानाम् । नचैवं तदन्तविधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् । अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम् इति भाष्योक्तेरेतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वमिति द्वन्द्वे चेत्यस्य द्वन्द्वः सर्वनामसंज्ञा नेत्यर्थादवयवनिषेधकत्वाभाव उचितः । किञ्चायमवयवनिषेधको यदि भवेत्तदा वर्णाश्रमेतराणामित्यत्र सवार्थवाचक-

सर्वाद्यन्तत्वेन समुदायसंज्ञायां सत्यां सुडापत्तिः । नचाऽवयव-स्थानेन संज्ञानिषेधात्सर्वाद्यन्तत्वं नास्तीति वाच्यम् । तस्य संज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायात् । नचावयवस्य-व्यपदेशिवद्भावेन समुदायस्य द्वन्द्वे विद्यमानत्वेन निषेधान्न सुडापत्तिरिति वाच्यम् । अवयवस्य निषेधे फलाभावात् । न च त्वच्छब्दस्य तन्निमित्तत्वेन काकचोः सतोर्विशेषेण फलमस्तीति वाच्यम् । द्वन्द्वावयवमात्रे सुन्दरादिविशेषणानन्वयाभाववत् कुत्सादिविवक्षाया अभावात् ।

त्वदधरमधुरमधूनि पिबन्तम् ।
पश्यासि दिशि दिशि रहसि भवन्तम् ॥

इति महाकविप्रयोगबलेनान्यार्थत्वच्छब्दस्य सत्वेऽपि तस्य सर्वनामत्वे मानाभावाद्बहुसम्मतत्वाच्च । परे तु न बहुव्रीहाविति वद् द्वन्द्वे चिकीर्षिते इत्यर्थः । अत एव सप्तम्यन्तगुरुनिर्देशोऽपि सार्थकः । अन्यथार्द्धमात्रालाघवेन द्वन्द्वश्चेति प्रथमान्तमेव पठेत् । एवं च ननु द्वन्द्वे यानतिपादिसूत्रव्याख्यानग्रन्थोऽवयवसर्वनामसंज्ञानिषेधदूषणपरस्तद्व्याख्यातृग्रन्थश्च परास्त इत्याहुरिति दिक् ॥

विभाषा जसि । जसीति कार्यापेक्षयाऽधिकरणसप्तमीत्याह—जसाधारमित्यादि । यद्वा जस इर्जसिः तस्मिन् सौत्रसप्तम्या लुक् । इकारेण ईकारग्रहणम् । तथा च जसः स्थाने यत्र शीभावस्तत्रैव विभाषा सर्वनामसंज्ञेत्यर्थः । अन्ये तु जसि विवक्षिते द्वन्द्वे चेत्यनेन प्राप्तो निषेधो वा स्यादित्यर्थः । नच निषेधाभावे शीभाव इवाऽज्ञाताद्यर्थविवक्षायामकचि वर्णाश्रमेतरके इत्यपि स्यादिति वाच्यम् । समुदायनिषेधवादिनोऽपि

मते जस इत्यादि क्लिष्टव्याख्यानेऽपि अवयवस्य निषेधाभावेन तादृशप्रयोगस्य दुर्वारत्वात्। न च जहत्स्वार्थवृत्तिपक्षेऽवयवस्य निरर्थकत्वादज्ञाताद्यर्थयोगाभावेनाऽकचः प्राप्तिरेव नास्तीति वाच्यम्। अवयवनिषेधवादिनाऽपि तद्वक्तुं शक्यत्वेन तत्पक्षे दूषणाभिनिवेशस्य जस इरिति गुरुभूतव्याख्यानस्य च व्यर्थत्वात् इतरकशब्देन समासे तु तत्प्रयोगस्येष्टत्वात्। एतेन विभाषा जसीत्यनेन फलाभावादवयवनिषेधाभावे तत्साहचार्येणार्थाधिकारानुरोधेन च द्वन्द्वे चेत्यस्यापि अवयवनिषेधकत्वाभाव इत्युक्तमपास्तम् समुदायनिषेधवादिमते यत्फलं शीभावरूपं तदेवावयवनिषेधवादिनापि वक्तुं शक्यत्वेन फलाभावादित्यविचारिताभिधानात्। नहि जसः शीति विहितविशेषणमिति प्रागेवोक्तमिति प्राहुः॥

जराया जरस्। अष्टन आ इत्यतो विभक्तावित्यनुवर्तते। तच्चाऽचिर ऋत इत्यतोऽनुवृत्तेनाऽचीत्यनेन विशेष्यते विशेषणेन च (१) (यस्मिन्विधिस्तदादावल्ग्रहणे) इति तदन्त-

---

(१) इयं हि परिभाषा तदन्तविधेरपवादभूता वर्तते। (येन विधिस्तदन्तस्ये) ति सूत्रस्थभाष्ये वचनरूपेणैव च पठिता न तु ज्ञापकमुपन्यस्तामिति बोध्यम्। अन्ये तु ज्ञापकमुपन्यस्यन्ति। तथाहि-एतत्परिभाषाऽभावे (घुमास्थे)ति सूत्रे हलीत्यस्य क्ङितो विशेषणत्वेन तदन्तविधौ हलन्तक्ङित्प्रत्यये परे घुमास्थादीनामित्वमित्यर्थे प्रदायेत्यादौ हलन्तक्ङित्प्रत्ययपरत्वाभावादेवेत्वाप्राप्तौ तद्वारणाय (न ल्यपी)ति सूत्रं व्यर्थीभूतं ज्ञापयति भवत्येषा परिभाषा (यस्मिन्विधिस्तदादावल्ग्रहणे) इति। अल्मात्रवृत्तिविषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयोजके पदे यो विधिः स तदलादौ बोध्य इति परिभाषार्थः।

विधेरपवादत्वेन तदादिविधिरित्याह–अजादौ विभक्ताविति । अजादौ किम् । जराभ्याम् । विभक्तौ किम् । जराया इदं (१)जारम् । न च जराया असुङिति सूत्रमास्त्विति वाच्यम् । जराशब्दात्तत्करोतीति णिचि णाविष्ठवदिति टिलोपे ततः क्विपि णिलोपे च (२)(एकदेशविकृतमनन्यवदि) ति परिभाषया एकदेशविकृतस्यानन्यत्वेन जरिसस्य जराशब्दत्वादसुङि सति (ङिच्चे )त्यन्त्यस्य स्थाने प्रवृत्त्या जसौ जस इति रूपापत्तेः । इष्यते त्वत्रापि जरसौ जरस इति । न च णिलोपस्य स्थानिवद्भावेन विभक्तिपरत्वाभावाज्जरसावित्यादि न प्राप्नोतीति वाच्यम् । क्वौ लुप्तं न स्थानिवदिति निषेधात् । न च क्वौ लुप्तमित्यस्य क्काचित्कत्वेनात्राश्रयणे मानं नास्तीति शङ्क्यम् । जरासिति गुर्वादेशकरणस्यैव मानत्वात् ।

---

(१) न च शरदादौ जरस इति अन्तर्गणसूत्रस्य वैयर्थ्यापत्तिस्तद्धिते चेत्समासान्ते एवेति नियमेनैव जारमित्यादौ दोषवारणसम्भवाद्विभक्तिग्रहणं व्यर्थमिति चेन्न । जराशब्दात्क्यजन्तात्क्विपि क्यचि चेतीत्वे अल्लोपयलोपयोः जरीत्यादौ अल्लोपस्य अचः परस्मिन्निति स्थानिवद्भावेनाच्परत्वाज्जरसादेशापत्तेः । जराशब्दादाचारक्विबन्तात्त्यदादौ इटि आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च–यदि–अन्तर्गणसूत्रस्य नित्यार्थत्वेन चारितार्थ्यमिति विभाव्यते तदा न-नियमार्थत्वमिति मूलोक्तदोष एव ।

(२) एषा च परिभाषा लोकन्यायासिद्धा । तथा हि छिन्नपुच्छे शुनि यथा श्वत्वव्यवहारस्तथा विकृतावयवेष्वविकृतत्वव्यवहार इति । ज्ञापकजिज्ञासायां तु ( प्राग्दीव्यत ) इतिसूत्रस्थभाष्यमेव ज्ञापकं बोध्यम् । तथा हि उक्तसूत्रे दीव्यत इति दीव्यतिशब्दैकदेशानुकरणम् । किमर्थं विकृतानिर्देश इत्युक्त्वा एतदेव ज्ञापयति भवत्येषा परिभाषा ( एकदेशविकृतमनन्यवदि )ति । स्वावयवविकारघटितं स्ववद्भवतीति परिभाषार्थः ॥

मते जस इत्यादि क्लिष्टव्याख्यानेऽपि अवयवस्य निषेधाभावेन तादृशप्रयोगस्य दुर्वारत्वात्। न च जहत्स्वार्थवृत्तिपक्षेऽवयवस्य निरर्थकत्वादज्ञाताद्यर्थयोगाभावेनाऽकचः प्राप्तिरेव नास्तीति वाच्यम्। अवयवनिषेधवादिनाऽपि तदुक्तुं शक्यत्वेन तत्पक्षे दूषणाभिनिवेशस्य जस इरिति गुरुभूतव्याख्यानस्य च व्यर्थत्वात् इतरकशब्देन समासे तु तत्प्रयोगस्येष्टत्वात्। एतेन त्रिभाषा जसीत्यनेन फलाभावादवयवनिषेधाभावे तत्साहचार्येणार्थाधिकारानुरोधेन च द्वन्द्वे चेत्यस्यापि अवयवनिषेधकत्वाभाव इत्युक्तमपास्तम् समुदायनिषेधवादिमते यत्फलं शीभावरूपं तदेवावयवनिषेधवादिनापि वक्तुं शक्यत्वेन फलाभावादित्यविचारिताभिधानात्। नहि जसः शीति विहितविशेषणमिति प्रागेवोक्तमिति प्राहुः॥

जराया जरस्। अष्टन आ इत्यतो विभक्तावित्यनुवर्तते। तच्चाऽचिर ऋत इत्यतोऽनुवृत्तेनाऽचीत्यनेन विशेष्यते विशेषणेन च (१) (यस्मिन्विधिस्तदादावल्ग्रहणे) इति तदन्त-

---

(१) इयं हि परिभाषा तदन्तविधेरपवादभूता वर्तते। (येन विधिस्तदन्तस्ये) ति सूत्रस्थभाष्ये वचनरूपेणैव च पठिता न तु ज्ञापकमुपन्यस्तामिति बोध्यम्। अन्ये तु ज्ञापकमुपन्यस्यन्ति। तथाहि—एतत्परिभाषाऽभावे (घुमास्थे)ति सूत्रे हलीत्यस्य क्ङितो विशेषणत्वेन तदन्तविधौ हलन्तक्ङित्प्रत्यये परे घुमास्थादीनामित्वमित्यर्थे प्रदायेत्यादौ हलन्तक्ङित्प्रत्ययपरत्वाभावादेवेत्वाप्राप्तौ तद्वारणाय (न ल्यपी)ति सूत्रं व्यर्थीभूतं ज्ञापयति भवत्येषा परिभाषा (यस्मिन्विधिस्तदादावल्ग्रहणे) इति। अस्मात्प्रवृत्तिविषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयोजके पदे यो विधिः स तदलादौ बोध्य इति परिभाषार्थः।

विधेरपवादत्वेन तदादिविधिरित्याह—अजादौ विभक्ताविति । अजादौ किम् । जराभ्याम् । विभक्तौ किम् । जराया इदं (१)जारम् । न च जराया असुङिति सूत्रमास्त्विति वाच्यम् । जराशब्दात्तत्करोतीति णिचि णाविष्ठवदिति टिलोपे ततः क्विपि णिलोपे च (२)(एकदेशविकृतमनन्यवदि) ति परिभाषया एकदेशविकृतस्यानन्यत्वेन जरिसस्य जराशब्दत्वादसुङि सति (ङिच्च )त्यन्त्यस्य स्थाने प्रवृत्त्या जसौ जस इति रूपापत्तेः । इष्यते त्वत्रापि जरसौ जरस इति । न च णिलोपस्य स्थानिवद्भावेन विभक्तिपरत्वाभावाज्जरसावित्यादि न प्राप्नोतीति वाच्यम् । क्वौ लुप्तं न स्थानिवदिति निषेधात् । न च क्वौ लुप्तमित्यस्य क्वाचित्कत्वेनात्राश्रयणे मानं नास्तीति शङ्क्यम् । जरासिति गुर्वादेशकरणस्यैव मानत्वात् ।

---

(१) न च शरदादौ जरस इति अन्तर्गणसूत्रस्य वैयर्थ्यापत्तेन तद्धिते चेत्समासान्ते एवेति नियमेनैव जारमित्यादौ दोषवारणसम्भवाद्विभक्तिग्रहणं व्यर्थमिति चेन्न । जराशब्दात्क्यजन्तात्क्विपि क्यचि चेतीत्वे अल्लोपयलोपयोः जरीत्यादौ अल्लोपस्य अचः परस्मिन्निति स्थानिवद्भावेनाच्परत्वाज्जरसादेशापत्तेः । जराशब्दादाचारक्विबन्तात्तव्यवादौ इटि आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च—यदि—अन्तर्गणसूत्रस्य नित्यार्थत्वेन चारितार्थ्यामिति विभाव्यते तदा न-नियमार्थत्वमिति मूलोक्तदोष एव ।

(२) एषा च परिभाषा लोकन्यायसिद्धा । तथा हि छिन्नपुच्छे शुनि यथा श्वत्वव्यवहारस्तथा विकृतावयवेष्वविकृतत्वव्यवहार इति । ज्ञापकजिज्ञासायां तु ( प्राग्दीव्यत ) इतिसूत्रस्थभाष्यमेव ज्ञापकं बोध्यम् । तथा हि उक्तसूत्रे दीव्यत इति दीव्यतिशब्दैकदेशानुकरणम् । किमर्थं विकृतनिर्देश इत्युक्त्वा एतदेव ज्ञापयति भवत्येषा परिभाषा ( एकदेशविकृतमनन्यवदि )ति । स्वावयवविकारघटितं स्ववद्भवतीति परिभाषार्थः ॥

केचित्तु । असुङ्करणे आदेशेनाभिप्रेतस्य स्वरूपस्याऽसु् इत्यस्य ज्ञाने हलन्त्यमुपदेशेऽजिति सूत्रद्वयस्यापेक्षासत्त्वेन गौरवमित्यसुङ् न कृत इति वदन्ति ।

परे तु अत्र शब्दानुशासनाच्छब्दस्य विशेष्यत्वेनोपस्थितत्वाल्लाघवाच्च जरस्येति पुंल्लिङ्गेनैव निर्देश उचितः । एवं चैकदेशविकृतंतिपरिभाषाया अपि नोपयोगोऽत्र । नच पुंल्लिङ्गत्वेन निर्देशे स्त्रियामादेशो न स्यादिति वाच्यम् । ( प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापी )ति परिभाषयाऽन्तवद्भावेन वादेशप्रवृत्तौ सिद्धत्वात् ।

इनादीन्बाधित्वा परत्वाज्जरसिति । अत्र नव्याः, परे तु विभक्त्यादेशेभ्यः परत्वाज्जरासित्यसङ्गतम् । विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव ( जराया ) इति सूत्रेऽजरामित्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरासिति भाष्योक्तं सङ्गच्छते । अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैवेत्यादिकं वदन्ति ।

तन्न समीचीनम् । षष्ठ्येकवचने जरस इत्यस्य सर्वैरपि साधुत्वेन स्वीकृतस्याभावप्रसङ्गात् । न च भाष्याप्रामाण्यादिष्टापत्तिरिति वाच्यम् । तस्याऽन्याभिप्रायकत्वात् । तथा हि नपुंसकस्येत्यत्र सर्वनामस्थाने इति विषयसप्तमीति तत्र नुम्जरसोः प्रवृत्तिसत्त्वेन विप्रतिषेधविचारप्रसङ्गः । यद्वा शिभावस्यैव पूर्वत्वे न तु टाङसीत्यस्येत्याभिप्रायेणैव मूले परत्वाज्जरासित्युक्तम् ।

वृत्तिकृता तु पूर्वविप्रतिषेधेनेनातोः कृतयोः सन्निपात परिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन् निर्जरसादितिरूपे नतु निर्जरसा निर्जरस इति केचिदित्युक्तम् । तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतमेतच्च भाष्यविरुद्धमिति । सन्निपातपरिभाषाया अनित्यत्वमिति । इनादेशे इकारोच्चारणमादादेशे आकारोच्चारणम् । अतो भिस इत्यत्रैस्करणं च तदनित्यत्वे मूलमिति तद्भावः । तदनुसारिभिरिति । निर्जरसिनेसादिव्याख्यातृमतानुसारिभिरित्यर्थः । षष्ठ्येकवचने इति । त्रयाणामेकसूत्रोपात्तत्वात्स्थलद्वयपूर्वविप्रतिषेधस्वीकारे स्यादेशविषयेऽपि पूर्वविप्रतिषेध उचित इति भावः । निर्जरस्येत्येव रूपमिति । पूर्वविप्रतिषेधेन टाङसीसादि सूत्रेण स्यादेशे कृतेऽजादित्वाभावाज्जराया जरसित्यस्याऽप्रवृत्तेरिति भावः ।

एतच्च भाष्यविरुद्धमिति । भाष्यकृद्धि, (टाङसिङसामि )ति सूत्रेऽनादेशमदादेशं च विधायेनातौ प्रत्याख्यातवान् । रामेणेत्यादावाङि चाप इत्यत्राऽङि चेति योगविभागेनैत्वं साधितवाँश्च । तथा सति निर्जरसिन् निर्जरसादित्येतद्भाष्यविरुद्धमिति स्पष्टमेव । न च ( टाङसिङसामि )ति सूत्रेण नादेशे कृतेऽनाप्यक इति सूत्रं बाधित्वा हलि लोपप्रवृत्त्याऽनेनेत्येतन्न सिध्येदिति वाच्यम् । नकारे परे विशिष्य नादेशविधानात् । तथा हि अनाप्यक इत्यत्र अन नापि इति छेदः । नपुंसकत्वात्स्वमो र्नपुंसकादिति सोर्लुकि (नलोपः प्रातिपदिकान्तस्ये)ति नकारलोपः । नापीति समाहारद्वन्द्वात्सप्तम्येकवचनम् । न च टाङसीति सूत्रेण ङसेरदादेशे कृते पररूपम् । ( अतो गुणे ) इति सूत्रेण स्यादिति वाच्यम् । अकारोच्चारण

सामर्थ्येन तद्बाधात् । तथा (जराया जरसि)ति सूत्रे भाष्यकार आह-(अतिजरैरिति भवितव्यं सन्निपातपरिभाषयेति)। तस्मान्निर्जरसैरित्यादि भाष्यविरुद्धमेव एतेन अतो भिस इति सूत्रे एसित्युच्यमाने ऐसूकरणं निर्जरसैरित्येतदर्थमिति कैश्चिद्व्याख्यातं तदपास्तमिति भावः ।

पद्दन्नो । अत्र सूत्रोपात्तादेशैस्स्वसदृशः स्थानिन आक्षिप्यन्ते-इत्याह-पाद्दन्तेति । सादृश्यं चात्र वर्णतो(१)ऽर्थतश्च विवक्षितम् । वर्णत इत्युक्ते चरणशब्दस्य न पदादेशः । न च पदादेशस्य वैकल्पिकत्वेन पदा चरणेनेति रूपद्वयमिष्टमिति वर्णत इत्युक्तिर्विफलेति वाच्यम् । स्वचां प्राक्ककारादित्यधिकारपठितेन स्वाङ्गानामकुर्वादीनामिति फिट्सूत्रेण कवर्गरेफवकारादीन्वर्जयित्वा स्वचां स्वाङ्गानां द्वितीयमुदात्तमित्यर्थकेन चरणशब्दस्यान्तोदात्ततया शेषानिघातेनानुदात्तादित्वस्यानुदात्तान्तत्वस्य च सत्त्वेन विनिगमनाविरहात्तत्तद्धर्मकृतसादृश्यस्यापि परिग्रहात्कदाचित् । पदेत्यादिशब्दघटके पच्छब्देऽनुदात्तादित्वाऽनुदात्तान्तत्वस्यापि प्राप्त्याऽनुदात्तादेः पदेति प्रयोगस्यापत्तिरित्याशयात् । अर्थत इत्युक्ते श्लोकवाचकपदे स्यादशाभाव इति ।

परे तु । नेदं सूत्रमावश्यकम् । पादादिपर्याया एव पदादयः शब्दाः सन्ति । अत एव कोशे तदुपादानम् । न हि क्वचित्पर्यायेषु स्थान्यादेशयोरुपादानं दृश्यते । न च तृज्वत्क्रोष्टुरित्यादिवद्व्यवस्थार्थमिति वाच्यम् । वेदे विपरीतप्रयोगस्याऽऽपादयितुमशक्यतया लोके तु कृतेऽपि सूत्रे व्य-

(१) अर्थात्स्वबोध्यार्थबोधकत्वं स्वघटकव्यञ्जनघटितत्वमित्युभयसम्बन्धेन पदादिविशिष्टत्वमिति बोध्यम् ।

वस्थाया अभावेन लक्ष्यैकचक्षुष्कतयैव व्यवस्थासम्भवात् । अत एव स्थानिनामनुपादानम् । नहि स्थान्यादेशभावे स्थान्यनुपादानं क्वचिद् दृष्टमिति वदन्ति ।

यत्तु आसन्शब्दस्य आसन्नादेश इति काशिकायामुक्तं तत्प्रामादिकमिति । तथाहि ( आस्नो वृकस्य वर्तिकामभीके ) इति मन्त्रे मुखादित्यर्थः । औचित्यात् । ( वृकस्य चिद्वर्तिकामन्तरा स्यादि ) तिमन्त्रसम्वादाच्च । एवं ( हव्या जुव्हान आसनि ) इति मन्त्रे मुखे इत्यर्थः । एवं आसन्यं प्राणमूचुरित्यादि बोध्यमिति दिक् ।

ननु ( सुडनपुंसकस्ये )तिसूत्रे सुडागमस्य ग्रहणं स्यादिति चेन्न । ( सर्वनामस्थाने चासम्बुद्धावि )तिसूत्रेऽसम्बुद्धाविति विशेषणस्य वैयर्थ्यापत्तेः । न च टाटकारेण प्रत्याहारस्य ग्रहणं भवत्विति वाच्यम् । औटाष्टित्वस्य निष्फलत्वापत्तेरित्याह—सुट्प्रत्याहार इति । ( सुट् स्त्रीपुंसयोरि )तिवक्तव्येऽनपुंसकस्येत्युक्तिः प्रसज्यप्रतिषेधेऽपि नञ्समासो भवतीति ज्ञापयति तेनाऽसूर्यं पश्यानि मुखानीत्यादि सिद्धमित्यलम् ॥

या परेति । संज्ञाद्वयस्य सावकाशत्वे विप्रतिषेधशासनबलेन परा संज्ञा भवति । यथा धनुषा विध्यतीत्यत्र परत्वादपादानसंज्ञाया बाधिका करणसंज्ञा भवति । एकस्या निरवकाशत्वे तु निरवकाशैव यथा शसादौ ( यचि भमि ) त्यनेन पदसंज्ञाया बाधिका भसंज्ञा भवति क्वचित्त्वेवमेव भसंज्ञाया बाधिका पदसंज्ञापि, यथा भवदीय इत्यत्र भवतष्ठक्छसाविति छसि सिति चेति पदसंज्ञा भवतीत्यर्थः । ननु विप्रतिषेधशास्त्रमहिम्ना संज्ञयैव संज्ञा बाध्यतामलं संज्ञाधिकारसूत्रेणेति चेन्न । संज्ञाधिकारातिरिक्तदेशे तव्यदादौ कृत्कृत्यप्रत्यया-

दिसंज्ञानां समावेशदर्शनेन विरोधविरहेण विप्रतिषेधसूत्राप्रवृत्तेः । न च तक्रकौण्डिन्यन्यायेनैकसंज्ञाबाधासिद्धेः कृतं सूत्रेणेति वाच्यम् । लौकिकस्य तक्रकौण्डिन्यन्यायस्य लोके संज्ञाविषये प्रवृत्त्यदर्शनेन शास्त्रेऽपि संज्ञाविषयेऽप्रवृत्तेः । नचैवं विरोधाभावेन विप्रतिषेधसूत्राप्रवृत्तौ परत्वादिवर्णनमसङ्गतमिति चेन्न । परत्वादेरितत्र प्रबलत्वदर्शनेनात्रापि तत्परिपाल्येव व्यवस्थोपपादनसम्भवात् । ननु राजन्य इत्यादौ सुप्तिङन्तमित्यनेन पदत्वं स्यादेव । न च परया भसंज्ञया बाध इति वाच्यम् । पदसंज्ञायाः पूर्वोपस्थितनिमित्तरूपान्तरङ्गत्वादिति चेन्न । समानावधिकाया अन्तरङ्गाया अपि पदसंज्ञाया भसंज्ञया बाध्यसामान्यचिन्ताश्रयणेनाऽपवादतयैव बाधात् । नचात्र बाध्यसामान्यचिन्ताश्रयेण प्रमाणाभाव इति वाच्यम् । राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु राजन्यादिभ्यो वुञिति सौत्रनिर्देशस्यैव मानत्वात् । कुत्रचित्समानावधिकयोः संज्ञयोरपि समावेशस्तु प्रमाणबलेनैवेति दिक् ॥

मूले तेनेति । अनवकाशत्वेनेत्यर्थः । पदसंज्ञायाः सर्वनामस्थानत्रिकलहलजादिर्विषयः । भसंज्ञायास्तु यजादिरिति भसंज्ञाविषयेऽपि पदसंज्ञासञ्चारे भसंज्ञा निरवकाशैवेत्यभिप्रेत्याह–शसादावचीति । नचाऽऽकडारीयसंज्ञाविषये परत्वेन व्यवस्थेति यदुक्तं तत्कार्यकालपक्षे न सङ्गच्छते । उभयोरपि कार्यरूपैकदेशस्थत्वादिति चेन्न । आकडारीयभपदादिसंज्ञाविषये यथोद्देशपक्ष एवेत्याशयात् । नचैवमङ्गसंज्ञाया अपि भपदसंज्ञाभ्यां समावेशो न भवेदिति वाच्यम् । भपदसंज्ञासूत्रेऽङ्गप्रकरणे भस्येत्यस्य पाठेन अङ्गमित्यनुवर्त्य अङ्गं सत्पदं भवति अङ्गं सद्भसंज्ञं च भवति इत्यर्थस्वीकारेण भपद-

संज्ञाभ्यामङ्गसंज्ञायाः समावेशस्यैवाङ्गीकरात् । नन्वेवं पुरुषपरस्मैपदसंज्ञेऽपि पर्यायेण स्यातामिति चेन्नैवम् णलुत्तमोवेति सूत्रज्ञापकबलेन समावेशस्यैवाऽभ्युपगमात् । न च गुरुसंज्ञया सह नदीसंज्ञाया लघुसंज्ञया सह घिसंज्ञायाश्च समावेशो न स्यादिति वाच्यम् । गुरुलघुसंज्ञयोर्वर्णनिष्ठत्वेन घिनदीसंज्ञयोर्वर्णान्तनिष्ठत्वेन तयोर्भिन्नावधिकतया समावेशे बाधकाऽभावात् । ननु णलुत्तमो वेति ज्ञापकबलेन पुरुषपरस्मैपदसंज्ञयोः समावेशोपपत्तावपि पुरुषात्मनेपदसंज्ञयोस्तु पर्यायता स्यादेव । नच तङानाविति सूत्रेण तङ्प्रत्याहारस्यात्मनेपदसंज्ञाकरणसामर्थ्यात्समावेशो भविष्यतीति वाच्यम् । पर्यायतासम्पादनेनापि सूत्रस्य कृतार्थतासम्भवादिति चेन्न । ( प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यमि )तिवार्त्तिकेन समाधानात् । एतेनापूर्वात्मनेपदग्रहणेनोभयोः समावेश उपपादनीय इत्युक्तम् । न च वार्तिके आत्मनेपदशब्दोच्चारणेनाऽऽत्मनेपदस्यैव पुरुषसंज्ञा भवेन्न परस्मैपदस्येति वाच्यम् । आत्मनेपदग्रहणं पृथक्कर्तव्यमित्यभिप्रायात् । एवं सति वाक्यभेदो भविष्यति । पूर्वसूत्रे च परस्मैपदविषयकमेव । अथवा ( णलुत्तमो वे ) तिसूत्रमेव सामान्यापेक्षज्ञापकमाश्रीयते । प्रथमादिसंज्ञा एतत्प्रकरणसंज्ञान्तराणां बाधिका न भवन्तीति । ज्ञापकस्य विशेषापेक्षत्वे उत्तमसंज्ञायाः समावेशोपपादनेऽपि प्रथममध्यमसंज्ञाभ्यां समावेशो न स्यादिति तत्त्वम् ॥

अल्लोपोऽनः । ननु राजकीयमित्यत्र ( एकदेशविकृत ) न्यायेनाल्लोपः प्राप्नोति । अत्र प्रश्ने ( ऋत्यक् ) सूत्रे भाष्यकारैर्द्विधा समाहितम् । तथाहि, एकदेशविकृतमनन्यवत्षष्ठीनिर्दिष्टस्य, राज्ञः क चेत्यत्रराजन्शब्दः षष्ठीनिर्दिष्टो नत्वन्निति लोपा-

भावः। अथ वा पुनरस्त्वविशेषेण, ननुचोक्तं राज्ञः क च राजकीयम्। अल्लोपोऽनः इति प्राप्नोति। नैष दोषः। वक्ष्यत्येतत्। श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते। अल्लोपोऽनः नकारान्तस्येति। इदं सूत्रं (ष्यङः सम्प्रसारणमि)ति सूत्रे भाष्यकारैर्द्वेधा व्याख्यातम्। तथा हि अनकारान्तस्याल्लोपे प्रयोजनम्। तक्ष्णा—तक्ष्ण इति। त इत्यत्रापि प्राप्नोति। (अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती) ति न दोषो भवति। एतदपि नास्ति प्रयोजनम्, अनकारं विशेषयिष्यामः अनो योऽकार इति। एवमपि अनसा मनसेत्यत्रापि प्राप्नोति, अन्कारेणाङ्गं विशेषयिष्यामः। अना अकारम्। अन्कारान्तस्याऽनो योऽकार इति। एवमपि अनस्तक्ष्णा अनस्तक्ष्णे इत्यत्रापि प्राप्नोति। एवं तर्हि (कार्यकालं संज्ञापरिभाषम्) यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। भस्येति तत्रोपस्थितमिदं भवति याचि भमिति। तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः। अनाऽकारम्। यजादिपरस्याऽनो योऽकार इति। इत्यादिना परिभाषां विनाऽपि सिद्धिरुक्ता। स एव पक्षः सर्वैरुक्तः। वृत्तिकारैस्तु यथोद्देशपक्षेऽनन्त्यविकारेति परिभाषामाश्रित्यान्नन्तस्य भस्याङ्गस्याऽकारस्य लोप इति व्याख्यातम्। न च सा भाष्ये प्रत्याख्यातेति भ्रमितव्यम्। न हि मृगाः सन्तीति यवा नोत्पद्यन्ते तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्येत्यन्त उपसंहारात्। एवञ्चान्नन्तस्य भस्याऽङ्गस्याऽकारस्य लोप इति वृत्तिकारादिव्याख्यानस्य यथोद्देशपक्षावलम्बित्वेन कार्यकालपक्षे तत्सम्बादमाश्रित्य नवीनोक्तं तत्खण्डनमनुचितमिति दिक्॥

यूष्णः । यूष्णा । पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अङ्व्यवाय इत्येवात्र णत्वमिति । अचः परस्मिन्पूर्वविधाविति सूत्रे पूर्वविधाविति पदस्यावृत्त्या पञ्चमीसमासाश्रयणे नैतदर्थोपलब्धिरिति भावः । तेन वीगतीत्यत्र प्रश्लिष्टेकारात्मकात्सन्नन्ताद्धातोरुत्पन्नस्य प्रत्यैषिषन्निति रूपस्य सिद्धिः । तदनाश्रयणे हि शपैकादेशस्य स्थानिवत्त्वाभावाज्जुस् स्यात् । न च पञ्चमीसमासपक्षस्य भाष्यानारूढत्वेन प्रमाणाभावग्रस्तत्वमिति वाच्यम् । (उभेऽभ्यस्तमि)तिसूत्रे उभे ग्रहणं यत्रोभे श्रूयेते तत्रैवाऽभ्यस्तसंज्ञार्थम् । ऐत्संन्नित्यत्राभ्यस्तलक्षणो जुस् माभूदिति पूर्वपक्षिणा प्रतिपादिते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने । उभे ग्रहणं सदार्थमिति सिद्धान्तिभाष्योक्तेरेव मानत्वात् । अनित्यश्चायं पञ्चमीसमासपक्ष इति मूलस्थतुशब्देन सूचयति । ननु भाष्योक्तिप्रमाणसिद्धपञ्चमीसमासस्यानित्यत्वे किं मानमिति चेन्न । अदन्ताच्चुरादेः प्रतिपूर्वात् गणधातोः क्त्वाप्रत्यये समासे ल्यपि ल्यपि लघुपूर्वादिति णेरयादेशे निष्पन्नस्य प्रविगणय्येति भाष्योक्तप्रयोगस्य मानत्वात् । न च प्रविगणय्येति भाष्योदाहरणे लघुपूर्वत्वं व्यपदेशिवद्भावेन णौ जातस्य लोपस्य स्थानिवद्भावे सति तस्याकारस्यैवेति ततः परत्वाल्ल्यबादेशो भविष्यति अतोऽनित्यत्वे फलं नास्तीति वाच्यम् । प्रदिधिषय्येत्यत्र दिधिपूशब्दादाख्यानाणिजन्तात् क्त्वाप्रत्यये प्रशब्देन समासे पञ्चमीसमासानित्यत्वपक्षे लघुपूर्वं षकारात्परत्वाद्भवति । यस्य स्थानिवद्भावस्तस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वं प्रकृते वक्तुमशक्यमूकारस्य दीर्घत्वादित्याशयात् । हे गौः इत्यादौ वृद्धेः स्थानिवद्भावेनैङ्ह्रस्वादेङ्ह्रस्वादिति सम्बुद्धेरल्लोपस्यापि फलत्वाच्च । न च हे गौरि-

रित्यादौ पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्यानेनैत्र सम्बुद्धि-लोपाभावः सेत्स्यतीति नेदं पञ्चमीसमासानित्यत्वे फलमिति वाच्यम्। वाच्यवृत्त्योक्तार्थालाभेन तादृशव्याख्यानस्य निर्मूल-त्वात्।

परे तु—मूले तुशब्देन पञ्चमीसमासानभिमतत्वं स्फोरयति। तत्त्वं च फलाभावाद्दोषबाहुल्याद्भाष्यविरोधाच्चेति। तथाहि वेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयं पञ्चमीसमा-सस्योक्तम्। तत्तु भिदेर्यङन्नात्तृचि यङोऽकारलोपस्य स्थानिवद्भा-वेन विनैव एकाच उपदेशेऽनुदात्तादित्यत्र विहितविशेषणाश्र-यणेनेण्निषेधाऽप्रवृत्त्या ठस्येक इत्यत्र स्थान्यादेशयोरकारोच्चारणा र्थत्वेन विप्रतिषेधशास्त्रमहिम्ना परसाहचर्यस्य बलीयस्त्वेन ङ्लेर्चलाङि परत एवान्तरो ङ्लिः सम्भवतीति तत्साहचर्यादभ्यस्ता-दपि लङ एव ङ्लेर्जुस्विधानेन च यथाचक्रं सकलग्रन्थकारैः साधितम्। एवं च फलाभावः स्पष्टः। प्राविगणय्येत्यादावल्लो-पस्य स्थानिवद्भावाण्णेरयादेशो न स्यात्। तथा हे गौः इत्या-दौ स्थानिवद्भावेनैङ्त्वादेङ्ह्रस्वात्सम्बुद्धेरिति सुलोप एव स्यात् एवं च दोषः स्पष्टः। आसन् आयन्नित्यादौ स्वविधावडादिसि-द्ध्यर्थमपरविधाविति वक्तव्यमिति पक्षे पञ्चमीसमाससम्भवोऽपि नास्ति एवं सति भाष्यविरोधः स्पष्टः। एवं चापरविधाविति वक्तव्यमिति न्यासान्तरेऽपि पञ्चमीसमासो वक्तुं शक्य इति इति कस्यचिदुक्तिर्भाष्याशयानवबोधनिमित्ता। नहि भाष्यका-कारेण यथान्यासं स्थापयित्वा द्वितीयं तत्कर्तव्यमित्युक्तम्। तेन तदुक्तं संगच्छते। किञ्चित्प्रकारान्तरेण निर्वाहे तच्चावृत्त्या-द्याश्रयेण सूत्रस्य व्याख्यानमनुचितम्। इदं च समर्थः पदवि-धिरिति सूत्रे द्विविधं सामर्थ्यम् परिभाषा चेति पक्षे यावान्

व्याकरणे पदसम्बन्धस्तस्य सर्वस्य संग्रहेऽपि युक्तिसामर्थ्यात्त-न्निमित्तग्रहणाकर्त्तव्यत्वेन लाघवे सति अथैकार्थीभावः सामर्थ्यं परिभाषा चेति सूत्रमभिन्नतरकं भवतीत्यनेन भाष्येण सूचितम् । व्याख्यातं च कैयटादिभिस्तथैवेत्याहुः ॥

यदपि अल्विधित्वादितिप्रतीकमुपादाय ठस्येक इत्यत्र स्थानिनि प्रत्ययेषु च सर्वत्राऽकारो विवक्षितः, आदेश एव तु विवक्षितः अन्यथा निषादकर्षुशब्दादेर्देश इति ठञि व्यञ्जन-मात्रस्य व्यञ्जनरूपकादेशे कशब्दस्य लाक्षणिकत्वात्केऽण इति ह्रस्वानापत्तिरिति भावः । स्थान्यादेशयोरकार उच्चारणार्थ इति इकादेशस्थानिभूतप्रत्यये आदेशविधायके सूत्रे चेत्यर्थः । स्पष्टं चेदं ठस्येक इत्यत्र भाष्यकैयटयोः । इदमुपलक्षणम् । सन्नि-पातपरिभाषयाऽपि कादेशवारणं बोध्यम् । स्पष्टं चेदं ठकूछसो श्चेति वार्तिकभाष्ये इति नव्यैरभाणि ।

तन्न रमणीयम्, केऽण इत्यत्राप्यकारस्योच्चारणार्थत्वेन व्य-ञ्जनमात्रे ककारे ह्रस्वविधानान्न वर्णग्रहणेष्विति निषेधादनित्य-त्वाच्च (लक्षणप्रतिपादोक्त) परिभाषाया अप्रवृत्तेः । न च केऽण इति सूत्रेण व्यञ्जनमात्रे ककारे परे ह्रस्वविधौ पाक इत्यादावतिप्रसक्तिरिति वाच्यम् । व्युत्पत्तिपक्षे राका धाकेत्यादि व्यावृत्यर्थं तद्धितग्रहणं कर्तव्यमिति वार्त्तिककारस्य तत्प्रत्या-ख्यानपरभाष्यकारस्य च स्वरसेनाऽङ्गाधिकारेण च प्रत्यये परत एव प्रवृत्तिविज्ञानाच्चेति बोध्यम् । एवं च यथाश्रु-तेनैव व्याख्यानसंभवे भङ्क्त्वा व्याख्यानमनुचितम् । ननु तथापि ककारादितद्धितेऽतिप्रसङ्गस्तदवस्थ इति चेन्न । भाष्ये कण्ठः शण्ठः, यण्ठ इत्यादाविकादेशव्यावृत्त्यर्थं ठस्येक इत्यत्र स्वरितोच्चारण इवात्रापि स्वरितोच्चारणेन स्वरितप्रत्ययाऽकार

विशिष्टो यः ककारस्तस्मिन्परतो ह्रस्व इत्यर्थस्वीकारेण वर्णस्य प्राधान्येनाश्रयणात्परिभाषाप्रवृत्तौ नैषादकर्षूक इत्यादिसिद्धिः ।

यद्वा मनोरमायां ठस्येक इत्यत्रोद्देश्ये विधेये वाऽकारस्य विवक्षितत्वम् । तत्रोद्देश्येऽलिवधित्वसम्पादनार्थं विधेये तु ठप्रत्ययाकारेणैव सिद्धे व्यर्थं तदिति बोधनार्थमुभयोरुपादानम् न तु ठादेशत्वावच्छेदेन । एवं च यत्र प्रत्ययाकारे प्रयोजनं तत्र प्रत्ययाकारविवक्षा, यथेकादेशस्थानिनि । तत्र हि कण्ठ इत्यादिव्यावृत्त्यर्थस्वरितगुणेन सार्थक्यात् । यत्र स्थानिनि न प्रयोजनं यथा देशे ठञि तत्रादेशविवक्षितत्वम् । यथा ( इसुसुकान्तात्क ) इत्यादौ । एवञ्च न काप्यनुपपत्तिः किञ्च प्रत्यये विवक्षितत्वे ठस्येत्यत्रापि विवक्षितत्वमागतमेव । तथा च समुच्चयार्थकचकारस्यासङ्गतिः पौनरुक्त्यं स्पष्टमेव । एवमिकादेशस्थानिभूतप्रत्यये आदेशविधायके ठस्येक इत्यत्रेत्यर्थ इति स्थान्यादेशयोरित्यस्य विवरणे बोध्यः । न च पञ्चमीसमासानाश्रयणे मथितयतेः क्विपि माथिताचरतीत्यर्थे ठाक्ति माथितिक इति भाष्यकृदुक्तरूपासिद्धिः कादेशप्रवृत्तेरिति वाच्यम् । कृतेऽपि पञ्चमीसमासे आदिष्टादचः पूर्वस्येव परस्यापि स्थानिवद्भावाभावेन कादेशप्रवृत्तेर्जागरूकत्वात् । तस्मात्काष्ठशगेव नास्तीति वत् मथितयतेः क्विपोऽदर्शनमिति तत्त्वम् ।

अस्तु वा मथित इवाचरतीत्यर्थे माथितक इत्येव रूपम् । माथितिक इति रूपन्तु मथितं पण्यमस्येत्यर्थे एव । अत एव कैयटेन व्याख्यातम् । सन्निपातपरिभाषामाश्रित्य चोद्यते । अन्यथाऽजादिसन्निपातेन तान्ततोयजाता कथमजादिविघातनिमित्तं स्यादिति । यदपि परसाहचर्यस्य बलीयस्त्वादिति दिगिति मनोरमाप्रतीकमुपादाय-दिगर्थस्तु एतदर्थं पञ्चमीसमासस्यावश्यकत्वम्

तथाहि परसाहचर्यस्य बलवत्वे मानाभावः । विप्रतिषेधसूत्रे-कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमुचितत्वेनात्र प्राप्तेरित्याद्युक्तं नवीनैः । परश्चासौ व्यवस्थयेति । अचः परस्मिन्निति सूत्रस्थ-भाष्यविरोधापत्तेः । भवाञ्जरत्रि, विभाषा गमहनविदविशा-न्नुदात्तोदन्तेत्यादौ परसाहचर्यस्य स्वीकृतत्वाच्च । न च भाष्ये पञ्चमीसमासेन मथितिकेत्यस्य साधितत्वात्स आवश्यक इति वाच्यम् । तस्य तत्र ग्रहाभावात् ।

वस्तुतस्तु—इसुसुक्तान्तात्क इत्यत्राङ्गविशेषणात्तदन्तविधौ तान्तादिति लब्धेऽन्तग्रहणसामर्थ्यात्प्रत्ययोपदेशतान्तादित्यर्थला-भान्मथितिकेत्यादौ दोषो नास्तीति सिद्धान्तः । एवं च मनो-रमादिसकलग्रन्थनिर्वाहे तद्व्याख्यातुस्तद्विरुद्धकथनेन तद्दूषण-मनुचितमिति चेति दिक् ॥

मूले अड्व्यवाये इत्येवेति । अव्यवधानाभावेन (१)रषाभ्यामिति सूत्रेण न भवति किन्तु रषाभ्यामित्यनुवर्त्तमा-नेऽट्कुप्विति सूत्रेणेति भावः । नचैवं सति रषाभ्यामिति सूत्रे षकारग्रहणस्य वैयर्थ्यमिति शङ्कनीयम् । तस्य पुष्णातीत्यत्र चरितार्थत्वात् ।

पूर्वत्रासिद्धेनेति । अचः परस्मिन्नित्यतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वति-देशान्तराणां वतिघटितानां स्थानिवदादेशः । अन्तादिवच्च,

---

(१) रषाभ्यामितिसूत्रे समानपदग्रहणं रेफषकारान्यतरविशि-ष्टस्य नस्य णत्वं भवतीत्यर्थे तात्पर्यग्राहकं तथा च रामनाम-मातृ-भोगीणः गन्धर्वगानमृत्सर्वनरेणेत्यादिषु नाव्याप्त्यतिव्याप्ती वै० स्वो-त्तरत्वं स्वघटितपदाघटकत्वञ्चेत्युभयसम्बन्धेनेति बोध्यम् ।

एकदेशविकृतमनन्यवत् प्रत्ययलोप इत्यादीनां त्रिपाद्यां प्रवृत्ति-बोधनात् । एवं चान्तवद्भावेनैकारस्याऽदस्शब्दसम्बन्धित्वं पेशब्दस्यैकाद्युत्तरपदत्वं च स्वीकृत्य अमी, क्षीरपेण, इत्यादौ मीत्वणत्वयोः प्रवृत्तिरिति तत्त्वम् ॥

तस्य दोष इति । पूर्वत्रासिद्धेनेत्यस्य दोषो बोध्यः । एवञ्च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः । इदं च वाच-निकमेव । न च तस्य दोष इति वचनं न मुने इति योगविभाग-लभ्यमास्तामिति वाच्यम् । न मुने इति सूत्रे ने इति योगवि-भागस्य भाष्ये दर्शनाभावात् । सिज्लोप एकादेशे इत्यादिवा-र्तिककृदारम्भाच्चेति भावः ॥

ननु लघुत्वेन शसादाविति वक्तव्ये किमर्थं यत्नबाहुल्यमि-ति शंकमानम्प्रत्याह—प्रभृतिग्रहणं प्रकारार्थमिति । प्रकारः सादृश्यं तच्च सुप्त्वेन मांस्पचनीत्यादावपि न लुमतेति निषेधा नित्यत्वाच्छसादिपरत्वं बोध्यम् । शब्दत्वेन सादृश्यमित्यन्ये तन्न, वा शोकष्यञ्रोगेष्वित्यस्य शोकादीनामपि शब्दत्वाक्रान्तत्वेन वैयर्थ्यापत्तेः । न च सुप्त्वेन सादृश्यवादिमतेऽपि न लुमतेति निषेधानित्यत्वेन मांसस्पचनीत्यादेरिव हृच्छोक इत्यादेरपि सिद्धिर्भविष्यतीति वा शोकेति व्यर्थमिति वाच्यम् । अनित्य-स्यापि वचनस्य यत्र साधकं तत्र प्रवृत्तिरित्यभिप्रायेण वा शोकेत्यादिवचनचरितार्थ्यात् । शब्दत्वेन सादृश्ये नासिकाया यत्तस् क्षुद्रेषु नसितिभाष्यपठितवार्त्तिकस्य वै-यर्थ्यापत्तेश्च । आसन्यं प्राणमूचुरित्यत्रापि तद्वदेव शसादि-परत्वम् । अत्र सुप्रभृतिष्विति वक्तव्ये शस्प्रभृतिष्वित्युक्त्या-ऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते । अत एव पद्दन्निशां ग्रहणं

चरितार्थम्। तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यत्र-स्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रप्रवृत्तौ तस्याऽसम्भवेन तद्वैयर्थ्यं स्पष्टमेवेति भावः॥

परे तु शब्दत्वेनैव सादृश्यं न तु सुप्त्वेन। नचोक्तं वा शोकेत्यादिसूत्रवार्त्तिकयो वैयर्थ्यमिति वाच्यम्। शब्दत्वेन सादृश्यं क्वचिदेवेति ज्ञापनेन सूत्रवार्त्तिकयोः सार्थक्यात्। एवञ्च सर्व-त्रानित्यत्वे समाधानक्लेशोऽपि नेति लाघवम्। अन्यथा भवद्रीत्याऽत्रापि मांस्पचनीत्यादाविव विभक्तिपरत्वसम्भवेन वैयर्थ्ये तुल्यत्वात्। किञ्च पदाद्यादेशानां छान्दसत्वे लोके-प्रवृत्तिः काचित्की। तत्रापि सादृश्ये प्रवृत्तिरपि काचित्कीत्यु-भयत्रापि लक्ष्यैकचक्षुष्कताश्रयणे लक्षणैकचक्षुष्कतायामपि सिद्ध्यर्थं तदावश्यकत्वात्। वस्तुतस्तु अशसूप्रभृतिष्वपि ते ककुद्दोपणीत्यभिधानात्। कृते नस्मिन् लक्ष्यैकचक्षुष्कताया आवश्यकत्वेनाऽकृतेपि तस्मिन् तथैव सिद्धेरित्याहुः॥

केचित्त्वत्र शब्दत्वेनैव सादृश्यं न लुमतेति निषेधस्यानि-त्यत्वाद्प्रवृत्तिकल्पनापेक्षया सादृश्यप्रयोजकव्यापकधर्मकल्पना-यां गौरवाऽभावात्। एवं सति पदादीनामादेशत्वमेव। हृदस्य हृदिति सूत्रं तु नित्यार्थम्। वा शोकष्यञिति तु नियमार्थम्। एष्वेवोभयोः स्थान्यादेशयोः प्रयोगोऽन्यत्र स्थानिन एवेति। एवं नासिकाया नसित्यपि नित्यार्थमेव। तेन नासिका क्षुद्र इति न भवति। न च पदन्न इति सूत्रे सुप्रभृतिष्वित्येवास्त्विति वाच्यम्। असृक्यकृच्छकृच्छब्देभ्यः सोरन्तरङ्गानपीति न्याये-न लुकि कृते स्वादिपरत्वाभावेनाऽऽदेशाभावापत्तेरित्याहुः।

तत्रेदं चिन्त्यम्। शसः सुप्संज्ञायाः शास्त्रीयतया तेन रूपेण

सादृश्यकल्पनेऽक्लृप्तकल्पनाप्रयुक्तं गौरवं स्फुटमेव । किञ्च वा शोकेत्यस्य नियमार्थत्वकल्पनापेक्षया विधायकत्वे लाघवमेव । एवं च भाष्यरीत्या प्रकृत्यन्तरकल्पनमेव समुचितमिति तत्त्वम् ।

संख्याविसायेति । संख्याविसायेभ्य इति वक्तव्ये पूर्वग्रहणमुत्तरपद इत्यचि कृतस्य षष्ठ्यन्तत्वलाभाय । तथा च संख्यादिपूर्वस्योत्तरपदस्याहन्शब्दस्येत्यर्थः सम्पद्यते । द्वयोरन्होर्भवं इति तद्धितार्थेति समासः । राजाह इति टच् । अन्होऽन्ह एतेभ्य इति अन्हादेशः । कालाट्ठञो द्विगोर्लुगनपत्य इति लुक् । अन्हः साय इति । स्यते घञि निष्पन्नोऽवसानवाचकः साय शब्दः । संख्याविसायेति ज्ञापकादेकदेशिसमास इति । ननु प्रथमयोरिति सूत्रान्तरं लाघवाद्दीर्घाच्छसीति सूत्रमस्तु । प्रथमयोः पूर्वसवर्ण इत्यनेन सिद्धे दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इत्यर्थको नियमः । नादिचीत्यत इचीत्यपकर्षणार्थश्चकारोऽनुवर्तितो नकारश्च नाश्रयणीयः । किञ्च ङसि परेऽप्यातो धातोरित्यस्यैवात्र प्रवृत्तेरत्रानुपयुक्तं चेदं सूत्रमिति प्रकाशयन्नाह—यद्यपीत्यादि । नियमस्य फलं दर्शयति—गौर्यौ, गौर्य इति । इत्याद्यर्थमिति नियमत्वेन पूर्वसवर्णदीर्घनिवृत्त्यर्थमित्यर्थः ।

न्याय्यत्वादिति । जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः ।

आतो धातोः । आत इत्यस्य धातोर्विशेषणत्वाद्येन विधिरिति तदन्तविधिः । धातोरित्यधिकृताऽङ्गविशेषणत्वेन येन विधिरिति तदन्तविधिः । भस्येत्यधिकारः । अल्लोपोऽन इत्यतो लोपानुवृत्तिस्तदाह—आकारान्त इति ।

धातोः किम् । हाहान् । गन्धर्वविशेषवाचकमव्युत्पन्नं

प्रातिपदिकमिदम् । धातोरित्यनुक्त्वाऽऽकारान्तप्रातिपदिकस्यापि ग्रहणादत्र लोपो दुर्वारः । जहातीति हाहा इति रीत्याऽस्य क्रि-याशब्दत्वाङ्गीकारे तु वासुदेववाचकाऽशब्देन सहशब्दस्य समासे सानिति प्रत्युदाहरणं बोध्यम् ।

नागेशास्तु-( कृत्वः श्नः ) इत्यादिप्रयोगसिद्ध्यै वार्ति-ककृता कृतस्य ( आतो नाप ) इति वार्तिकस्य भाष्यकृता ( आत ) इति योगविभागाश्रयणेन प्रत्याख्यानकरणात्सा-शब्दस्य सत्यभिधाने पूर्वयोगेन लोपस्येष्टत्वे पूर्वयोगेनैव धातोरितियोगस्यापि कार्यनिर्वाहाद्धातुग्रहणस्याऽऽबन्तत्वनिवृ-त्त्यर्थत्वमाहुः ।

आत इति योगविभागादिति । ( आतो धातोरि ) त्यत्र योगविभागः । आत इत्येको योगः धातोरित्यपरो योगः । तत्र आकारान्तस्य भास्याङ्गस्य लोप इति पूर्वयोग-स्यार्थः । आत इत्यस्य सम्बन्धादाकारान्तो यो धातुरित्यादि-मूलोक्तो द्वितीययोगस्यार्थः । तथा च क्वचिदधात्वकारस्यापि लोप इत्यर्थस्य फलितत्वात् । ( कृत्व इट् ) ( हलः श्नः शान ज्झावि) त्यादिसूत्रे कृत्वः श्न इत्यादिसौत्रप्रयोगाणां सिद्धिरिति भावः ॥

यत्तु आचारक्विबन्तात्कर्तृक्विब्विधानादुक्तप्रयोगसिद्धिरिति तन्न । उक्तयुक्त्यैवोक्तप्रयोगसिद्धावेतादृशकष्टकल्पनाया अयु-क्तत्वात् । आचारक्विबन्तप्रकृतिककर्तृक्विपो भाष्यकृता क्वा-प्यनुक्त्या तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभाच्चेत्यलम् ।

हरिरिति । अकारादुपरि विसर्जनीयस्योपसंख्यानादच्-

त्वेन तस्मिन्परे रेफोत्तरेकारस्य यणादेशो नाशङ्क्यः। विसर्जनीयस्य यणादेशप्रत्यसिद्धत्वात्।

जसि च। (१) (ह्रस्वस्य गुण) इत्यनुवर्तते। अङ्गस्येत्यधिक्रियते। ह्रस्वस्याऽङ्गविशेषणत्वात्तेनविधिरिति तदन्तविधिस्तदाह-ह्रस्वान्तस्याऽङ्गस्येति।

ह्रस्वस्य गुणः। सम्बुद्धौ चेत्यतः सम्बुद्धाविति वर्तते। तदाह ह्रस्वस्य गुणः स्यात्सम्बुद्धाविति।

एङ्ह्रस्वादितिसम्बुद्धिलोप इति। सम्बुद्धेरेङः परत्वादित्यादिः। न च गुणात्प्राक् सम्बुद्धेर्ह्रस्वात्परत्वादेङः परत्वोक्तिरयुक्तेति वाच्यम्। परत्वाभ्यां सम्बुद्धिपरे गुणे कृते सम्बुद्धे र्ह्रस्वात्परत्वसंभवादिति भावः।

शेषोऽघ्यसखि। यूस्त्र्याख्यौ नदीत्यतो यू इत्यनुवर्तते। ङिति ह्रस्वश्चेत्यतो ह्रस्व इत्यनुवर्तते। शेषपदार्थो नदीसंज्ञकादन्यः। अनुवृत्तयूभ्यां शेषपदार्थस्य विशेषणत्वात्तदन्तविधिस्तदाह-अनदीसंज्ञकावित्यादि।

शेषः किम्। मत्यै। सूत्रे शेषग्रहणाऽभावेऽनदीसंज्ञकाविसर्थोलाभेम ङिति ह्रस्वश्चेतिनदीत्वपक्षेऽपि घित्वापत्त्या प्राप्ताडागमं बाधित्वा घेर्ङितीति गुणेऽयादेशे च मतये इति रूपापत्तिरतः शेषग्रहणम्। सत्यास्मिन्नुक्तार्थलाभेन तद्भिन्नस्यैव घित्वविधानान्नोक्तरूपापत्तिरिति भावः।

---

(१) नन्वत्र ञिति चेत्येवास्तु ह्रस्वग्रहणं चात्र नानुवर्तनीयमिति अबिभयुरित्यादावप्यनेनैव गुणसिद्धिरिति जुसि चेति सूत्रमपि न कर्तव्यं भवतीति चेन्न। जागृयुः भूयासुरित्यादावपि गुणापत्तिस्तदा स्यादिति तदाहतम्।

ननु शेषग्रहणाऽभावेपि मत्यै इत्यत्रानवकाशत्वान्नदीसंज्ञैव भविष्यति न घिसंज्ञेति शेषग्रहणं व्यर्थमत आह–एकसंज्ञाधिकारादिति । कडाराः कर्मधारय इत्येतत्पर्यन्तमाकडारादेका संज्ञेति सूत्रस्य बुद्धिस्थत्वादित्यर्थः ।

स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति तदर्थः । शेषग्रहणाऽसत्त्वेऽपि नदीघिसंज्ञयोः प्राप्तौ सत्यामनवकाशत्वात्परत्वाच्च नदीसंज्ञैवेति व्यर्थं शेषग्रहणं स्पष्टतया तदन्तविधिलाभार्थत्वेन सार्थकमिति (१)भावः ।

यूक्तिम् मात्रे । यु इत्यस्याऽनुक्तौ ह्रस्वऋकारान्तस्य मातृशब्दस्यापि घिसंज्ञापत्त्या गुणे मातरे इत्यनिष्टरूपापत्तिः । नच ऋतो ङीति सूत्रस्य ऋदन्तस्य ङिति गुणश्चेन्ङावेवेति नियमात्प्रकृते न दोष इति वाच्यम् । पित्रेत्यादावाङोनाऽस्त्रियामित्यनेन नाभावस्य दुर्वारत्वात् ।

आङो नाऽस्त्रियाम् । अत्र घेरिसतो घेरिति पञ्चम्यन्तस्यानुवृत्तिः । तस्मादिति परिभाषया परस्येत्यर्थलाभस्तदाह–घेः परस्येति । आङो ना पुंसीति तु न सूत्रयितव्यम् । तथा सति अमुना कुलेनेत्यत्र मुत्वस्याऽसिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपासिद्धेः । नच ने इत्यकारस्याऽविवक्षि-

---

(१) नच गवां पत्यै गृहस्य पत्यायित्यादौ पतिः समास एवेति नियमाद् घिसंज्ञाया अप्रवृत्तेस्तत्र नदीसंज्ञायाश्चारितार्थ्येन मत्यै इत्यादौ परत्वाद्घिसंज्ञा मा भूदित्येतदर्थं शेषग्रहणस्य अन्यार्थत्वसम्भवे स्पष्टार्थत्वकथनमयुक्तमिति वाच्यम् । ङितिपतिश्चेति वक्तव्ये नद्येकमुदाहरणामिति भाष्योक्त्या च ङिति ह्रस्वश्चेतिसूत्रस्य तथापिवैयर्थ्येन स्वविषये घिसंज्ञाया बाधेन पक्षे नदीसंज्ञा भविष्यतीति शेषग्रहणस्य स्पष्टार्थत्वकथनं मूलोक्तं सम्यगेवेति तत्त्वम्–

ततया नमुने इति निषेधेन नुमि मुत्वस्यासिद्धत्वाभावान्नुमोक्त-रूपोपत्तौ लाघवादुक्तविधमेवास्तु सूत्रमिति वाच्यम् । अमुना कुलेनेत्यस्योक्तरीत्या सिद्धत्वेऽपि अमुष्मै कुलायेत्यादेरसिद्ध्या-पत्तेः । तत्र स्मायादेशं वाधित्वा परत्वान्नुमः प्रवृत्तेः । अतो य-थोक्तमेव सूत्रमादरणीयम् ।

आङिति टासंज्ञा प्राचामिति । आङिति ङकारविशिष्टा टाविभक्तेः संज्ञा नत्वस्य ङकारस्येत्संज्ञा । प्राचाम् आचार्याणा-मितिशेषः । ङकारविशिष्टस्य संज्ञात्वे एव हरिणा मत्येत्यादौ न गुणः । रमे इत्यादौ च न याडिति बोध्यम् ।

अस्त्रियां किम् । मत्येति । सूत्रेऽस्त्रियामित्यनुक्तौ स्त्रिया-मपि नाभावस्य दुर्वारतया मतिनेति रूपापत्तिः स्यादिति भावः ॥

घेर्ङिति । सुपि चेत्यतः सुपीति, ह्रस्वस्य गुण इत्यतो गुण इति चानुवर्तते तदाह-घिसंज्ञकस्य ङिति सुपीति । सुपि किम् । पट्वी । सुपीत्यनुक्तौ पट्वीत्यत्रापि ङीषो ङित्त्वात्त-स्मिन्पटुशब्दोकारस्य गुणेऽवादेशे च पटवीति रूपापत्तिस्तदुक्तौ तु नेति भावः ।

अनङ्सौ । अनङित्यत्र नकारात्परोऽकार उच्चारणार्थो नतु ग्रहणार्थः । तस्य ग्रहणार्थत्वे नलोपानापत्तेः । साविति प्रथमैकवचनस्य ग्रहणं नतु सप्तमीवहुवचनस्य, असम्बुद्धाविति पर्युदासेन सम्बुद्धिभिन्नस्य सम्बुद्धिसदृशस्य प्रथमैकवचनस्यैव-सोः सम्भवात् । ननु सोर्डेत्येव लाघवादुक्तव्येऽनङ्विधानं व्यर्थमिति चेन्न । अन्यतोऽप्यनङ्भवतीसेतज्ज्ञापनार्थत्वेन सा-र्थक्यात् । ज्ञापनफलन्तु उशनदशब्दस्य सम्बुद्धावनङ्सिद्धिरू-पम्बोध्यमिति प्राञ्चः ।

नच सोर्डाविधाने ( ऋदुशनस्पुरुदंसोऽनेहसाञ्च )त्युत्त-रसूत्रेणाऽपि सोर्डाविधानापत्त्या उशनेत्यत्र ( सर्वनामस्थाने चाऽसम्बुद्धावि )ति दीर्घापत्तिः । पुरुदंसेत्यत्र च (सान्तमहत) इति दीर्घापत्तिश्च स्यादिति वाच्यम् । संज्ञापूर्वकविधेरनित्यत्वात् (अङ्गवृत्त) परिभाषया वोक्तदोषाऽनवकाशादिति तेषामाशयः । तच्चिन्त्यम् । अङ्गवृत्तपरिभाषाया अगतिकगतित्वात् । सो-र्डेति न्यासे पदमात्रालाघवाभावात् । डित्वसामर्थ्येन टिलोपक-ल्पने गौरवाच्च । उशनश्शब्दस्य वैकल्पिकानङ्विधानस्य वैक-ल्पिकलोपस्य च भाष्यानुक्तेश्चेति दिक् ॥

अलोऽन्त्यात्पूर्व उपधा । अल इति पञ्चम्या अन्त्या-दित्यनेन विशेषितत्वादाह—अन्त्यादल इति । अत्राल इत्यनु-ऽक्तौ शिष्टः शिष्टानित्यादावन्त्यसंघातपूर्ववर्त्तिनः शकारस्योप-धासंज्ञायां ( शास इदङ् हलोरि )त्यनेन शकारस्येत्वापत्ति-स्तद्व्यावृत्तयेऽल उपादानम् । ननु अल उपादानेऽपि अन्त्या-लः पूर्वसङ्घातस्योपधासंज्ञायां शकारविशिष्टाऽकारस्येत्वापत्त्या-ऽतिप्रसङ्गस्य तादवस्थ्यमेवेति चेन्न । लोकेऽमीषां ब्राह्मणाना-मन्त्यात्पूर्व आनीयतामित्युक्त्या यथा जातीयकस्यान्त्यात्पूर्वस्या-नयनं तथा प्रकृतेऽप्यलात्मकस्यान्त्यस्य सत्त्वेन तत्पूर्वकस्याप्य-ल एव ग्रहणादित्यभिप्रेत्याह—पूर्वो वर्ण इति ।

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् । ननु सूत्रस्थं दीर्घादितिपदं ङ्याब्भ्यामेव सम्बध्यते न तु हला तस्य दीर्घ-त्वाऽभावेनाऽसम्भवात् ( सम्भवव्यभिचाराभ्यां स्याद्विशेषण-मर्थवदि )त्यभियुक्तोक्त्या सम्भवव्यभिचारसद्भाव एव विशे-षणस्य युक्तत्वप्रतिपादनात् । तदाह—दीर्घौ यौ ङ्यापाविति ।

ङ्याप्पाविति ( तस्मादि )तिपरिभाषोपस्थापितपरपदविशेषणं न तु विहितविशेषणम् । न च ङ्यापोर्विहितविशेषणत्वमेव कुतो नेति वाच्यम् । तत्र विनिगमकाभावात् । स्त्रियां यत्तत्कि-म्बदानां प्रथमैकवचने या सा केत्यादौ सोर्हलन्ताद्विहितत्वेनाऽऽब-न्तादविहितत्वाल्लोपानापत्तेश्च । नचोक्तस्थले सोराबन्तादवि-हितत्वेऽपि हलन्ताद्विहितत्वस्य निराबाधात्वेनैव लोपनिर्वाहे लो-पानापत्तिप्रदर्शनमयुक्तमिति वाच्यम् । हलन्ताद्विहितत्वमादाय त-त्र निर्वाहे यः स इत्यादावपि सोर्हलन्ताद्विहितत्वेनाऽतिव्या-प्त्यापत्तेः । कर्तृसखिशब्दाभ्यां प्रथमैकवचने कर्ता सखेत्यादौ सोर्हलन्तादविहितत्वेनाऽव्याप्त्यापत्तेश्च । न च त्यदादीनामो-ऽनङ्साविति सूत्रद्वये विभक्तौ सावित्युभयत्र विषयसप्तम्यङ्गी-कारे विभक्तिविषयेऽत्वं सुविषये चानङित्यर्थे विभक्तेः सोश्चाऽ-भावेऽप्युभयकार्यस्य जायमानत्वादेकत्राऽऽबन्तद्विहितत्वस्या-ऽपरत्र हलन्ताद्विहितत्वस्य च सोः सत्त्वेन या सेत्यादौ कर्ता सखेत्यादौ च नोक्तदोष इति वाच्यम् । उक्तरीत्योक्तस्थलीय-दोषपरिहारेऽपि बहुश्रेयसीत्यत्र सोर्ङीपो विहितत्वेनाऽव्याप्त्या-पत्तेः । अतो विहितविशेषणं नाऽभ्युपगन्तव्यमिति भावः ॥

हल्ङ्याब्भ्यः किम् । ग्रामणीः । सूत्रे हलादित्रयाग्रहणे ग्रामशब्दोपपदान्नयतेः क्विपि निष्पन्ने ग्रामणीरिति प्रयोगे सो-र्दीर्घात्परत्वेन लोपापत्तिः । तद्ग्रहणे तु सोर्हलो ङ्याब्भ्यां चापरत्वान्नोक्तापत्तिरिति भावः ॥

दीर्घात्किम् । निष्कौशाम्बिः । अतिखट्वः । दीर्घा-दित्यस्याऽभावे ङ्यन्तादाबन्ताच्च परस्य सोर्हलो लोप इत्यर्थे कौशाम्ब्या निष्कान्त इति विग्रहे ( निरादयः क्रान्ताद्यर्थे पञ्च-

ख्या ) इति समासे ( गोस्त्रियोरि ) ति ह्रस्वे च निष्पन्ने नि- ष्कौशाम्बिरिति प्रयोगे। एवं खट्वामतिक्रान्त इति विग्रहे ( अ- त्यादयः क्रान्ताद्यर्थे द्वितीयया ) इति समासे ( गोस्त्रियोरि )ति ह्रस्वे च निष्पन्ने अतिखट्व इति प्रयोगे च स्थानिवत्त्वेन पूर्वत्र- ङ्यन्तत्वस्य परत्रचाऽऽबन्तत्वस्य सत्त्वेन सोर्लोपो दुर्वारः। ननु समस्तस्य ङ्याबन्तत्वाऽभावान्नात्र कश्चिद्दोषः। नच ( स्त्री- प्रत्यये चानुपसर्जनस्ये ) ति परिभाषया तदादिनियमाऽभावेन समस्तस्य ङ्याबन्तत्वं सुलभमेवेति वाच्यम्। अनुपसर्जने तदादिनियमाभावेऽप्युपसर्जने तदादिनियमस्य सत्त्वात् अन्यथाऽतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदलक्षण- सम्प्रसारणस्यातिप्रसङ्गादिति चेन्न। समस्तस्य ङ्यावन्त- भिन्नत्वेऽप्युत्तरपदस्य ङ्यावन्तत्वेन ततः परस्य सोर्लोपस्य दीर्घग्रहणसत्त्वे दुर्वारत्वात्। न च विहितविशेषणस्वीकारे सोर्ङ्यावन्तात्परत्वेऽपि ततोऽविहितत्वान्न दोष इति वा- च्यम्। अचिरमेव विहितविशेषणानङ्गीकारस्याऽभिहितत्वात्। अतो ङ्याब्ग्रहणं परविशेषणमेवाभ्युपगन्तव्यम्। ननु तस्य प- रविशेषणत्वे आत्मनो गङ्गामिच्छति गङ्गीयति ततः क्विप्। अ- ल्लोपे यलोपे च गङ्गीरिति सिद्धम्। अत्र ईकारस्य स्थानिव- द्भावेनाऽऽप्त्वाद्दीर्घत्वस्य च स्वाश्रयत्वात्सुलोपो दुर्वारः। न- चाऽल्लोपस्य स्थानिवत्वेन सोरापः परत्वाऽभावान्न लोप इति वाच्यम्। ( क्वौ लुप्तं न स्थानिवदि ) त्यनेन स्थानिवत्त्वस्य नि- षेधादिति चेन्न। ङी ई आ आविति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानादिहाऽऽरूपस्याऽऽप्त्वाभावेनादोषात्। एवञ्च ङ्या- ब्ग्रहणस्य परविशेषणत्वमेव सुस्थिरमिति दिक्।

अपृक्तं किम्। बिभर्त्ति। सूत्रेऽपृक्तग्रहणाऽसत्त्वे वि-

भर्त्तीत्यत्र रेफात्मकहलः परस्य तिपस्तकारस्य लोपापत्तिः। सत्यपृक्तग्रहणे तु तकारस्याऽपृक्तत्वाभावान्न लोप इति दीक्षिताशयः। तन्न रमणीयम्। इकारविशिष्टतकारस्याऽहल्त्वेन लोपाप्राप्तेः न च सुतिस्यपृक्तमित्यत्र सुतिसीनामपृक्तमिति षष्ठीसमासे सुतिसीनां सम्बन्धि अपृक्तं हल् लुप्यत इत्यर्थे लोपप्राप्तिरस्त्येवेति वाच्यम्। क्लिष्टव्याख्यानाश्रयणेन दोषप्रदानस्याऽयुक्तत्वात्। एवञ्चाऽपृक्तग्रहणमकिञ्चित्करं बोध्यम्। न च सुरां सुनोतीति सुरासुत् तमाचष्टे सुरासयति ततः क्विप् सुराः सुरासौ सुरास इत्यादौ सुनोतेरवयवस्य सस्य लोपवारणार्थमपृक्तग्रहणं सफलमिति वाच्यम्। परस्परसाहचर्यात्सुतिसीनां विभक्तीनामेव ग्रहणात्। न च साहचर्यग्रहणस्य काचित्कत्वेन विभक्तिभिन्नानामपि ग्रहणादुक्तस्थले दोषवारणायापृक्तग्रहणमावश्यकमिति वाच्यम्। तथा सति अभैत्सीदित्यादौ सिचो लोपस्य दुर्वारत्वात्। प्रत्ययाप्रत्यययोर्मध्ये प्रत्ययस्यैव ग्रहणाच्च। न च (तित्स्वरितमि) तिसूत्रे कैयटे (प्रत्ययाप्रत्यययोरि) तिपरिभाषानाश्रयणस्य प्रतिपादनादपृक्तग्रहणस्य साफल्यमस्तीति वाच्यम्। अङ्गस्येति सूत्रस्थभाष्ये तस्याः पठितत्वेन स्वयमपि तथैव तस्या व्याख्यातत्वेन चानाश्रयणोक्ते र्भ्रान्तत्वात्। एवञ्चापृक्तग्रहणं चिन्त्यप्रयोजनमेवेति ध्येयम्॥

ननु (संयोगान्तस्ये)तिसूत्रेणैव हलन्तशब्देभ्यः सुलोपसिद्धाविह प्रथमहल्ग्रहणं व्यर्थमित्यभिप्रेत्य शङ्कते-प्रथमहल् किमिति। समाधत्ते-राजा। नलोपो न स्यात्संयोगान्तलोपस्याऽसिद्धत्वादिति। अयम्भावः। सूत्रे हलोऽग्रहणे राजेत्यत्र नलोपदृष्ट्या संयोगान्तलोपस्य सिद्धत्वाभाववत्त्वान्नलोपानापत्तिः स्यात्। तस्य ग्रहणे तु प्रकृतसूत्रेण तत्र

सुब्लोपेऽस्य नलोपदृष्ट्या नासिद्धिरिति न दोष इति। न च (न ङि सम्बुद्ध्योरि)ति सूत्रस्थसम्बुद्धिग्रहणज्ञापकात् नलोपे कर्तव्ये संयोगान्तलोपस्य नासिद्धिरिति ज्ञापनान्न दोष इति वाच्यम्। तथा सति गोमानित्यादावपि नलोपापत्ते र्दुर्वारत्वात्। नच नकारविभक्त्योरानन्तर्यसत्त्वे एव संयोगान्तलोपसिद्धिकल्पनया गोमानित्यादावानन्तर्याभावान्नलोपो नेति वाच्यम्। क्लीबे हे ब्रह्मन्नित्यत्र नलोपाभावाय सम्बुद्धिग्रहणस्यावश्यकत्वेनोक्तार्थे ज्ञापकत्वाभावेन राजेत्यत्रैवोक्तदोषस्य पुनरागमात्। न च क्लीबे (सम्बुद्धौ नपुंसकानामि)तिवार्तिकेन वैकल्पिकनलोपस्येष्टत्वावधारणात्सम्बुद्धिग्रहणस्य ज्ञापकत्वे ज्ञापकस्य च विशेषविषयत्वे च बाधकाभावात्। तस्मात्प्रथमहल्ग्रहणस्य राजेत्यत्र नलोपानापत्तिरूपं न प्रयोजनमित्यवधेयम्। किन्तु अभिनोऽत्रेत्यत्र सिपि परे दश्चेति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे. तस्याऽसिद्धत्वाद्रोरुत्वानापत्तिरूपम्। एवम् अबिभर्भवान् अजागर्भवान् इत्यत्र तिपस्तकारस्य संयोगान्तलोपानापत्तिरूपश्च प्रयोजनम्। अत्र हि (रात्सस्ये)तिसूत्रेण रेफात्परस्य संयोगान्तसकारस्यैव लोपविधानान्न तिपस्तकारस्य संयोगान्तलोपप्रसक्तिरिति भावः।

तदुक्तमभियुक्तैः—

संयोगान्तस्य लोपे हि नलोपादि र्न सिद्ध्यति।
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते॥

इति।

इदमत्रावधेयम्। व्याख्यानात् (द्विहल्पृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवती)तिप्रकृतसूत्रस्थभाष्यप्रामा-

ण्याच्च प्रकृतसूत्रे ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः। एतयोरपि विशेषणत्वे तु भाष्यकर्त्तुः तिस्योर्ग्रहणस्याकर्तव्यत्वोक्तिर्न स्यात्। तेन मालेवाचरद् अमालात् गङ्गेवाचरद् अगङ्गात् इत्यादौ न तिलोपातिप्रसङ्गः। तथा च हलन्तात्परं सुतिसीत्येतदपृक्तं हल् लुप्यते, दीर्घौ यौ ङ्यापौ तदन्तात्परं सु तिसीत्येतदपृक्तं हल् लुप्यते इति सूत्रस्यार्थः सम्पन्नः॥

यत्तु-( सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदि )त्यभियुक्तोक्त्या सम्भवव्यभिचारसद्भाव एव विशेषणस्य सार्थक्यात् प्रकृतेऽसम्भवादेव ङ्याब्ग्रहणं तिस्योर्विशेषणन्नेति। तन्न, तत्र तिस्योर्ङ्यन्तात्परत्वाऽसम्भवेऽपि तयोराबन्तात्परत्वस्य सम्भवात्। तथा हि, आचारक्विबन्तादाबन्तात् गङ्गारूपप्रातिपदिकधातो र्लङि तिपि सिपि च अगङ्गात् अगङ्गा इति। न चात्र शपा व्यवायेन तिस्योराबन्तात्परत्वाऽभावान्न तिलोपातिप्रसङ्ग इति वाच्यम्। ( अन्तादिवच्चे )ति सूत्रेण सवर्णदीर्घैकादेशे पूर्वान्तवद्भावेनाप्त्वाश्रयणादुक्तदोषस्य दुर्वारत्वात्। न चैकादेशस्य पूर्वान्तत्वात् बुद्धावित्यादावपि पूर्वान्तवद्भावेनेकारान्तत्वादेव दोषाऽप्रसक्त्या बुद्धावित्यादौ (सन्निपातपरिभाषया) टाप् नेति भाष्यविरोधः स्यादिति वाच्यम्। दीर्घप्रवृत्त्युत्तरमन्तादिवद्भावस्य प्रवृत्तावपि टाबुत्पत्तिकालिकानन्तर्यविघातस्य पूर्वान्तवद्भावेन वारयितुमशक्यत्वात्। शास्त्रीयस्यैवान्तादिवद्भावेनातिदेशात्सन्निपातस्य चाऽशास्त्रीयत्वात्तेनातिदेष्टुमशक्यत्वाच्च। न च ( अचः परस्मिन्नि )त्यनेन स्थानिवद्भावात्तिस्योराबन्तात्परत्वमस्तीति वाच्यम्। (१) अपूर्वविधित्वेन

(१) अपूर्वविधित्वनेति। स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्य एव स्थानिवद्भावो भवति प्रकृते तथा नास्तीति भावः

स्थानिवद्भावाऽप्रवृत्तेः । न च पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति । पञ्चमीसमासाश्रयणात्स्थानिवद्भावप्रवृत्तिरस्त्वेवेति वाच्यम् । प्रविगणय्येति भाष्योदाहरणात्पञ्चमीसमासस्याऽनित्यत्वेनेहाऽनाश्रयणादित्यलम् ॥

अत्रेयं सारः । ङ्यापः सोरित्येव सूत्रमुचितम् । ङ्यन्तादावन्तात्परस्य सोर्लोप इति तदर्थः । नचैवं सूत्रकरणे सुरां सुनोतीति सुरासुत् तमाचष्टे सुरासयति ततः क्विपि सुराः सुरासाविसादावावन्तात्सुराशब्दात्परस्य धातोः सकारस्य लोपापत्तिरिति वाच्यम् । ( सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमि )तिपरिभाषया ङ्याब्भ्यां साहचर्येण ( प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमि ) तिपरिभाषया च प्रत्ययस्यैव ग्रहणेन धातुसकारे लोपानतिप्रसक्तेः । न च ङ्यापः सोरिति सूत्र करणे राजेत्यादौ सुलोपो न स्यादिति वाच्यम् । तत्र (संयोगान्तस्य लोप ) इति सूत्रेणैव निर्वाहात । नच संयोगान्तलोपस्य नलोपदृष्ट्याऽसिद्धत्वेन तत्र कर्तव्ये संयोगान्तलोपस्यासिद्धत्वान्नलोपो न स्यादिति वाच्यम् । ( न ङिसम्बुद्ध्योरि )तिसूत्रस्थसम्बुद्धिग्रहणान्नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावकल्पनेनाऽदोषात् । न च अभिनोऽत्रेत्यादौ ( संयोगान्तस्ये )तिसूत्रेण सिपः सकारस्य लोपे ( दश्चे )तिसूत्रेण दकारस्य रुत्वे तस्योत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वादुत्वं न स्यादिति वाच्यम् । ( संयोगान्तलोपो रोरुत्वे ) इति सिद्धकाण्डे पाठेन (१)हरिवो मेदिनं त्वेत्यत्रेव रोरुत्वे कर्तव्ये संयोगान्तलोपस्य सिद्धत्वादुत्वाद्यनापत्तिरूपापत्तेरयोगात् । न च

(१) हरिशब्दान्मतुपि ( छन्दसीर ) इति वत्वे नुमि संयोगान्तलोपे ( मतुवसोः ) इति रुत्वे उत्वे गुणे च सिद्धिः ।

( हल्ङ्याब्भ्य ) इति यथाश्रुतसूत्रसत्त्वे अविभर्भवानित्यादौ तिलोपो भवति ( ङ्यापः सोरि ) ति सूत्रकरणे तु तत्र तिलोपो न स्यादिति वाच्यम् । तत्रापि संयोगान्तलोपेनैव निर्वाहात् । न च ( रात्सस्ये ) तिसूत्रेण रेफात्परस्य संयोगान्तसकारस्यैव लोपविधानेन प्रकृते तदभावान्न तेन निर्वाह इति वाच्यम् । ( रात्सस्ये ) त्यत्र तकारस्यापि प्रश्लेषेण रात् त्सस्येति (१)च्छेदात्संयोगान्तलोपेनैव निर्वाहात् । नच (हल्ङ्याब्भ्य) इति सूत्रसत्त्वे उखास्रदित्यादौ सोर्लोपे संयोगत्वाऽभावात् ( स्कोरि ) ति संयोगादिलोपो न भवति ( ङ्यापः सोरि ) ति सूत्रसत्त्वे तु ( स्कोरि ) ति सूत्रेण संयोगादिलोपः स्यादिति वाच्यम् । दत्वसंयोगादिलोपयोः प्राप्तौ प्राक् ( वसुस्रंसुध्वंस्वनडुहामि )तिसूत्रेण धातोः सकारस्य दत्वे कृते संयोगादिलोपाप्राप्तेः । न च संयोगादिलोपदृष्ट्या दत्वस्यासिद्धत्वादुक्तदोषो दुर्वार एवेति वाच्यम् । सिद्धकाण्डे ( वस्वादिषु दत्वमि ) तिपाठादसिद्धत्वाऽभावेन संयोगादिलोपाप्राप्तेः । न च पदान्ते दत्वस्य विधानादिहाऽपदान्तत्त्वेन दत्वाऽप्राप्त्योक्तदोषस्य तादवस्थ्यमेवेति वाच्यम् । (असर्वनामस्थाने यचि) इति च्छित्वा यजादौ सर्वनामस्थाने पदं नेति व्याख्यानात्मकप्रमाणेन सावपि पदत्वं भवतीति पक्षाश्रयणाद्दत्वे बाधकाऽभावेनाऽदोषात् । न च सावपि पदं भवतीति पक्षाश्रयणे राजेत्यादौ नलोपे कृते सति संयोगान्तलो-

---

(१) ननु त्सस्येति च्छेदे रेफात्परतकारलोपस्येष्टत्वे कीर्त्तयतेः क्विपि विचि वा तलोपापत्तिरिति चेन्न । तस्मात्क्विब्विचोरनभिधानादेवादोषात् न च वृते यँङ्लुकि लङि तिपि ईडभावे तकारलोपापत्तिरिति बाच्यम् । अस्यापि प्रयोगस्यानभिधानात् ।

पस्याऽसिद्धत्वात्सो रुत्वविसर्गौ दुर्वाराविति वाच्यम् । ( इतो-ऽत्सर्वनामस्थाने इत्यनेनैव सिद्धे ( पथिमथ्यृभुक्षामादि )तिसूत्रे-णाऽऽकारविधानसामर्थ्यान्नलोपापेक्षया प्राक् सुलोपस्यैव ज्ञा-पनेनोक्तदोषाभावात् । न च सम्बुद्धौ हे पन्थाः मन्थाः ऋभु-क्षा इत्यादौ असम्बुद्धाविति पर्युदासेन दीर्घाप्राप्त्या न ङिस-म्बुद्ध्योरिति निषेधेन नलोपाप्राप्त्या च ( पथिमथी ) त्याका-रविधानस्य चरितार्थत्वेनोक्तज्ञापने ज्ञापकत्वं न सम्भवतीति-वाच्यम् । एवं तर्हि नलोपविषये विभक्तिसंयोगान्तलोपस्यासि-द्धत्वन्न भवतीत्यर्थज्ञापनद्वारा नलोपात्प्राक् संयोगान्तलोप इत्यर्थज्ञापने ( न ङिसम्बुद्ध्योरि ) तिसूत्रस्यैव ज्ञापकत्वात् । तथा हि ( न ङिसम्बुद्ध्योरि )तिसूत्रे ङिसम्बुद्ध्योरिति षष्ठी न तु सप्तमी । ( सम्भवति सामानाधिकरण्ये वैयधिकरण्यम-न्याय्यमि ) त्यभियुक्तोक्त्या सामानाधिकरण्येनान्वयात् ङ्य-न्तस्य प्रातिपदिकस्य सम्बुद्ध्यन्तस्य च प्रातिपदिकस्य नस्य लोपो नेत्यर्थे संयोगान्तलोपं विना प्रथमं सम्बुद्ध्यन्तप्राति-पदिकत्वाऽलाभान्नलोपाप्राप्त्या तदर्थं कृतमिदं सूत्रमुक्तार्थे ज्ञापकमिति । एवं च ( ङ्यापः सोरि )ति न्यासे न कोऽपि दोषः ॥ ( वस्वादिषु दत्वमि )तिवार्त्तिकप्रत्याख्याने तु उखास्रादित्यादावधातुग्रहणेनैव दीर्घाभावस्तथा च ( हल्ङ्यापः सोरि )त्येवास्तु सूत्रम् । अत एव सुपीरित्यादिसिद्धिः । अन्यथा पदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वेन संयोगादिलोपप्रवृत्तौ ( र्वोरि )ति दीर्घो न स्यात् । न च सस्य पदान्ते संयोगादिलोपो न स्यादिति वाच्यम् । धातुसम्ब-न्धिपदान्तसस्य दत्वरुत्वविधायकेन ( तिप्यनस्तेः ) ( सिपि धातोरुर्वे ) ति सूत्रद्वयेन कसाहचर्येण च प्रकृतिप्रत्ययसम्बन्धि-

वर्णसंयोगाश्रयणेन सस्य पदान्ते संयोगादिलोपप्रवृत्तिकल्पने लाघवाभावादित्यलम् ॥

ख्यत्यात्परस्य । ननु ख्यत्यादिति पञ्चमीनिर्देशेन ( तस्मादित्युत्तरस्ये ) तिपरिभाषयैव परस्येत्यर्थलाभसम्भवे सूत्रे परस्येति ग्रहणं व्यर्थमिति चेन्न । ( एकः पूर्वपरयोरि ) त्यस्य निवृत्तिध्वननार्थत्वेन तस्य सार्थक्यात् । ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्यं तस्मात् । उच्चारणार्थाकारेण कृतयणादेशयोः प्रयोगस्थयोः ख्यत्यशब्दयोरनुकरणादविशेषेणोभयोर्ग्रहणम् । न च यत्र यणः प्रवृत्तिस्तत्रैवोत्वमतो नातिसखेरित्यादावुत्वमिति कृतयणादेशनिर्देशस्य प्रयोजनसद्भावादुक्तनिर्देशो ह्रस्वदीर्घयोर्ग्रहणे प्रमाणं न स्यादिति वाच्यम् । निर्देशस्य साधारण्येनोभयोर्ग्रहणे बाधकाऽभावात् शास्त्रस्याधिकविषयत्वसम्भवे तत्संकोचकरणस्याऽयुक्तत्वाच्चेत्याह—खितिशब्दाभ्यां खीतिशब्दाभ्यामिति ॥

ननु ( औदि )तिसूत्रस्य नदीसंज्ञकेषु ( इदुद्भ्यामि )ति पूर्वसूत्रेण बाधात् घिसंज्ञकेषु च ( अच्चघेरि )त्युत्तरसूत्रेण बाधादुक्तसंज्ञाद्वयशून्योऽस्य विषयः । न च तादृश उकारोऽस्तीत्यत आह-उकारानुवृत्तिरुत्तरार्थेति । यत्तु प्राञ्चः, घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्यां परस्य ङेरौदिति सूत्रार्थमाहुस्तदयुक्तम् । उक्तसंज्ञाद्वयवर्जितोकारस्याऽप्रसिद्धेरिति ॥

ननु शोभनः सखा सुसखेत्यादौ प्रादिसमासे ( राजाहःसखिभ्यष्टच् ) इति टचि सुसख इतिरूपस्येष्टत्वे सुसखेति मूलोक्तिरसंगतेति चेन्न ( न पूजनादि ) तिनिषेधेन टचोऽप्रवृत्त्या मूलोक्तेः सङ्गतत्वादित्याह—शोभनः सखा सुसखेति ।

एवमतिसखेत्यत्रापि टचोऽप्रवृत्ति र्बोध्या ॥

ननु ( अनङ्सावि ) तिसूत्रे सखिशब्दस्य ग्रहणात्तस्यैवा-नङादिकार्यस्येष्टत्वन्नतु सुसखिशब्दस्य सूत्रे तस्याग्रहणा दितिपूर्वपक्षं वारयितुमाह–अनङ्णिद्वद्भावयोराङ्गत्वात्तद-न्तेऽपि प्रवृत्तिरिति । अयम्भावः, ( पदाङ्गाधिकारे तस्य च तदन्तस्य च ) तिपरिभाषया पदाधिकारीयाऽङ्गाधिकारी-यकार्ययोः सूत्रोपात्तसजातीयस्य सूत्रोपात्तान्तसजातीयस्य च बोधनादनङादिकार्यस्याङ्गाधिकारीयत्वेनाऽङ्गस्याधिकारात्तम्प्रति सखिशब्दस्य विशेषणत्वात् ( येन विधिरि )तिसूत्रेण तद-न्तविधौ सखिशब्दस्य सखिशब्दान्तस्य चाऽनङित्यर्थे सुसखि-शब्देऽप्यनङादिकार्यं सुलभमेवेति ॥

ननु असमर्थसमासदोषापत्तिभिया ( शेषोऽघ्यसखी )ति-सूत्रेऽसखीत्यत्र प्रसज्यप्रतिषेधानाश्रयणेन पर्युदासस्यैवाश्रय-णात् तस्य च सदृशग्राहित्वात्सखिभिन्नसखिसदृशशब्दघटकह्रस्वे-कारोकारान्तस्य घित्वमित्यर्थे सुसखिशब्दस्य सखिभिन्नत्वात्स-खिसादृश्याच्च घिसंज्ञा स्यादेव । न च समुदायस्य सखिभिन्नत्वे-ऽपि सखिशब्दान्तभिन्नत्वाभावात्कथमसखीतिनिषेधाप्रवृत्तिरि-ति वाच्यम् । विशेष्यपदस्यासन्निधानात् (येन विधिरि)तितद-न्तविधेरप्रसक्त्या सखिशब्दान्तभिन्नस्येत्यर्थाभावादुक्तनिषेधाप्रवृ-त्तौ बाधकाऽभावादित्यभिप्रेत्याह·समुदायस्य सखिरूपत्वा-ऽभावेनासखीति निषेधाप्रवृत्तेर्घिसंज्ञेति ।

शेखरकृतस्तु-( शेषोऽघ्यसखी ) तिसूत्रे पक्षद्वयम् । एको वर्णसंज्ञापक्षो द्वितीयस्तदन्तसंज्ञापक्षश्च । तत्र वर्णसंज्ञापक्षे असखीत्यस्य सखिभिन्नावयवावित्यर्थः अत्र पक्षेऽसखीतिपर्यु-

हासेन सखिभिन्नप्रातिपदिकान्त्यवर्णादेरेव ग्रहणात् कृतं सख्ये-ति वाक्ये न घिसंज्ञापत्तिदोषः । सिद्धान्तिसम्मते तदन्तसंज्ञा-पक्षे तु सखिभिन्नौ ह्रस्वौ याविदुतौ तदन्तं घिसंज्ञमित्यर्थः । विशेष्यवाचकपदासान्निध्यात्तदन्तविधेरप्रसक्त्या न ( पर्युदस्य-मानसमर्पकसखिशब्दे ) तदन्तग्रहणमित्येतत्सर्वं हरदत्तानुरोधेन बोध्यम् ॥

( यस्येति चे )तिसूत्रभाष्यादेतत्पंक्तेरयमभिप्रायो ल-भ्यते । तथा हि–पिण्डशब्दोपपदाद् ( ग्रसु-ग्लसु अदने ) इत्य-स्माद्धातोः क्विपि निष्पन्नस्य पिण्डग्रस्शब्दस्य प्रथमैकवचने पिण्डग्र इत्यादौ दीर्घाऽभावाय यथा ( अत्वसन्तस्य चाऽधातो-रि)तिसूत्रेऽधातोरित्येतद्घटकधातुपदस्य धात्ववयवे लक्षणा भाष्यसम्मताऽभ्युपगम्यते तथा प्रकृते ( शेषोऽघ्यसखी ) ति सूत्रेऽसखीत्येतद्घटकसखिशब्दस्य तदवयवे लक्षणाभ्युपगमात् सख्यवयवभिन्नयोरिवर्णोवर्णयोरित्यर्थः ।

गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते ।

इति न्यायानुरोधेन(उतश्च प्रत्ययादसंयोगोपधादि)तिसूत्रे उत इत्यस्य प्रत्ययादित्येतत्प्रति विशेषणत्वमिव तदन्तसंज्ञापक्षेऽप्यस-खीत्यस्य घ्योरेव विशेषणत्वन्ततस्तदन्तविधिः । तथा च सख्य-वयवभिन्नेवर्णाद्यन्तमित्यर्थः । एवञ्च प्रकृते सुसखिशब्दघटकेका-रस्य सखिशब्दावयवत्वात्सखिशब्दावयवभिन्नत्वात्सूत्राऽप्रवृत्त्या नैव घिसंज्ञालाभ इत्यवसेयम् ।

( यस्येति चे )तिसूत्रस्थभाष्यग्रन्थस्वरूपन्तु ( इवर्णस्य किमुदाहरणम् अतिसखेरागच्छतीति ) अस्यायम्भावः, सूत्रे इकारग्रहणाभावे सखीमतिक्रान्तोऽतिसखिस्तस्मादतिसखेरित्य-

त्रेकारलोपो न स्यादत इकारग्रहणम् तस्मिंश्च सति न-तत्रेकार लोपानापत्तिरूपो दोषः । ननु मास्त्विकारलोपः को दोष इति चेन्न । असतीकारलोपे सखिशब्देकार-ङीष्प्रत्ययेकारयो र्द्वयोः सवर्णदीर्घे कृते ( पूर्वान्तवद्भावेन सखिशब्दत्वादसखीति-निषेधप्रवृत्त्या घिसंज्ञानापत्तेः । नच ( लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि )तिपरिभाषयाऽसखीत्यत्र प्रतिपदो-क्तस्यैव सखिशब्दस्य ग्रहणादस्य च सखिशब्दस्य लाक्षणिक-त्वेन तत्राग्रहणान्न दोष इति वाच्यम् । अतिदेशविषये ( लक्षण-प्रतिपदोक्त )परिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि घिसंज्ञानापत्तिरूपोक्तदोषस्य तादवस्थ्यात् । नचेकारस्य लोपे कृते कथमुक्तसञ्ज्ञासिद्धिरिति वाच्यम् । सति लोपे तु अति-देशस्याऽविषयत्वाल्लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तौ बाधकाऽभा-वेन तयाऽसखीत्यत्र प्रतिपदोक्तसखिशब्दस्यैव ग्रहणबोधनादति-सखेरागच्छतीत्यत्र सखिशब्दस्य च लाक्षणिकत्वेनाग्रहणादुक्तसंज्ञा-सुलभत्वात् । भवद्रीत्या तु अतिसखीतिसमुदायस्य सखिभिन्न-त्वाद्घिसंज्ञायां बाधकाऽभावाद्भाष्यकृदुक्तेरसङ्गतिः स्यात् । न-चेकारस्य लोपेऽपि (लक्षणप्रतिपदोक्त)परिभाषया सखिशब्दग्र-हणेन सखीशब्दस्यापि ग्रहणादसखीतिपर्युदासेन घिसंज्ञा न स्यादिति वाच्यम् । प्रातिपदिकत्ववदुपस्थापकपदोपादानस्यैव हि प्रातिपदिकग्रहणशब्देन प्रसिद्धतया प्रकृते सखिशब्दस्य स-ख्यवयवपरत्वेन प्रातिपदिकग्रहणाभावादुक्तपरिभाषाऽप्रवृत्त्या सं-ज्ञासिद्धेः । नच ( प्रतिपदोक्त )परिभाषयाऽसखीतिनिषेधाऽप्र-वृत्तिरिव ( सखि पतिभ्यामि )त्येवोच्यमानेऽप्यतिसखेरि-त्यत्रातिप्रसङ्गाभावात् ( किमर्थं विकृतनिर्देशो न सखिपतिभ्या-मित्येवोच्येत-अतिसखेरित्यत्र माभूदि ) ति ( ख्यत्यात्परस्ये )

तिसूत्रस्थभाष्येण सह प्रागुक्तभाष्यविरोधः स्यादिति वाच्यम् । विहितविशेषणानाश्रयणेनैव प्रतिपदोक्तपरिभाषानाश्रयणेनैव च ख्यत्यात्सूत्रस्थभाष्यस्य प्रवृत्तत्वेनाऽविरोधादित्यलम् ।

पुनरत्र विचार्यते—ननु (यस्येति चे)ति सूत्रे इकारग्रहणाभावे अतिसखेरित्यत्र लोपाऽभावेऽपि ( पूर्वान्तवद्भावेन ) सखिशब्दत्वेऽपि स्वाश्रयसख्यवयवभिन्नत्वमाश्रित्य घिसंज्ञा स्यादेवेति चेन्न । अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । किञ्च ( पूर्वान्तवद्भावेन ) विशिष्टे सखिशब्दत्वातिदेशे—तदवयवेकारे सखिशब्दावयवत्वस्याऽर्थसमाजग्रस्तत्वेन संज्ञाऽप्रवृत्तेश्च । नच ( लिङ्गविशिष्ट ) परिभाषयाऽसखीत्यत्र सखिशब्दग्रहणेन सखीशब्दस्यापि ग्रहणात्तद्भिन्नस्यैव च घिसंज्ञाविधानादतिसखेरित्यत्रातथात्वादुक्तसंज्ञा न स्यादिति वाच्यम् । (विभक्तौ लिङ्गविशिष्टाग्रहणमि)ति परिभाषया प्रकृते ( लिङ्गविशिष्ट ) परिभाषाऽप्रवृत्तिबोधनेनादोषात् । एवञ्च प्रकृते घिसंज्ञा भवत्येवेत्यवधेयम् ॥

अत्र प्राचीनानुयायिनः—सख्यवयवभिन्नयोरिवर्णोवर्णयोस्तदन्तयो र्वा घित्वमित्यर्थाऽभ्युपगमे, अतिसखेरित्यत्र माभूदिति विकृतनिर्देशप्रयोजनकथनावसरेऽतिसखेरितिगुणघटितप्रयोगदर्शनात्तस्य च भवन्मतेऽनुपपन्नत्वात् ( ख्यत्यात्सूत्रस्थभाष्य) विरोधः प्रादुर्भवति । ननु अतिसखेरित्येतद्घटकसखिशब्दस्य ङ्यन्तप्रकृतिकत्वेन लाक्षणिकत्वादेव तत्रासखीतिपर्युदासाप्रवृत्तिरिति चेन्न । सत्येवं (न सखिपतिभ्यामि)ति निर्देशेऽप्यतिव्याप्तिवारणस्य सौलभ्यात् । नचोक्तविकृतनिर्देशेन ( उत्वे कर्तव्ये लक्षणप्रतिपदोक्तपरिभाषा नं प्रवर्तत ) इत्येव

कल्प्यतामिति वाच्यम् । एकस्मिन्नेव प्रयोगे परिभाषाप्रवृत्त्यप्रवृत्त्योर्विरुद्धत्वात् । सखिशब्दस्य लक्षणया तदवयवपरत्वकल्पने गौरवाच्च । नचोक्तं ख्यत्यात्सूत्रस्थभाष्येण यस्येति चेति सूत्रस्थभाष्यविरोधेन द्वयो र्भाष्यग्रन्थयो र्मध्ये कतरो भाष्यग्रन्थोऽत्र प्रामाण्येनाऽभ्युपगन्तव्य इति वाच्यम् । यस्येतिसूत्रस्थभाष्यस्यैकदेश्युक्तित्वेन ख्यत्यात्सूत्रस्थभाष्यस्यैव सिद्धान्त्युक्तित्वात्प्रामाण्येनाऽभ्युपगन्तव्यत्वात् ।

उक्तसूत्रभाष्यस्यैकदेश्युक्तित्वम्प्रदर्शयति—तत्र इवर्णस्य किमुदाहरणम् हे दाक्षि दाक्ष्या दाक्षेय इति । आद्ये हे दाक्षि इत्यत्र दाक्षि इ सु इतिस्थितौ शब्दपरविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वन्ततो दीर्घे सति तस्यैव श्रवणप्रसङ्गः । नचान्तरङ्गत्वात्पूर्वं दीर्घस्यैव प्रवृत्तिरिति वाच्यम् । वार्णकार्यस्यावलवत्त्वेन ह्रस्वस्यैव प्रवृत्तेः । द्वितीये दाक्षि इ आ इति स्थितौ शब्दपरविप्रतिषेधेन परस्य यणादेशे कृते पूर्वस्येकारस्य श्रवणप्रसङ्गः । ननु सवर्णदीर्घे कर्तव्ये यणादेशस्य स्थानिवत्त्वादिकारपरत्वेन सवर्णदीर्घे सञ्जाते न पूर्वेकारश्रवणप्रसङ्ग इति चेन्न । (अचः परस्मिन्नि)तिसूत्रेण स्थानिभूताच्पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये सत्येव स्थानिवद्भावविधानेन प्रकृते पूर्वपरविधित्वेन तदप्रवृत्तेः । न च यणि कर्त्तव्ये स्थानिवत्त्वमिति वाच्यम् । वरे ईकारप्रश्लेषेणेकारनिमित्तकविधिम्प्रति न स्थानिवदिति तन्निषेधादिति तेषामाशयः । परन्नायं सिद्धान्तः । फलाभावात् । पद्व्या मृद्व्येति (अचः परस्मिन्नि) तिसूत्रस्थभाष्योदाहरणासङ्गत्यापत्तेश्च । तृतीये दाक्षेय इति प्रयोगे दाक्षि ई इति स्थितौ (स्त्रीभ्यो ढगि)ति ढकि परस्य लोपे पूर्वस्य श्रवणप्रसङ्गः । नच पूर्वस्येकारस्य तद्धितनिमित्तको लोपः स्यादिति वाच्यम् । परलोपस्य स्थानि-

वत्त्वात् । एवं सिद्धान्त्येकदेशिनोक्ते पूर्वपक्षत्वाद्याह नैतानि सन्ति प्रयोजनानि सवर्णदीर्घत्वेऽप्येतानि सिद्धानि ।

अत्र कैयटः—यत्राङ्गवार्णशास्त्रयोरेकदा प्रवृत्तिस्तत्र (वार्णादाङ्गं बलीय) इति परिभाषाप्रसङ्गः । (अन्तरङ्गं बलीय इत्येतदपवादत्वात् ) यद्यपि हे दाक्षीत्यत्र पदस्य विभज्यान्वाख्याने युगपत्प्राप्तिरस्ति तथाप्यत्र क्रमेणान्वाख्यानमेव कल्प्यत इति कैयटाशयः । यण्ढक्प्रसक्तौ तु नाङ्गौ भवतः । ततो भूयः सिद्धान्त्येकदेशिनोक्तम् । अतिसखेरागच्छति । अतिसखेः स्वमिति । प्रागुपपादितमेवास्याप्येकदेशयुक्तित्वमिति प्राहुः ।

इदमत्रावधेयम् । यदि सखिशब्दस्य सख्यवयवे लक्षणाऽभ्युपगमेन भाष्यान्तरविरोधः स्यात्तदाऽस्य भाष्यस्यैकदेशयुक्तित्वं स्यात् परन्तथाऽदर्शनेन नास्य भाष्यस्यैकदेशयुक्तित्वम् । किञ्च भाष्यकर्तुरिवर्णस्येतिपरे लोप इत्यस्येदम्मुख्यमुदाहरणमभिप्रेतमित्यवसीयते । यथा हे दाक्षि दाक्ष्या दाक्षेय इति प्रयोजनत्रयमभिधाय नैतानि सन्ति प्रयोजनानि इत्यभिहितन्तथाऽतिसखेरागच्छति अतिसखेः स्वमिति प्रयोजनकथनोत्तरमेतदपि न प्रयोजनमिति नोक्तम् । किन्त्विदन्तर्हि प्रयोजनमिति प्रदर्शितम् । तेनास्य सिद्धान्त्युक्तित्वमेव । प्रयोजनान्तरञ्च नोक्तम् । ख्यत्यात्परस्येति सूत्रभाष्येऽप्येवमेव प्रयोगः कृतः । तस्मान्ङ्यन्तप्रकृतिक एवायम् । उक्तभाष्यद्वययोजनाय विहितविशेषणानाश्रयणवल्लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरपि तात्पर्यविषयैव । अत एव ख्यत्यात्परस्येति सूत्रे सखिपतिभ्यामित्युच्यमाने इह न स्यात् सखीयतेरप्रत्ययः सख्युः पत्युरिति । व्याख्यातञ्च कैयटेन । विद्यमानं खमस्य स सखः तमिच्छत्य-

त्मन इति क्यच् । क्यचि चेतीत्वम् । यदि ( लक्षणप्रतिपदोक्त ) परिभाषाप्रवृत्तिर्विवक्षिता स्यात्तदात्राव्याप्तिः स्फुटैव । नच (यस्येति) सूत्रेण इतिपरे यदोवर्णलोपो न स्यात् तदा ङ्यन्तस्य सखीशब्दस्य सखी सख्याविति प्रयोगौ दृश्येते । तयोरुपपत्तिर्न स्यात् । सख्यशिश्वीति ङीपि सवर्णदीर्घे एकादेशे पूर्वान्तवद्भावेनानङ्णिद्वद्भावयोः प्रवृत्तिप्रसङ्गादिति तस्याः कथनेन न्यूनतेति वाच्यम् । प्रकृतभाष्यस्योपलक्षणत्वादित्यलम् ॥

ननु परमसखेत्यत्र परमश्चासौ सखा चेति विग्रहे पूजार्थस्याऽप्रतीत्या (न पूजनादि)ति निषेधशास्त्रस्य प्रवृत्त्यभावेन (राजाहः सखिभ्यष्टजि)ति सूत्रेण टच्प्रत्ययस्यानिवार्यमाणत्वात्परमसख इत्यस्यैव साधुत्वात्परमसखेतिमूलोक्तस्यासाधुत्वापत्तिरिति पूर्वपक्षं वारयितुमाह—परमः सखा यस्येति विग्रह इति । अयम्भावः, टच्प्रत्ययस्य तत्पुरुषसमास एव प्रवृत्त्या प्रकृते बहुव्रीहिसमासे तदप्रवृत्त्या नोक्तदोषावकाश इति ॥

ननु प्राचीनमते इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपं हि गौणत्वं स्थितम् । तच्च परमः सखा यस्येति बहुव्रीहिसमासेऽप्यस्तीति गौणे मुख्ये चार्थे प्रवृत्तं कार्यं मुख्यार्थ एव भवतीत्यर्थकस्य, विशिष्टरूपोपादान एवार्थवद्ग्रहणपरिभाषाप्रवृत्त्यभ्युपगमात्तदङ्गतयाऽस्यापि विशिष्टरूपोपादान एव प्रवृत्त्यौचित्यमित्येतद्बीजवतो (गौणमुख्ययो र्मुख्ये कार्यसम्प्रत्ययः) इति न्यायस्य प्रवृत्त्याऽनङादिकार्यं न स्यादित्याशङ्कायामाह—गौणत्वेऽप्यनङ्णित्वे प्रवर्तेते इति । अयम्भावः, गौणे परमास्थ्यादिशब्दे यथाऽनङादिकार्यप्रवृत्ति र्भवति तथा प्रकृते परमसखिशब्देऽपि गौणेऽनङादिकार्यं स्यादेवेति । नच प्राग्-

क्तस्य गौणमुख्यन्यायस्य प्रवृत्त्या कथमनङ्गादिकार्यमिति वाच्यम् । अप्रसिद्धत्व-गौणलाक्षणिकत्वेत्येताद्विद्विधगौणत्वस्यैवोक्तन्यायेऽभ्युपगमेन तस्यच प्रकृतेऽसत्त्वेन न्यायाप्रवृत्तेः । किञ्चोक्तन्यायस्य पदकार्यविषयकत्वात् स्त्रीत्वानिमित्तकत्वे सति सुब्विभक्त्यनिमित्तकत्वरूपपदकार्यत्वाभावेन तदप्रवृत्तेश्च । नच प्राचीनमतसिद्धगौणत्वस्य सत्त्वात्कथमत्र न्यायाप्रवृत्तिरिति वाच्यम् । तस्य चोपसर्जनस्य लक्षणत्वेन न्यायेऽस्मिन्नग्रहणादिति दिक् ॥

ननु सखीमतिक्रान्तोऽतिसखिरित्यत्र (प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि)ति परिभाषया प्रातिपदिकस्य सखिशब्दस्य ग्रहणेन ङीषन्तस्य सखीशब्दस्यापि ग्रहणात् (राजाहःसखिभ्यष्टजि)ति टचः प्रवृत्त्याऽतिसख इत्यस्यैव शास्त्रसिद्धत्वादतिसखिरिति मूलोक्तमसङ्गतमित्याशङ्क्य समाधत्ते—लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टजिति । तथा च परिभाषाया अनित्यत्वेनाप्रवृत्त्या सखिशब्देन सखीशब्दाग्रहणान्न टजापत्तिः । नच परिभाषाऽनित्यत्वे किम्प्रमाणमिति वाच्यम् । (शक्तिलाङ्गलाङ्कुशतोमरयाष्टिघटघटीग्रहणेष्वि)तिवार्त्तिके घटशब्दात्पृथगुपात्तस्य घटीशब्दस्यैव प्रमाणत्वात् । तथा हि परिभाषासत्त्वे घटशब्देनैव घटीशब्दस्यापि ग्रहणासिद्धौ पृथक्घटीग्रहणं व्यर्थीभूतं ज्ञापयति परिभाषाऽनित्येति । सत्यनित्यत्वे घटशब्देन घटीशब्दाग्रहणात्तदर्थं पृथक्तदुपादानस्यावश्यकत्वेन स्वांशे चारितार्थ्यं जातमिति भावः ॥

ननु सखीमतिक्रान्तोऽतिसखिरित्यत्रानङ्णिद्वद्भावयोः प्रवृत्तिः स्यादित्यत आह-इहानङ्णित्वेन भवत इति । ला-

क्षणिकप्रतिपदोक्तशब्दयो ग्रहणप्राप्तौ प्रतिपदोक्तशब्दस्यैव ग्रहणमित्यर्थिकया (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)-तिपरिभाषया सूत्रे प्रतिपदोक्तसखिशब्दस्यैव ग्रहणबोधनादस्य च सखिशब्दस्य (गोस्त्रियोरुपसर्जनस्ये)ति ह्रस्वत्वेन लाक्षणिकत्वेन तत्राग्रहणान्नोक्तकार्यापत्तिरिति । लक्षणानुसन्धानपूर्वकविलम्बोपस्थितिकत्वं लाक्षणिकं तत्तच्छब्दानुवादेन विहितत्वं शीघ्रोपस्थितिकत्वम्वा प्रतिपदोक्तत्वमित्येव परिभाषायाम्बीजम्बोध्यमिति भावः ॥

पतिः समास एव। नन्वत्र पतिः समास इत्येवास्तु सूत्रं मास्त्वेवकारग्रहणमिति चेन्न । तस्येष्टतोऽवधारणार्थत्वेनावश्यकत्वात् । अन्यथा पतिः समास इत्येव सूत्रे पतिशब्दः समास एव घिसंज्ञः, कदाचित् समासे पतिशब्द एव च घिसंज्ञ इत्यर्थस्याप्यापत्त्या समासे पतिभिन्नस्य घित्वानापत्त्या अतिसखेरागच्छति—अतिसखेःस्वमिति भाष्यप्रयोगस्य महाकविनेत्यादिप्रयोगस्यासिद्ध्यापत्तेः । नच ( अनल्विधौ ) (धात्वादेः षः सः ) इत्यादौ घित्व—तत्प्रयुक्तकार्यस्य च दर्शनादेतन्निर्देशसामर्थ्यैनैव पतिशब्दातिरिक्तस्यापि घित्वमित्यर्थज्ञापनान्न दोष इति वाच्यम् । उक्तसूत्रद्वयस्य ज्ञापकत्वानुसरणे प्रतिपत्तिगौरवात् । नच पतिः समास एवेति सूत्रसद्भावे समस्तस्यैव पतिशब्दस्य घित्वविधानादसमस्तस्य तस्यातत्त्वात्—

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इत्याद्ये पौराणिकश्लोके पतय इति घित्वप्रयुक्तकार्यविशिष्टस्य द्वितीये पाराशरीयधर्मशास्त्रीयश्लोके पताविति घित्वप्रयुक्तकार्यविशिष्टस्य च प्रयोगद्वयस्य स्पष्टैवासङ्गतिरिति वाच्यम्। पतिः समास एवेत्यत्र (लक्षणप्रतिपदोक्त) परिभाषया प्रतिपदोक्तपतिशब्दस्यैव ग्रहणेन (पतिरित्याख्यातः पतिः तत्करोति तदाचष्टे) इतिणिचि टिलोपे (अच इः) इत्यौणादिकसूत्रेणप्रत्यये (णेरनिटि) इति णिलोपे च निष्पन्नस्य पतिशब्दस्य लाक्षणिकत्वेनाग्रहणादुक्तप्रयोगोपपत्तेः। नचोक्तपौराणिकधर्मशास्त्रीयश्लोकद्वये प्रयोगद्वयस्य कथञ्चित्साधुत्वोपपादनेऽपि वस्तुतस्तयो र्व्याकरणरीत्याऽसाधुत्वस्यैव लाभात्प्रत्यवायबाहुल्योत्पत्तिरिति वाच्यम्। अयाज्यस्य त्रिशंक्वादिभूपते र्याजनादाविव तपोबलमाहात्म्येनासाधुशब्दप्रयोगेऽपि ऋषीणामदोषात्। याज्ञे कर्मण्येवासाधुशब्दप्रयोगे दोषोत्पत्तेश्च। नच ऋषीणान्तपोवलमाहात्म्येनासाधुशब्दप्रयोगे दोषाभावेऽप्यस्मदादीनान्तु तत्पारायणे दोषः स्यादेवेति वाच्यम्। स्मृतिपुराणाद्यध्ययनविधिवलादृषीणां तपोबलाच्च यज्ञमध्येऽप्यसाधुशब्दप्रयोगेऽस्मदादीनामपि दोषानुत्पत्तेः। न च ऋषीणामिवाऽस्मदादीनामप्यसाधुशब्दप्रयोगे दोषो न स्यादिति वाच्यम्। स्वातन्त्र्येणेदृशं प्रयुञ्जानानामस्मदादीनामधिकदोषोत्पत्तेः। अत एव नदीसंज्ञाविधायके (यूस्त्र्याख्यौ नदी)ति सूत्रे भाष्ये (छन्दोवत्कवयः कुर्वन्तीत्युक्त्वा नह्येषेष्टिरस्तीत्युक्तम्। तादृशप्रयोगविधानस्येष्टत्वे तु नह्येषेष्टिरस्तीति तदुक्तिर्नस्यादिति भाष्याभिप्रायः। न च (शेषोऽघ्यसखिपती) त्येवास्तु सूत्रं मास्तु (पतिः समास एवे)ति सूत्रमिति वाच्यम्। तथा सति समुदायस्य पतिरूपत्वाऽभावेन बहुच्पूर्वकपतिशब्दस्यापि घित्वापत्तेः। न च तस्य घित्वे को दोष इति वाच्यम्।

सुसखिनेत्यादिवद्बहुपतिनेत्याद्यनिष्टप्रयोगस्यापत्तेरिष्टस्य बहुपत्ये-त्यादिप्रयोगस्यानापत्तेश्च । न च (सखिपती समास एवे)त्येवा-स्तु सूत्रमिति वाच्यम् । तथा सति बहुपत्येत्यादिवद्बहुसख्येत्य-निष्टप्रयोगापत्तेरिष्टस्य बहुसखिनेत्यादिप्रयोगस्यानापत्तेश्च । अ-त्रापि सूत्रे पक्षद्वयम् । वर्णसंज्ञापक्षस्तदन्तसंज्ञापक्षश्च । तत्र वर्ण-संज्ञापक्षे सूत्रस्थपतिशब्दस्य तदवयवे लाक्षणिकत्वात्पतिशब्दा-वयवेकारस्य घिसंज्ञेत्यर्थः । तदन्तसंज्ञापक्षे च पतिशब्दावयवेका-रान्तस्य घिसंज्ञेत्यर्थः । न च सूत्रस्थपतिशब्दस्य पत्यवयवेकारे लाक्षणिकत्वे किम्मानमिति वाच्यम् । ( शेषो घ्यसखिपती ) (पतिसखी समास एव) वेत्येव सूत्रस्य कर्तुमुचितत्वे तद्विहाय कृतस्य (पतिः समास एवे)ति सूत्रस्यैव तत्र मानत्वात् ।(१)अ-न्यथा सख्यवयवभिन्नत्वमिकारस्य विशेषणं पतिभिन्नत्वमिका-रान्तस्यविशेषणमित्येकधर्मावच्छिन्नेऽन्वयाभावादनुपपन्नस्य द्वन्द्व-स्योपपत्तये सखिशब्दस्य सख्यवयवलाक्षणिकत्ववत्पतिशब्दस्या-पि पत्यवयवे लक्षणाया वक्तव्यतया स्पष्टैव सुपतिनेतिप्रयो-गस्यासिद्धिः । किञ्च पतिश्च मित्रञ्चेति सहविवक्षायां द्वन्द्वे इष्ट-स्य पतिमित्रे इतिप्रयोगस्याप्यसिद्धिश्च । (पतिसखी समास एवे)ति न्यासे तु सुसख्येतिप्रयोगानुपपत्ति र्बोध्येत्यलम् ॥

कतिशब्दो नित्यं बहुवचनान्त इति । का संख्या येषान्ते कति किमः संख्यापरिमाणे डतौ डित्वाट्टिलोपे च ( किमः संख्यापरिमाणे ) इत्यनेन बहुत्वसंख्यावच्छिन्नसंख्येय-विषयप्रश्न एव किंशब्दाड्डतिप्रत्ययो भवतीति भाष्ये स्पष्टतया

(१) पतिः समास एवेतिसूत्रम्विहायोक्तद्विविधन्यासस्त्वे इत्यर्थः ।

प्रतिपादनादस्य बहुवचनान्तत्वोपपत्तिः। तत्र हि भाष्ये कि-मित्येतत्परिप्रश्ने वर्तते। परिप्रश्नश्चानिर्ज्ञाते। अनिर्ज्ञातश्च बहुषु भवति। द्व्येकयोः पुनर्निर्ज्ञातमेवेत्युक्तम्। एवश्चात्र बहु-त्वावच्छिन्नस्य नियमेनोपस्थित्या न्याय्यमेव बहुवचनान्तत्वम-स्येति भावः।

बहुगणवतुडति संख्या। बव्हादिडत्यन्तं पृथक् पदम्। समासश्चात्र समाहारद्वन्द्वः। सूत्रे साक्षाद् व्याप्यसंख्याद्वारा वा संख्यायतेऽनयेत्यन्वर्थसंज्ञाविज्ञानात् त्र्यादिसंख्याव्यापकधर्म-विशेषवाचकयोः प्रातिपदिकयो र्बहुगणशब्दयोरेव ग्रहणन्न तु सङ्घवैपुल्यवाचकयोरपीति। अत एव वतुप्प्रत्ययसाहचर्यान्न डतिप्रत्ययस्यापि (किमः संख्यापरिमाणेडतिरि)तिसूत्रविहि-तस्य तद्धितस्यैव ग्रहणम्। न तु (पातेर्डतिरि)तिविहितस्य डतेः। ननु (संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति) इतिपरिभाषाया जागरूकत्वाद्वतुडतिभ्यां तदन्तग्रहणाप्रसक्त्या वतुडत्योरेव संज्ञाप्रसक्तिर्न्न तु तदन्तयोरिति चेन्न। इह केवल-योर्वतुडत्योः संज्ञाविधौ फलाभावेनाऽन्वर्थताबलेन च तदन्तयो-रेव संज्ञाप्रवृत्तेः। नचाऽनुबन्धविनिर्मुक्तयोरेव तयोर्लक्ष्ये दर्श-नात्तथाविधयोरेव च संज्ञाविधानस्याप्यौचित्यात्सानुबन्धनिर्दे-शो व्यर्थ इति वाच्यम्। ब्राह्मणवद्वसतिरित्यादावतिप्रङ्गशङ्कां निराकर्तुं सानुबन्धनिर्देशस्य सार्थक्यात्।

न च (कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय) इति परिभाषया (न्यायेन) कृत्वसुजादिरूपसंख्याकार्येषु कृत्रिमसंख्याया एव ग्रहणादकृत्रिमायास्तस्या अग्रहणेन पञ्चकृत्व इत्यादेरसिद्धिरिति वाच्यम्। (संख्याया अति-

शदन्तायाः कन्नि ) तिसूत्रे तिशदन्तपर्युदासबलेन संख्या-कार्येषु ( कृत्रिमाकृत्रिम ) न्यायस्याप्रवृत्तेः । नचैवं भूर्यादिश-ब्देभ्योऽपि कृत्वसुजापत्तिरितिवाच्यम् । अनियतसंख्यावाचिनां संख्याकार्यञ्चेत् तर्हि बहुगणयोरेवेतिनियमफलकसंख्याविज्ञानादुक्तातिप्रसङ्गस्यानतिप्रसक्तेरित्यलम् ॥

षड्भ्यो लुक् । षट् च षट् च षट् चेत्यकशेषसमासे षट् तेभ्यो षड्भ्यः । ( जश्शसोरि ) तिसूत्राज्जश्शोरिति वर्तते तदाह—षड्भ्यः परयोर्जश्शसोर्लुगिति । अत्र षड्भ्य इति विहितविशेषणन्तेन गौणे प्रियपञ्चान इत्यत्र न लुगापत्तिः । ननु षड्भ्य इत्यस्य विहितविशेषणत्वाङ्गीकारे परमपञ्चेत्यादौ समुदायाद्विहितत्वेऽपि तस्य षट्त्वाभावात् केवलपञ्चन्नित्यस्य षट्त्वेऽपि ततोऽविहितत्वाल्लुग् न स्यादिति चेन्न । विशिष्टस्याऽपि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचित्वात्षट्त्वस्य सत्त्वेनाऽदोषात् । स्पष्टञ्चेदं षट्प्रधान एष समास इत्यादिना ( सर्वादीनि सर्वनामानी ) तिसूत्रे भाष्ये तत्र हि उपसर्जनप्रतिषेधखण्डनाय अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति । यद्येवम्परमपञ्चेत्यत्र लुङ् न प्राप्नोति षट्प्रधान एष समास इत्याद्युक्तम् । न च संख्याप्रकारकसंख्ये यविशेष्यकबोधजनकत्वेन संख्यावाचित्वात्षट्त्वस्याङ्गीकारे राजञ्छब्दस्य प्रथमाबहुवचने राजान इत्यादौ राजञ्छब्दस्य बहुत्वप्रकारकबहुत्वविशिष्टविशेष्यकबोधजनकत्वेन षट्संज्ञापत्त्या जसो लुगापत्तिरिति वाच्यम । संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं संख्यावाचकत्वमितिं विवक्षणेनादोषात् । नचैवं दण्डिन इव त्रय इत्युपमितसमासे त्रिदण्डिनशब्दस्य संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वेन संख्या-

वाचकत्वापत्तिरिति वाच्यम् । यस्य संख्यावाचकत्वं विवक्षितन्तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तन्निरूपितप्रकारताऽसमानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तत्प्रयोजकतापर्याप्त्यधिकरणत्वं संख्यावाचकत्वमित्यभ्युपगमेन त्रिदण्डिन्नित्यत्र तादृशसंख्येयनिष्ठविशेष्यताप्रयोजकत्वस्य पर्याप्त्या त्रिशब्द एव सत्त्वात्त्रिदण्डिन्शब्दे तदभावेनाऽदोषात् ॥

ननु ( सर्वनाम्नः स्मै ) इतिवत् ( षषो लुगि ) त्येकवचननिर्देशस्यैव सूत्रे लाघवात्कर्तुमुचितत्वे षड्भ्य इतिबहुवचननिर्देशो व्यर्थ इति चेन्न । तस्यार्थप्राधान्यसूचनार्थत्वेनात्र सार्थक्यात् । न च स्वरूपनिरासाय बहुवचननिर्देशस्य सार्थक्येऽर्थप्राधान्यसूचनार्थत्वाभिधानं तस्यायुक्तमिति वाच्यम् । ( कृत्रिमाकृत्रिम) न्यायेनैव स्वरूपनिरासासिद्धेः । नचात्र षड्भ्य इति बहुवचनोपपत्तिः कथमिति वाच्यम् । षट्शब्देन षट्संज्ञकशब्द—तदर्थसंख्याश्रययोरुभयोरपि विवक्षितत्वेन तेषां बहुत्वेन बहुवचनोपपत्तेरित्यलम् ॥

प्रत्ययलोपे प्रत्ययलक्षणम् । ननु—

सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥

इत्यभियुक्तवचनेन यथा सामान्यशास्त्रस्य विशेषशास्त्रेण बाधो भवति तथाऽत्रापि सामान्यविहितलोपसंज्ञाया विशेषविहितलुगादिसंज्ञाभि र्बाधः स्यादिति चेन्न । एकसंज्ञाधिकारादन्यत्र संज्ञानां मिथो बाध्यबाधकभावानङ्गीकारात् । नच ( लोपे प्रत्ययलक्षणमि )त्येवास्तु सूत्रम् ( प्रत्ययस्य लुक्श्लुलुप ) इत्यतः

प्रत्ययस्येत्यनुवर्तनादिष्टार्थसिद्धावाद्यप्रत्ययग्रहणम्व्यर्थमिति वाच्यम् । तस्य प्रत्ययावयवत्वलोपाभावज्ञापनार्थत्वेन ( प्रत्ययपर्यायस्थानिताकलोपे सति प्रत्ययलक्षणमित्यर्थज्ञापनार्थत्वेन ) सार्थक्यात् । नचाद्यप्रत्ययग्रहणेनोक्तार्थज्ञापने किम्फलमिति वाच्यम् । आघ्नीयेत्यत्र सीयुटः सकारस्य लोपे तस्य प्रत्ययलक्षणेन ( अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिती ) तिसूत्रेण प्राप्तानुनासिकलोपव्यावृत्तेरेव तत्फलत्वात् । न च सीयुटः प्रत्ययत्वेऽपि तदवयवसकारे तत्त्वाभावादेव तस्मिन्ननुनासिकलोपाप्राप्त्या नेदं ज्ञापनफलमिति वाच्यम् । अस्यैवाद्यप्रत्ययग्रहणस्य प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्यापि ज्ञापकत्वात् । नचैतज्ज्ञापनस्य किम्फलमिति वाच्यम् । ( आदेशप्रत्यययोरि ) त्यादौ लक्षणानाश्रयणस्यैव फलत्वात् । अन्यथाऽत्र द्वन्द्वोपपत्तये प्रत्ययपदस्य प्रत्ययावयवे लक्षणाया अवश्याश्रयणीयत्वात् । किञ्च ( सात्पदाद्योरि ) तिसूत्रचारितार्थ्यस्यापि तत्फलत्वात् । अन्यथा सातः सकारस्य प्रत्ययत्वाभावादेव षत्वाप्राप्तेस्तद्वैयर्थ्यस्य स्पष्टत्वात् । नचोक्तज्ञापनादिकार्यार्थमाद्यप्रत्ययग्रहणस्यावश्यकत्वेऽपि द्वितीयप्रत्ययग्रहणम्व्यर्थं ( प्रत्ययलोपे तद्वत् ) इतिन्यासेनैव सिद्धेरिति वाच्यम् । प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्ये एव प्रत्ययलक्षणमित्यर्थज्ञापनार्थत्वेन तस्य सार्थक्यात् । नचैतदर्थज्ञापनस्य किम्फलमिति वाच्यम् । सुदृषत्प्रासाद इत्यत्र दीर्घे कर्तव्ये प्रत्ययलक्षणाप्रवृत्तेरेव तत्फलत्वादिति संक्षेपः ।

अथात्र सूत्रस्य सार्थक्यं विचार्यते—

ननु ( स्थानिवत् ) सूत्रेणैवैतत्सूत्रकार्यसिद्धौ सूत्रमिदं व्य-

र्थमिति चेन्न। यत्र कार्ये प्रत्ययस्यासाधारणरूपाश्रयणं तत्रैव कार्ये कर्तव्ये प्रत्ययलक्षणं भवतीतिनियमार्थत्वेन सार्थक्यात्। नचोक्तनियमस्य किम्फलमिति वाच्यम्। शोभना दृषदो यस्य प्रासादस्य स सुदृषत्प्रासाद इत्यत्र ( नञ्सुभ्यामि ) तिप्राप्तम-न्तोदात्तत्वं बाधित्वा ( सोर्मनसी अलोमोषसी ) तिप्राप्तोत्तरप-दाद्युदात्तत्वाभावस्य ( अत्वसन्तस्य चाधातोरि ) तिप्राप्तदीर्घा-भावस्य च फलत्वात्। नचैतत्सूत्रस्य नियमार्थत्वाभ्युपगमे भा-ष्यविरोधः तत्र हि ( दाधर्त्ति ) तिसूत्रे तेतिक्ते इति किं निपा-त्यते आत्मनेपदं नैतदस्ति ( अनुदात्तङित )इत्येव सिद्धं निय-मार्थं तर्हि भविष्यति अत्रैव यङ्लुगन्तस्य नान्यत्र वेभिदीती-त्युक्तम्। अस्य नियमत्वे ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वा-दनुदात्तङित इत्यनेनात्मनेपदस्य दौर्लभ्येन भाष्यविरोधः स्पष्ट एवेति वाच्यम्। आत्मनेपदमित्यस्यैव सिद्धान्तिभाष्यकारोक्ति-त्वात्ततो विध्यर्थमिदमिति वार्त्तिकानुसारिणा ( अनुदात्तङि-त )इत्येव सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समा-धानमित्यदोषात्।

यद्वा यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधावपि प्र-त्ययाश्रितकार्यविध्यर्थमिदं सूत्रम्। प्राधान्यञ्चात्र वर्णाविशेष-णत्वरूपम्बोध्यम्। नचेदं कुतो लभ्यत इति वाच्यम्। स्था-निवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणसामर्थ्यादेवास्य लाभात्। फलञ्च तस्य अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम्–मित्रशीरित्यादौ हलादौ क्ङिति विधीयमानमित्वं च लुप्ते-ऽपि तस्मिन् ( प्रत्यये ) भवतीति। न च(१) (वर्णाश्रये ना-

(१) (वर्णाश्रये नास्ति प्रत्ययलक्षणम्) अस्याः कोऽर्थ इतिजिज्ञा-स्ययामुच्यते—वर्ण आश्रयो निमित्तम्यस्य स वर्णाश्रयस्तस्मिन्।

ह्वित प्रत्ययलक्षणमि )तिपरिभाषया वर्णाश्रयकार्यस्य कर्तव्यत्वे प्रत्ययलक्षणस्य निषेधात्कथमुक्तफलोपपत्तिरिति वाच्यम्। परिभाषाया वर्णप्राधान्यविषयकत्वेनेहाप्रवृत्तेः। वर्णस्य प्राधान्यं च प्रत्ययनिरूपितविशेष्यत्वरूपम्—इतराविशेषणत्वरूपञ्च। अण् योऽकार इत्याद्यर्थके ( टिड्ढाणञि )त्यादौ, (इको यणची ) त्यादौ च। तत्राद्यस्योदाहरणं चित्रायां जाता चित्रेत्यादावण् योऽकारस्तदन्तादितिविहितो ङीब् नेति बोध्यम्। अन्त्यस्योदाहरणं गवे हितं गोहितमित्यत्राऽवादेशो नेति। न च गोहितमित्यत्र ( न लुमते )तिनिषेधादेव प्रत्ययलक्षणाऽप्रवृत्त्योक्तापत्त्यभावादन्त्योदाहरणत्वमस्यासङ्गतमिति वाच्यम्। लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्य एव तेन निषेधात्। अत एवोत्क्राम इत्यादौ ( क्रमः परस्मैपदेष्वि )तिदीर्घसिद्धिः। ( न लुमते )त्यस्य तथाविधकार्ये प्रवृत्त्यस्वीकारे तु परस्मैपदपरशिन्निरूपिताङ्गस्यैव तेन दीर्घविधानात्तत्र च परस्मैपदस्य हेर्लुकि तस्य ( न लुमते ) तिनिषेधात्प्रत्ययलक्षणाऽभावेन शितः परस्मैपदपरत्वाभावाद्दीर्घो न स्यात्। न च ( न लुमते )त्यस्य

---

तथा च वर्णनिमित्तिके (वर्णोद्देश्यके) कार्ये कर्तव्ये प्रत्यलक्षणसूत्रन्न प्रवर्तते इत्यर्थः। ननु स्वीकृते त्वस्मिन्नर्थे वेधश्शब्दस्य प्रथमैकवचने वेधा इत्यादौ (ससजुषोरुरि)त्येतद्विहितरुत्वस्य वर्णाश्रयत्वेन तस्मिन्कर्तव्ये प्रत्यलक्षणसुत्राप्रवृत्त्या पदत्वाभावाद्रुत्वं न स्यादिति चेन्न। प्रत्यासत्त्या लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके कार्ये कर्तव्ये प्रत्यलक्षणसूत्रं न प्रवर्तत इत्यर्थाङ्गीकारेण रुत्वस्यातथाविधत्वेनादोषात्। नचोक्तार्थस्वीकारेऽपि सत्वस्य लुप्तप्रत्ययवृत्तित्वेन तत्रत्यदोषस्तदवस्थ एवेति वाच्यम्। लुप्तप्रत्ययवृत्ति र्या वर्णत्वव्याप्यधर्मावच्छिन्ना विषयता तन्निरूपके कार्ये कर्तव्ये प्रत्ययलक्षणसूत्रं न प्रवर्तत इत्यर्थस्वीकारेण प्रकृते तादृशविषयताया असत्त्वेनादोषात्।

लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्य एव प्रवृत्तिस्वीकारे परमत्रिपुत्र इत्यत्र परमत्रयाणां पुत्र इतिसमासे ( सुपो धातुप्रातिपदिकयोरि )ति आमो लुकि तस्य च प्रत्ययलक्षणेन आम्परत्वात् त्रिशब्दस्य त्रयादेशो दुर्वारः स्यात्, नात्र त्रयादेशो हि आम्प्रत्ययनिमित्तकाङ्गसंज्ञावदुद्देश्यः परमत्रिशब्दस्याङ्गत्वात् केवलत्रिशब्दस्य चोद्देश्यत्वात्। एवं परमजरापुत्र इत्यादौ जरसादेशापत्तिश्च स्यादिति वाच्यम्। लुप्तप्रत्ययविशिष्टविषयताके प्रत्ययलक्षणं नेति सूत्रार्थस्य विवक्षितत्वात्। वैशिष्ट्यश्चात्र साक्षात्स्वाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नत्व—स्वनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वाऽवच्छिन्नत्वेत्युभयसंसर्गेण बोध्यम्। तथा च त्रयादेशस्याङ्गाधिकारीयत्वात् त्रिशब्दान्ताङ्गावयवनिर्दिश्यमानस्य त्रयादेश इत्यर्थे अङ्गसंज्ञावत्पर्याप्ततादृशाङ्गत्वरूपधर्मेण परम्परयाऽवच्छिन्नोद्देश्यतायाः सद्भावान्नोक्तापत्तिः। एवं परमजरापुत्र इत्यादावप्युक्तापत्त्यभावो बोध्यः। (न लुमता तस्मिन्नि) तिन्यामेऽपि लुक्स्थानिभूतप्रत्ययाव्यवहितप्रकृत्युद्देश्यककार्य एव प्रवृत्तिर्बोध्या। अत्र सूत्रे पक्षद्वयाश्रयणमुपपादितम्। नियमार्थपक्षो विध्यर्थपक्षश्च। तत्र यद्वेत्यादिनोक्तो वार्त्तिककृत्सम्मतो विध्यर्थपक्षस्तत्फलानामन्यथासिद्धिमुपपाद्य भाष्यकृता संदुष्य नियमार्थत्वपक्ष एवोक्त इति दिक्॥

न लुमताङ्गस्य। लुशब्दयुक्तो (लुरस्यास्तीति )वा लुमान् तेन लुमता तृतीयैकवचनान्तमिदम्। तदाह—लुक्श्लुलुप् एते लुपन्त इत्यादि। अङ्गकार्यमिति। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वा तन्नेत्यर्थः। ननु मूलोक्तार्थम्विहाय किमर्थमयमर्थः स्वीकृत इति चेन्न। पञ्चेत्यादौ पदसंज्ञोपपत्तये तदर्थस्वीकारात्। अन्यथोक्त-

स्थले (षड्भ्यो लुगि)ति विभक्तेर्लुकि (न लुमते)तिनिषेधेन प्रत्ययलक्षणाप्रवृत्त्या पदत्वाभावेन नलोपानापत्तेः । परिष्कृतार्थस्वीकारे तु पदसंज्ञाया लुमत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यककार्यत्वाभावान्निषेधाप्रवृत्त्या प्रत्ययलक्षणेन सिद्धिः सुलभा । किञ्च परिष्कृतार्थस्वीकारे राजपुरुष इत्यादौ भसंज्ञा च न भवति । यथा (सुप्तिङन्तमि)तिपदसंज्ञा समुदायोद्देश्यिका न तथा भसंज्ञा समुदायोद्देश्यिका किन्तु लुमत्यये परतो यः पूर्वस्तदुद्देश्यिकैवेति प्रत्ययलक्षणप्रतिषेधान्न भसंज्ञेति भावः । न चात्र भसंज्ञेव अङ्गसंज्ञापि न स्यादस्यापि लुमत्यये परतो यः पूर्वस्तदुद्देश्यकत्वेन प्रत्ययलक्षणप्रतिषेधादिति वाच्यम् । अङ्गसंज्ञायां निषेधाप्रवृत्तेः । तथा हि संज्ञापरिभाषाविषये यथोद्देशपक्ष इत्यर्थक (यथोद्देशं संज्ञापरिभाषमि)तिपरिभाषाबलादङ्गसंज्ञायां यथोद्देशपक्षस्याश्रयणात्प्रत्ययसत्ताकाले जाताया अङ्गसंज्ञायाः प्रत्ययसत्ताकाले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सद्भावः । तस्याश्च लब्धाङ्गसंज्ञककार्यत्वाभावेन निषेधाप्रवृत्तिः । एवञ्चाङ्गसंज्ञायां न लुमतेतिनिषेधाभावात्सत्यामङ्गसंज्ञायां लब्धाङ्गसंज्ञकोद्देश्यकभत्वे प्रत्ययलक्षणप्रतिषेधाद्भवत्वे कर्तव्ये निषेधः प्रवर्तत एवेति भावः । स्पष्टश्चेदं (युवोरनाकावि)तिसूत्रे भाष्ये कैयटे च । तत्र हि भाष्ये युवुशब्दान्तस्याऽङ्गस्यानाकौ भवत इत्यर्थे नन्दनप्रियः कारकप्रिय इत्यत्र वाक्यस्य विभज्यान्वाख्याने नन्दनशब्दात्कारकशब्दाच्च या विभक्तिस्तस्याः (सुपो धातुप्रातिपदिकयोरि)त्यनेन कृते लुकि अनाकौ न प्राप्नुत इति पूर्वपक्षे अङ्गावयवयो र्युवु इत्येतयोरनाकौ भवत इत्यर्थाभिप्रायेण मा भूतां यासौ सामासिका विभक्तिस्तस्यां भविष्यत इति समाधाने कृते यत्र तर्हि समासाद्विभ-

क्ति र्नास्ति नन्दनदधि कारकदधि इति पुनः पूर्वपक्षे, एवन्तर्हि न वा परन्निमित्तं, संज्ञा च भवति प्रत्ययलक्षणेन। नवेह पर-निमित्तमाश्रीयते अस्मिन्परतो युवोरनाकौ भवत इति। किन्तर्हि अङ्गस्य युवोरनाकौ भवतः अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेत्यु-क्तम्। अत्र कैयटस्तु—नेह विभक्तिः प्रत्ययान्तरम्वा निमित्त-त्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोर्नास्तीति नायं नलु-ताङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्य विषयः। केवलमङ्गस्य युवो-रनाकौ भवत इत्युच्यते। अस्मिंश्च प्रत्ययलक्षणेनाङ्गसंज्ञा। नह्यस्यां विधीयमानायां न लुमताङ्गस्येति निषेधप्रवृत्तिः लब्धा-ङ्गसंज्ञकस्य कार्यान्तरे कर्तव्ये उक्तनिषेधः प्रवर्तते। नचाङ्गसं-ज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाभाव इत्याह।

केचित्तु—अत्र कैयट इत्युक्तिररुचिं सूचयति। तथा हि वार्त्तिकृदभिमतस्य (नलुमता तस्मिन्नि)तिन्यासस्याभ्युपगमे अ-ङ्गपदस्य पूर्वत्वोपलक्षणत्वादङ्गसंज्ञायामपि प्रतिषेधप्रवृत्त्या नलु-मतेतिनिषेधानित्यत्वेनाऽङ्गसंज्ञा भवतीतिभाष्याशयो वर्णनीय इ-त्याहुः। न लुमतेति निषेधस्यानित्यत्वादेव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलं पञ्चक्रोष्टृ इत्यत्र (तद्धितार्थोत्तरपदसमाहारे चे)ति समासे (अध्यर्धे)ति ठको लुकि (लुक् तद्धिते)तिस्त्रीप्रत्ययस्य लु-कि तृज्वद्भावो भवति। तदुक्तं ( तृज्वत् )सूत्रे भाष्ये (नचापरं निमित्तमाश्रीयते किन्तर्ह्यङ्गस्य क्रोष्टुस्तृज्वदिति अङ्गसंज्ञा च भवति प्रत्यलक्षणेने )ति। न च अकृते तृज्वत्त्वे ऋदन्तत्वाभा-वात्स्त्रीप्रत्ययस्याप्राप्त्या कथन्तस्य लुगिति वाच्यम्। पिप्पल्या-दिगणे पृथिवी क्रोष्टु—मातामह—पितामहेतिपाठात्तृज्वद्भावात्प्रा-गपि स्त्रीप्रत्ययप्रवृत्तेः। न च तृज्वत्सूत्रस्थभाष्यरीत्या यत्राङ्ग-स्येत्युपस्थित्या तस्यापरनिमित्तकत्वेनोरदत्वस्य परनिमित्तक-

त्वाभावात्स्थानिवद्भावाभावात्तया वव्रश्चेत्यत्र (न सम्प्रसारणे सम्प्रसारणमि)तिनिषेधप्रवृत्तये परनिमित्तकत्वस्यावश्याश्रयणीयत्वात्पञ्चक्रोष्ट इति न सिद्ध्येदिति वाच्यम् ।(उरदि)त्यत्र शब्दतः परस्य निमित्तत्वाश्रयणाभावेऽपि(१)अङ्गसंज्ञाद्वारोरदत्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्ते (र्लिट्यभ्यासस्ये)तिसूत्रस्थभाष्यतो लाभात् । नियमतः परबुद्धेः पूर्ववृत्तित्वेन परनिमित्तत्वात् । न लुमतेतिनिषेधस्यानित्यत्वेनाप्रवृत्त्याऽङ्गसंज्ञासत्त्वादेव चर्करीति—अजर्घा इत्यादौ (उरदि)त्यस्य प्रवृत्तिः । (अचि श्नुधातुभ्रुवां य्वोरि)त्यादौ अङ्गस्येतिषष्ठीबलान्निमित्ते इत्यस्याध्याहारेणाऽजादिप्रत्यय इत्यर्थस्य कथञ्चिदुपपत्तिः । आकडाराधिकारस्थेषु कार्यकालत्वाभावात्कैयटोक्तस्य कार्यकालपक्षमाश्रित्य वव्रश्चेतिप्रयोगसिद्धिप्रकारस्यायुक्तत्वमेवेत्यलम् ॥

त्रेस्त्रयः । सूत्रोपात्तं त्रेरितिपदं षष्ठ्यन्तमेव न तु पञ्चम्यन्तम् । त्रय इति चादन्तमेव न तु सान्तं (निजां त्रयाणामि)तिनिर्देशात् । सान्तत्वे हि आमि त्रयसामित्येव निर्देष्टव्ये त्रयाणामितिनिर्देशोऽनुपपन्नः स्यात् । इत्यभिप्रेत्याह—त्रिशब्दस्य त्रयादेश इति । ननु त्रिशब्दस्य जसि गुणायादेशाभ्यामेव त्रय इत्यस्य सिद्धिः आमि त्रयादेशार्थमेव सूत्रमिदं तस्य च

---

(१) अङ्गस्येत्यनेनैकवाक्यत्वादङ्गत्वज्ञानस्य वाक्यार्थज्ञाने कारणतयाङ्गत्वज्ञानस्य परप्रत्ययज्ञानप्रयोज्यत्वादुरदत्वस्यापि परप्रयोज्यत्वेन स्थानिवद्भावप्रवृत्तिरित्येव भाष्यप्रामाण्यात्कल्प्यते नतु उरदत्वस्य परनिमित्तिकत्वं साक्षादिति भाष्ययोर्विरोधाभाव इत्याशयः । एतन्मते लुप्तप्रत्यये परतो यः पूर्वो लब्धाङ्गसंज्ञक इति नार्थः किन्तु तादृशप्रत्ययपूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तस्मिन्कार्ये निषेध इत्येवेति बोध्यम् ।

(निजां त्रयाणामि)तिनिपातनादेव सिद्धौ सूत्रमिदं व्यर्थमिति चेन्न। (अबाधकान्यपि निपातनानि भवन्ती) तिज्ञापनार्थत्वेन सूत्रस्य सार्थक्यात्। नचैतज्ज्ञापनस्य किम्फलमिति वाच्यम्। पुरातनमितिप्रयोगसिद्धेरेव तत्फलत्वात् अन्यथा (पुराणप्रोक्तेष्वि)तिनिपातनादेतस्य बाधात् )। ननु त्रेस्त्रय इत्यस्य स्थाने त्रेरयङ्क्तित्येवास्तु सूत्रमितिचेन्न। (अयङ् यि क्ङिती्त्येतद्विहितस्याऽयङो यकारोत्तराकारस्योच्चारणार्थत्वमिवाऽस्याप्ययङो यकारोत्तराकारस्योच्चारणार्थत्वशङ्कानिवृत्तये तथाविधसूत्रस्य कर्तुमशक्यत्वात्। न च (निजां त्रयाणामि)ति निर्देशात्सकारान्तत्वशङ्कावारणमिवास्या अपि शंकाया वारणसंभवात्त्रेरयङ्क्तिसूत्रे न कोऽपि दोष इति वाच्यम्। तादृससूत्राभ्युपगमे परमत्रिशब्दादाख्यानार्थे णिचि टिलोपे ततः क्वौः णिलोपे च कृते (क्वौ लुप्तं न स्थानिवदि)तिस्थानिवत्त्वानिषेधे निर्दिश्यमानावयवत्रशब्दस्य त्रयादेशे परमत्रयाणामित्यत्रान्त्यरेफस्यादेशापत्तेः।

ननु मुख्यार्थवाचकत्रिशब्दस्य त्रयादेश इव गौणार्थवाचकस्या(उपसर्जनस्या)पि त्रिशब्दस्य त्रयादेशो दुर्वारः। कस्यापि बाधकस्याऽसद्भावोनाऽविशेषादुभयत्र सूत्रप्रवृत्तेरित्याशङ्कां समाधत्ते–गौणत्वे तु नेति केचिदिति। अयम्भावः, (१)

---

(१) गौणमुख्ययोरिति। गौणश्च मुख्यश्च गौणमुख्यौ तयोः। गौणेऽर्थे मुख्येऽर्थे च प्रवृत्तं कार्यं मुख्येऽर्थे एव भवतीति तदर्थः। (अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमि)तिपरिभाषाया विशिष्टरूपोपादाने एव प्रवृत्तिरिति तदङ्गतयैतन्न्यायस्यापि विशिष्टरूपोपादाने एव प्रवृत्तिर्युक्तेत्येवम्मूलभूतयं परिभाषेति बोध्यम्। एतद्घटकगौणपदार्थस्य मूल एवाभिहितत्वान्नेहोक्तम् मुख्यत्वञ्चात्रोक्तविधगौणत्वभिन्नत्वमेवेत्यवसेयम्।

( गौणमुख्ययो मुख्ये कार्यसंप्रत्ययः ) इतिपरिभाषया सूत्रे मुख्यार्थवाचकत्रिशब्दस्यैव ग्रहणाद्गौणार्थवाचकस्य तस्याऽग्रहणान्न गौणार्थवाचकत्रिशब्दस्य त्रयादेशापत्तिः । किञ्च ( सहचरितासहचरितयो र्मध्ये सहचरितस्यैव ग्रहणमि )ति परिभाषया यथा ( आमि सर्वनाम्नः ) इत्यस्य मुख्यार्थवाचकसर्वशब्द एव प्रवृत्ति स्तत्साहचर्यादस्यापि मुख्यार्थवाचकात्रिशब्द एव प्रवृत्तिरिति भावः ।

ननु साहचर्यपरिभाषयाः सर्वत्र नियामकत्वाभावात्सूत्रान्तरसाहचर्ये च दृढतरप्रामाण्याभावाच्च नास्य सूत्रस्य गौणेऽप्रवृत्तिः कल्पयितुं शक्येतिशङ्कान्निवारयति—वस्तुतस्तु प्रियत्रयाणामिति । न च ( गौणमुख्ययो मुख्ये कार्यसंप्रत्य ) इति परिभाषया कथमत्र त्रयादेशः स्यादिति वाच्यम् । अप्रसिद्धत्व गौणलाक्षणिकत्वान्यतररूपगौणत्वाभावेनोक्तपरिभाषाया अप्रवृत्तेः । अत एव, उपसर्जनानां सर्वनामत्वनिषेधारम्भो वार्त्तिककृत्कृतः संगच्छते । अन्यथैतत्परिभाषयैवोपसर्जने सर्वनामत्वनिषेधसिद्धौ वार्त्तिककृत्कृतः प्रयासो व्यर्थः स्यात । किञ्चोक्तपरिभाषायाः पदकार्य एव प्रवृत्त्या प्रातिपदिककार्ये तत्प्रवृत्त्यभावेन त्रयादेशस्य पदकार्यत्वाभावादेवाऽप्रवृत्तेश्चेति भावः ॥

द्विपर्यान्तानां किम् । भवान् भवन्तौ । ननु ( त्यदादीनाम ) इत्यत्र द्विपर्यन्तानामित्यस्याग्रहणे युष्मदस्मच्छब्द एव दोषसम्भवाभवच्छब्दानुधावनं व्यर्थमिति चेन्न । युष्मदस्मच्छब्दविषये विशेषविहितकार्यै रात्वयत्वयलोपरूपैरत्वस्य बाधेन दोषाभावात् । न च तथापि भवच्छब्दानुधावनं व्यर्थमेव किंशब्द एव दोषसम्भवादिति वाच्यम् । तत्रापि ( किमः क ) इति

सूत्रेण विशेषविहितकादेशेनाऽत्वस्य बाधेनाऽदोषात् । एवञ्च तत्र द्विपर्यन्तानामित्यसत्वे दोषदानाय भवच्छब्दोल्लेखः सफल एवेति ध्येयम् । अत्र भवत्सु इतिस्थितौ तकारस्य ( त्यदादीनाम ) इत्यनेनाऽत्वे ( अतो गुणे ) इतिपररूपे ( उगिदचां सर्वनामस्थाने चाधातोः ) इति नुमि ( सर्वनामस्थाने चासम्बुद्धावि )ति दीर्घे ( हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलि ) त्यनेन सुलोपे ( नलोपः प्रातिपदिकान्तस्ये )तिनलोपे भवेति रूपं स्यात् । किञ्च शमधातो र्घिनुणि प्रत्यये कृते निष्पन्नस्य शमिन्शब्दस्य शमी शमिनावित्यादौ नुमोऽभावाय झल्ग्रहणापकर्षादुगिज्झलन्तस्यैव नुम्विधानादिह स्थानिवत्सूत्रेणोगित्त्वानयनेऽपि झलन्तत्वाभावेन नुमोऽप्राप्त्या मूलोक्तरूपासिद्धिः । अतः सूत्रे तद्ग्रहणम् । ननु भवच्छब्दस्य त्यदादेः प्रागेव पाठान्न भवानित्यत्र दोष इत्यभिप्रेत्य भवन्ताविति प्रत्युदाहरणम् । अत्र हि, भवच्छब्दस्य त्यदादेः प्राक्पाठे ( त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते ) इत्यनेन तच्छब्दस्य शेषापत्त्या भवन्ताविति प्रयोगो नैकशेषे स्यादतो यथोक्तपाठ एव युक्तस्तथा सति भवानित्यत्र दत्तं दूषणं तिष्ठत्येवेति द्विपर्यन्तानामित्युक्तिरिति भावः ॥

यूस्त्र्याख्यौ नदी । अत्र यू इति दीर्घयोरेव ग्रहणं भाष्यकृद्व्याख्यानात् तथा हि—किम्पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोरिति सन्दिह्य दीर्घग्रहणपक्षे यू इत्यत्र पूर्वसवर्णदीर्घस्य ( ङिति ह्रस्वश्चे ) ति सूत्रे सामानाधिकरण्यानुपपत्तिश्चोद्भाव्य, ह्रस्वग्रहणे शकटिबन्धुरित्यत्र ( नदी बन्धुनी ) तिपूर्वपदान्तोदात्तस्य बहुशकटिरित्यत्र ( नद्यृतश्चे ) ति कपः प्राप्तिञ्चाभिधाय दीर्घयोरेव ग्रहणमितिसिद्धान्तितमिति भावः । स्त्रियमाचक्षाते

स्त्र्याख्यौ ( मूलविभुजादित्वात्कः ) यू इतिपदं स्त्र्याख्याविन्युपस्थितस्त्रीवाचकशब्दस्य विशेषणन्ततस्तदन्तविधिस्तदाह—ईदूदन्तावित्यादि । अत्र सूत्रे न वर्णसंज्ञापक्षाश्रयणं किन्तु तदन्तसंज्ञापक्षाश्रयणमेव । वर्णसंज्ञापक्षाश्रयणे तु तन्त्र्यादिशब्दघटकेकारादेः स्त्र्यर्थवाचकत्वाभावान्नदी संज्ञा न स्यात् । गौर्यादिशब्दघटकेकारस्यापि द्योतकत्वेन वाचकत्वाभावान्नदीसंज्ञानापत्तिः । तदन्तसंज्ञापक्षाश्रयणे तु न दोषः । ननु तदन्तसंज्ञापक्षाश्रयणे ( आच्छीनद्योर्नुमि ) त्यत्रानुपपत्तिरिति चेन्न । तत्र नदीशब्दस्य तदवयवे लक्षणाभ्युपगमेनानुपपत्त्यभावात् । सूत्रस्थाऽऽख्याग्रहणसामर्थ्यात् नित्यत्वलाभादाह—नित्यस्त्रीलिङ्गाविति तत्फलं ग्रामण्यादिशब्दस्य । नदीत्वाभावरूपम् । अन्यथा ग्रामं नयति या सा ग्रामणीरितिविग्रहे ग्रामणीशब्दस्य स्त्र्यर्थवाचकत्वेन नदीत्वं स्यात् । नित्यस्त्रीलिङ्गावित्युक्तौ तु प्रवृत्तिनिमित्तैक्ये लिङ्गान्तराविशिष्टार्थानभिधायकत्वरूपपरिष्कृतनित्यस्त्रीत्वस्य लाभात् ग्रामकर्मकनयनकर्तृत्वरूपस्य ग्रामणीशब्दप्रवृत्तिनिमित्तस्य पुंसाधारणत्वेन लिङ्गान्तरविशिष्टार्थानभिधायकत्वाभावान्न तत्र नदीत्वापत्तिः । परिष्कृतनित्यस्त्रीत्व लक्षणघटकसत्यन्तपदं लिङ्गान्तरविशिष्टार्थानभिधायकपदार्थकुक्षिस्थप्रवृत्तिप्रतियोगिविशेषणम् । तथा च लिङ्गान्तराविशिष्टार्थस्य येन रूपेणाभिधायकं तेनैव रूपेण स्त्र्यभिधायकं यत्तस्य न नित्यस्त्रीलिङ्गत्वव्यवहारः । अर्थात् स्वजन्यबोधीयलिङ्गान्तरविशिष्टार्थनिष्ठविशेष्यतावच्छेदकावच्छिन्नस्त्रीनिष्ठविशेष्यताशालिशाब्दबोधजनकं यत्तद्भिन्नशब्दत्वं नित्यस्त्रीलिङ्गत्वमिति फलितम् । केनचित्पुरुषेण स्त्रीमात्रविषयकबोधेच्छया प्रयुक्तेन खलपूशब्देन सामग्रीविशेषात्तन्मात्रविषयकस्यैव बोधस्य जनितत्वात्तस्य

च लिङ्गान्तरविशिष्टार्थानभिधायकत्वान्नदीत्वं स्यात्तद्वारणाय लिङ्गान्तरविशिष्टार्थाभिधायकतावच्छेदकधर्मशून्यत्वं वक्तव्यम् एवञ्च ङ्यन्तकुमार्यादीनां क्यजन्तसमानानुपूर्वीकत्वान्नदीत्वं न स्यादिति प्रवृत्तिनिमित्तैक्योपादानमिति भावः ॥

ननू क्वविधानित्यस्त्रीत्वस्याभ्युपगमे बहुव्रीहिघटकसकलपदानामन्यपदार्थबोधकत्वादस्य लिङ्गान्तरविशिष्टार्थाभिधायकत्वादनभिधायकत्वाभावेन बहुश्रेयसीशब्दस्य नदी संज्ञा न स्यादत आह—प्रथमलिङ्गग्रहणञ्चेति । अर्थान्तरसंक्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमेऽपि नदीत्वं वक्तव्यमिति तदर्थः । अत्र यथोद्देशपक्षस्वीकारे (भविष्यति किञ्चिदनेन प्रयोजनामि)त्यभिसन्धिमात्रेण संज्ञाप्रवृत्तेः सिद्धत्वात् पूर्वप्रवृत्तसंज्ञामादायैव संज्ञाकार्यम् । कार्यकालपक्षस्वीकारेऽपि कुमारीमिच्छन्कुमारीवाचरन्नित्येवं सिद्धकुमारीशब्दादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वादत्तावपि विशेषणत्वेन नित्यस्त्रीलिङ्गरूपार्थबोधजनकत्वान्नदीसंज्ञा सुलभा । समासे तु वृत्तिप्रकृतिशब्दस्य सुतरामेव संज्ञाप्राप्तिः । लक्षणे तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न प्रमाणम् । तदुक्तम्भाष्ये(१)

---

(१) अवयवस्त्रीविषयत्वादिति । अवयवशब्दस्यात्र वृत्तिप्रकृतिशब्दपरत्वम्बोध्यम् । तेन न क्यजन्ते दोष इति भावः । केचित्तु—अवयवशब्दस्य वृत्तिप्रकृतिशब्दपरत्वेऽभ्युपगते आचारक्विप्प्रकृतिककर्तृविजन्तानामग्न्यादिशब्दानां स्त्रियां वृत्त्या ( तस्माच्छसो नः पुंसी ) तिसूत्रस्य पुमर्थप्रतिपादकशब्दस्य शस्प्रकृतित्वे पूर्वसवर्णदीर्घात्परस्य शसः सकारस्य नत्वमित्यर्थे नत्वप्राप्त्यभावात्तत्र नत्वानापत्त्या तथा आचारक्विप्प्रकृतिककर्तृविजन्तानां शकट्यादिस्त्रीलिङ्गशब्दानां पुंवृत्तौ ( आङो नाऽस्त्रियामि ) त्यस्य यस्मादाङो विधानन्तदादेरस्त्रियां विद्यमानात्परस्य नाभाव इत्यर्थे तेषान्नाभावाप्राप्त्याऽनिष्टस्य नाभावस्याऽऽपत्त्या च चिन्त्यमिदमित्याहुः ॥

(अवयवस्त्रीविषयत्वासिद्धम् अवयवोऽत्र स्त्रीविषयस्तदाश्रया न-नदीसंज्ञा भविष्यती)ति आकडारस्थसंज्ञानां कार्यकालत्वाऽभावात् । अन्यथा तत्तद्विध्येकवाक्यतापन्नयोः संज्ञाशास्त्रयोः कथं(१) वाध्यबाधकभावः स्यादिति बोध्यमित्यपि(२)केचित् ।

हे बहुश्रेयसीति । नन्वत्र (अम्बार्थनद्योर्ह्रस्व )इत्यनेन ह्रस्वे कृते हेबहुश्रेयसि सु इतिस्थितौ (ह्रस्वस्य गुण )इत्यनेन गुणो दुर्वार इति चेन्न । ह्रस्वविधानसामर्थ्याद्गुणाप्राप्तेः । न च ह्रस्वविधानस्य सुलोपार्थत्वेन सार्थक्यात्तत्सामर्थ्येन गुणाभावकल्पनमकिञ्चित्करमिति वाच्यम् । कृते गुणे ह्रेङन्तत्वादेव सुलोपसिद्धौ ह्रस्वविधानस्य सुलोपार्थत्वाभावेन तत्सामर्थ्याद्गु-

(१) कथं वाध्यवाधकभाव इति । कार्यकालपक्षे विधिशास्त्र प्रदेशरूपैकदेशगतत्वात्संज्ञानां पूर्वापरीभावाभावेन वाध्यवाधकभावो न स्यादिति भावः ।

(२) केचिदिति । केचिदित्युक्त्याऽरुचिः सूच्यते । तद्बीजन्तु आकडारस्थसंज्ञानां कार्यकालत्वाभावादितिग्रन्थेन नदीसंज्ञाविधायकशास्त्रस्य तत्तत्कार्यविधायकशास्त्रैकवाक्यत्वन्नाभिप्रेतं किन्तु नदीसंज्ञाप्रयुक्तकार्यप्रवृत्तेश्चिकीर्षितत्वे एव नदीसंज्ञां बाधित्वैकवाक्यत्वकल्पनम् । ननु ( भविष्यति किञ्चिदनेन प्रयोजनमि ) तिन्यायेन पूर्वं नदीत्वप्रवृत्तिरेतावतापि नद्यन्तकार्यस्य प्रवृत्तिर्भविष्यतीति नानुपपत्तिरिति । यत्तु केचिदिति प्रतीकमुपादाय संज्ञायाः कार्यार्थमन्यदेशगमनेऽपि न स्वदेशीयत्वत्यागो व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तॄणामिवेत्यस्वरस इति । तत्र अधिकारो नाम त्रिः प्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयतीति भाष्यफक्किकाव्याख्यानक्षणे कश्चित्परिभाषारूप इति कैयटव्याख्यानात्परिभाषाविषय एव स्वदेशत्यागेन कार्यसम्पादनमिति कल्पनम् । संज्ञाविषये तु कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसंज्ञेति प्रगृह्यसंज्ञायाः परत्वस्य ( अदसो मादि ) तिसूत्रभाष्ये उक्तत्वेन संज्ञाविषये स्वदेशत्यागेन व्यवस्थाया भाष्याऽसम्मतत्वादिति भावः ।

णाभावकल्पनस्य युक्तत्वात् । गुणस्येष्टत्वे (अम्बार्थनद्यो र्गुण) इतिसूत्रकरणस्यैवौचित्याच्च । नचात्र ह्रस्वग्रहणमपहाय गुणघटितसूत्रकरणे नास्ति किञ्चिल्लाघवमिति वाच्यम् । ह्रस्वग्रहणे मात्राधिक्यात् । (जसि च )त्युत्तरसूत्रे गुणग्रहणाकरणेन सुतरां लाघवसम्भवाच्च । केचित्तु—ह्रस्वे कृतेऽत्र गुणस्येष्टत्वे प्रक्रियालाघवाय(अम्बार्थानां ह्रस्व )इत्यभिधाय (ह्रस्वनद्यो गुणं ) इत्येव सूत्रङ्कर्तुमुचितम् । नचेत्थंसूत्रकरणे (संनियोगशिष्टपदानां सहैवानुवृत्तिनिवृत्ती )रभियुक्तोक्त्या (जसि चे)त्यत्रैकदेशस्य ह्रस्वपदस्यानुवृत्ति र्न स्यादिति वाच्यम् । एकदेशे स्वरितत्वप्रतिज्ञया केवलह्रस्वपदस्यैवानुवृत्ते र्भाष्ये स्पष्टत्वात् । तथाहि (क्वचिदेकदेशस्याप्यनुवृत्ति र्भवति, यथा (दामहायनान्ताच्चे)तिसूत्रे संख्यादेरित्यनुवर्ततेऽव्ययादेरितिनिवृत्तमित्युक्तम्)। नचात्र सम्बुद्धौ गुणस्येष्टत्वे (अम्बार्थानामपि गुण) इत्येव सूत्रमस्त्विति वाच्यम् । तथा सति—

अनः क्लीवजले शोके मातृस्यन्दनयोरपि ।

इतिरभसाद्युक्ताऽनश्शब्दस्याप्यम्बार्थत्वेन गुणापत्तेः । न च ह्रस्वग्रहणे कुतो नायं दोष इति वाच्यम् । सति तस्मिन् (अचश्चे)तिपरिभाषयाऽच इत्युपस्थित्याजन्ताम्बार्थस्यैव ग्रहणेन तदप्राप्तेः । न च मातृवाचकस्यानश्शब्दस्य नपुंसकत्वात्स्वमोर्लुका लुप्तत्वेन सम्बुद्धिपरत्वाभावादेव गुणाप्राप्तिरिति वाच्यम् । तस्य नपुंसकत्वेऽपि हे वारे इत्यत्रेव पाक्षिकगुणापत्ते र्दुर्वारत्वात् । गुणघटितसूत्रकरणे गुणपदश्रवणादिक्परिभाषानुपस्थित्याऽम्बेत्यादावपि गुणानापत्तेश्चेति दिक् ।

आपनद्याः । नन्वत्रैकमात्रालाघवानुरोधात् (अण्नद्या )

इत्येवास्तु सूत्रमिति चेन्न । तथा सति (अतो गुणे )इतिपररू- पापत्तेः । नचाऽड्विधानसामर्थ्यात्पररूपत्वाबाधःयथायथं वृद्धौ सवर्णदीर्घे च कृते बहुश्रेयस्यै, बहुश्रेयस्या इति रूपसिद्धावट्घटितमेवास्तु सूत्रमिति वाच्यम् । (परत्वादाटा नुड् बाध्यते ) इत्युत्तरग्रन्थानुरोधात् सप्तम्येकवचने ङेरामि कृते तस्य नुडागमवारणार्थमाड्विधानस्यावश्यकत्वेन सामर्थ्योपक्षीणत्वात्तेन पररूपबाधसम्भवात् । नचैवं ( ह्रस्वनद्यापः ) इत्यनन्तरं ( ङेर्नें ) त्येव सूत्रान्तरकरणात्तत्र पूर्वसूत्रादामीत्यनुवर्त्तनेन तस्मिन्नुण्नेत्यर्थे ङौ दोषाभावादुड्विधानसामर्थ्येण पररुपबाधे न पूर्वोक्तकल्पे दोष इति वाच्यम् सत्येवम् ( अण्नद्या ) इतिसूत्रस्यैव सुवचत्वादिति दिक् ॥

आटश्च । नन्वत्राप्येकमात्रालाघवाय ( आण्नद्याः । इत्यत्रेव अटश्चेत्येव सूत्रमस्त्विति चेन्न । अस्वपो हसन्नित्यत्र स्वपेर्लङि सिपि ( अड्गार्ग्यगालवयोरि ) त्यटि शब्लुकि सस्य रुत्वे हशि चेत्युत्वे अस्वप उ हसन्नितिस्थितौ प्राप्तमाद्गुणम्बाधित्वाऽटश्चेतिवृद्ध्यापत्तेः । नचान्तरङ्गत्वाद्धिद्दष्ट्या वहिरङ्गोत्वासिद्ध्या नोक्तदोष इति वाच्यम् । ( नाजानान्तर्य ) इत्यनेनोक्तपरिभाषानिषेधात् । तथा च तत्र वृद्ध्यभावाय धातोविसपकर्षाद्बहुश्रेयस्यै इत्यादौ वृद्धि र्न स्यादिति यथोक्तसूत्रमेव युक्तम् । नचाऽटश्चेतिकरणेऽपि तत्र वृद्धिरेचीत्येव वृद्धिसिद्धिरिति वाच्यम् । तद्बाधित्वा ( अतो गुण ) इतिपररूपस्यैव प्रवृत्तेः । नचाऽड्विधानसामर्थ्यान्न पररूपमिति वाच्यम् । बहुश्रेयसीशब्दस्य सप्तम्येकवचने ङेरामि कृते बहुश्रेयसी आमित्यत्र प्राप्तनुडागमस्य बाधकत्वेन तस्य चरितार्थतया सामर्थ्योपक्षणित्वेन पररूपाबाधादिति संक्षेपः ॥

ननु श्रेयोऽस्त्यासामिति श्रेयस्यो बह्व्यः श्रेयस्यो यस्येति विग्रहे निष्पन्नस्य बहुश्रेयसीशब्दस्य सप्तम्येकवचने ङौ तत्स्थाने ( ङेराम्नद्याम्नीभ्यः ) इत्यामि बहुश्रेयसी आमिति स्थितौ ( प्रथमलिङ्गग्रहणश्चे )ति वार्त्तिकेन बहुश्रेयसीत्यस्य नदीत्वादामश्च ततः परत्वात् ( ह्रस्वनद्यापो नुडि )तिसूत्रेण नुट् स्यादिति चेन्न । नुडपेक्षया ( आटश्चे )तिसूत्रविहितस्याटः परत्वेन ( विप्रतिषेधे परं कार्यमि )तिसूत्रेणाऽऽटा नुटो बाधेन तदप्रवृत्तेरित्याह—इह परत्वादाटा नुड् बाध्यत इति । अयम्भावः, आट्नुटोः प्राप्तयोः सतोरुक्तरीत्याटा नुटो बाधान्नोक्तदोषः । नचाऽऽटा नुडो बाधेऽपि बाधकशास्त्रप्रवृत्त्युत्तरं बाध्यस्य प्राप्तिसम्भवात्कुतो न नुडिति वाच्यम् । सति विप्रतिषेधे सकृद्बाधितं शास्त्रं न पुनः प्रवर्तत इत्यर्थकेन, क्वचिच्चरितार्थस्य कार्यद्वयस्य युगपदेकस्मिन्नसम्भवाद्बाधकाभावेन पर्यायतया तृजादिवच्छास्त्रद्वयप्राप्तौ सत्यां विप्रतिषेधे पूर्वपरयोः प्राप्तौ परमेवेति ( विप्रतिषेध )सूत्रकृतनियमासिद्धेन ( सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे )ति न्यायेन बाधे पुनर्बाध्यस्याप्रवृत्तेः । अनयोक्तरीत्याऽऽटा नुटो बाधेन नुडप्रवृत्तौ दोषाऽभावेऽपि ( अपवादो नुग्दीर्घत्वस्ये)ति ( दीर्घोऽकित )इतिसूत्रस्थभाष्येणाऽऽगमादेशयोरपि बाध्यबाधकभावलाभादिहाप्यागमादेशयोरामाटो र्बाध्यबाधकभावः स्यात् तथाचाऽऽमाऽऽटो बाधात्पुनस्तदप्राप्त्या तस्य नुटा सह विप्रतिषेधविचारोऽसङ्गत इति वाच्यम् । निरवकाशरूपापवादशास्त्रे प्रवृत्ते पुनरुत्सर्गशास्त्रप्रवृत्तिदर्शनादिहाम्प्रवृत्त्युत्तरमाटः प्रवृत्तावस्य नुटा सह विप्रतिषेधविचारस्य सङ्गतेरिति ॥

अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीरिति । अय-

ऽभावः, लक्ष दर्शनाङ्कनयोरित्यस्माद्धातोः ( लक्षे मुंट् ) चे ति-सूत्रेणौणादिक ईप्रत्यये कृते निष्पन्नस्य लक्ष्मीशब्दस्याऽतिश-ब्देन सह लक्ष्मीमतिक्रान्त इत्यर्थे समासेऽतिलक्ष्मीरित्यस्याङी-बन्तत्वात् ( हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलि ) तिसूत्रेण न सुलोपप्राप्तिरिति । उक्तविधनिष्पन्नादप्यस्मात् ( कृदिकारा-दक्तिनः ) इतिवार्त्तिकेन ङीप्प्रत्यये कृते सति पूर्वोक्तसूत्रेण स्या-देव सुलोपः । अत एव लक्ष्मी र्लक्ष्मी हरिप्रियेतिद्विरूपकोशो-क्तिरुपपद्यत इत्यलम् ॥

कुमारीति । आत्मन कुमारमिच्छति कुमारीयतीत्यत इच्छाक्यजन्तात् क्विपि निष्पन्नात्कुमारीशब्दात्प्रथमैकवचने सौ तस्य ( हल्ङ्यादि ) ति लोपे तत्सिद्धिः । ननु ( अतो लोपः ) इतिसूत्रेण लुप्तस्य क्यचोऽकारस्य ( अचः परस्मिन्नि ) ति-सूत्रेण स्थानिवद्भावात्तस्मिन् यणापत्ते र्दुर्वारत्वात्कुमारीतिप्रयोगो नोपपद्यते । न च पदान्तविधौ स्थानिवत्त्वस्य ( नपदान्त ) सूत्रेण निषेधान्न यणापत्तिदोष इति वाच्यम् । ( नः क्ये ) इति सूत्रेण क्यचि क्यङि च नान्तस्यैव पदत्वविधानादत्र नान्तत्वाभावेनाऽपदान्तत्वान्निषेधाप्रवृत्तेः । न च ( क्वौ लुप्तं न स्थानिवदि ) ति स्थानिवद्भावनिषेधान्न यणापत्तिसम्भव इति वाच्यम् ।

सख्यु र्गोमान् पदत्वं च क्वौ लुप्तमिति दर्शनात् ।

इत्यभियुक्तोक्त्या परिगणितस्थल एव ( क्वौ लुप्तं न स्थानिव-दि ) त्यस्य प्रवृत्तिदर्शनादिहैतदप्रवृत्त्योक्तदोषस्य तादवस्थ्या-दिति चेन्न । लूनिः पूनिरित्यादिभाष्योदाहरणसिद्धये क्वौ लुप्तमित्यस्या परिगणितातिरिक्तस्थलेऽपि प्रवृत्तेरदोषादित्यलम् ।

धातुना संयोगस्य विशेषणादिह यण्। उन्न्यौ। उन्न्य इति। अयम्भावः, (एरनेकाचोऽसंयोगपूर्वस्ये) ति सूत्रादनुवृत्तं धातुपदमाङ्गस्याऽङ्गसंयोगयोरुभयोर्विशेषणन्तत्र संयोगविशेषणत्वे फलमुन्न्यौ उन्न्य इत्यादौ धात्ववयवसंयोगपूर्वत्वाभावाद्यण्सिद्धिरूपम्बोध्यम्। धातुपदस्याऽङ्गविशेषणत्वे हरिं हरी हरीनित्यादिसिद्धिः फलम्। तस्याङ्गविशेषणत्वानभ्युपगमे तु यथा प्रध्यं प्रध्य इत्यत्र यणादेशो भवति तथैवात्रापि हरिरूपाङ्गस्य धात्ववयवसंयोगपूर्वभिन्नत्वात्प्राप्तं पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यणादेशापत्ति र्दुर्वारा स्यादिति तदावश्यकम्। ननु धात्ववयवेकार एव धात्ववयवसंयोगपूर्वत्वस्य सम्भवात्संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन तद्भिन्नस्यापि धात्ववयवस्यैव ग्रहणान्न हरिमित्यादौ दोष इति चेन्न। तन्त्रीरित्यादौ धात्ववयवसंयोगपूर्वस्याधात्ववयस्यापि सम्भवेन दोषस्य तादवस्थ्यात्। न च (परिमाणाख्यायामि) ति सूत्रे भाष्ये (अजपाविति संज्ञायामेव यथाजातीयक उत्सर्गस्तज्जातीयकेनापवादेनापि भवितव्यमि )तिभाष्यकृदुक्तिमूलकेन (उत्सर्गसमानदेशा अपवादा) इतिन्यायेनैव तत्र निर्वाह इति वाच्यम्। अङ्गांशे धातुपदस्याऽसम्बन्धे हरिमित्यादावपि तत्प्राप्त्या (येन नाप्राप्त्यभावेन) पूर्वरूपादेरपवादत्वस्यैवाऽभावात्। उदियावित्यादौ यणाप्त्यभावाय सूत्रघटकाऽसंयोगपूर्वस्येतिपदस्य धात्ववयवसंयोगभिन्नपूर्वस्येत्यर्थस्वीकारे तद्भिन्नस्य च धात्ववयवस्यैव च ग्रहणे च नोक्तस्थले कोऽपि दोषलेश इति।

कथन्तर्हि दुर्धियो वृश्चिकभिय इति। उच्यते—दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दार्थम्प्रतीत्यादि। अय-

प्रभिप्रायः, ( गतिकारकेतरपूर्वपदस्य यण् नेष्यते ) इतिवार्त्ति-केन गतिसंज्ञक–कारकेत्येतदुभयभिन्नपूर्वपदकस्यैव यण्विधा-नात्तत्पूर्वकस्य तु तदविधानेन दुर्धियो वृश्चिकभिय इत्यादौ दुर्वृश्चिकशब्दयोर्गतिकारकत्वाभावाद्यणादेशः स्यादिति पूर्वपक्षे प्रक्रान्ते समाधत्ते–दुरित्यस्य दुःशब्दोपात्तदुष्टत्वस्येत्यर्थः । धी-शब्दम्प्रतीत्यस्य धीशब्दार्थम्प्रतीत्यर्थः । यत्क्रियायुक्ता इत्यस्य यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः । तथा च प्रादीनां यद्धातुवाच्याक्रियायुक्तत्वन्तद्धातुवाच्याक्रियाम्प्रत्येव तेषां गति-त्वाद्धीशब्दार्थम्प्रति तेषामगतित्वान्नात्रे यणापत्तिदोषसम्भवः । ( ध्रुवमपायेऽपादानमि ) तिसूत्रेणैव बुद्धिकृतापादानाश्रयणा-त्पञ्चमीमुपपाद्य ( भीत्रार्थानां भयहेतुरि ) त्यस्य प्रत्याख्यान-करणात्तथाविधापादानत्वाविवक्षणादकारकपूर्वत्वान्न द्वितीयेऽप्यु-क्तदोषलेशः । अत्र हि सम्बन्धसामान्ये विहितया षष्ठीविभक्त्या समासः । वृश्चिकसम्बन्धिनी भी वृश्चिकभीत्युत्तरपदलोपसमा-सो वा बोध्य इति ॥

ननु इच्छाक्यजन्तात्सखीयतेः कर्तरि क्विपि अल्लोपयलो-पयोः सखीरिति सिद्ध्यति । नचात्राऽल्लोपस्य स्थानिवद्भावेन वल्परत्वाभावाद्यल्लोपो न स्यादिति वाच्यम् । ( न पदान्त ) सूत्रेण यलोपे कर्तव्ये स्थानिवद्भावनिषेधेन यलोपोपपत्तेः । नचाऽथापि वलिलोपात्प्राक् ( वेरपृक्ते ) इत्यनेन क्विपो वका-रलोपे वल्परत्वाभावाद्यलोपो न स्यादिति वाच्यम् । ( वेर-पृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेने ) तिवार्त्तिकदुक्तवार्त्तिकेन वेरपृक्तलोपात्प्राग्वलिलोपस्यैव प्रवृत्तेः । नचाल्लोपस्य स्थानि-वत्त्वेनाच्परत्वात् ( एरनेकाच ) इति यणादेशः स्यादिति वाच्यम् । अन्तर्वर्त्तिविभक्त्या सखिशब्दस्य पदत्वात् ( न

पदान्त ) सूत्रेण स्थानिवत्त्वनिषेधात् । न च ( नः क्ये ) इति सूत्रे क्यचि नान्तस्यैव पदत्वविधानादस्यातथात्वेन पदत्वाभावान्निषेधाऽप्रवृत्त्या स्थानिवद्भावस्य दुर्वारत्वाद्गुणापत्तेस्तादवस्थ्यमेवेति वाच्यम् । ( असिद्धं बहिरङ्गमन्तरङ्गे ) इतिपरिभाषयाऽन्तरङ्गे यणि कर्तव्ये क्विबपेक्षया बहिरङ्गक्यसम्बन्धियलोपस्यासिद्धत्वाद्विनापि स्थानिवद्भावनिषेधमुक्तदोषव्यावृत्तेः । नचोक्तपरिभाषाया अनित्यत्वादिहाऽप्रवृत्त्योक्तदोषो दुरुद्धर एवेति वाच्यम् । वक्ष्यमाणवचनेन स्थानिवत्त्वनिषेधादुक्तदोषोद्धारादित्याह—क्वौ लुप्तं न स्थानिवदिति । ( लुप विमोहने ) इत्यस्माद्धातोः ( नपुंसके भावे क्तः ) इति सूत्रेण क्तप्रत्यये लुप्तमित्यस्य सिद्धिः । धातुनामनेकार्थत्वात्तस्य लोप इत्यर्थः । गोमत्यतेः क्विपि गोमानिति भाष्योदाहरणोपपत्त्यर्थमेतद्वचनस्य स्वीकारादस्य क्वाचित्कत्वम् । सार्वत्रिकवचनं तु ( क्वौ विधिं प्रति न स्थानिवदि ) त्येव । पूर्वोक्तवचनस्यैव सार्वत्रिकत्वाभ्युपगमे तु बेभिदि ब्राह्मणकुलानीति हलन्तनपुंसकलिङ्गोक्तग्रन्थविरोधः स्यात् । तत्र बेभिद्यतेः क्विपि अल्लोपस्थानिवत्त्वाभावे झलन्तलक्षणनुम्प्रसङ्गादिति भावः ।

दीर्घस्यापि ग्रहणात्त्व्यत्यादित्युत्वमिति । ख्यत्यात्परस्येति सूत्रे प्रयोगस्थस्य विकृतस्यानुकरणेन विशेषाभावादुभयोर्ह्रस्वदीर्घयोर्ग्रहणमिति भावः ॥

सूत्रे नप्त्रादिग्रहणं नियमार्थमिति । शास्त्रेऽस्मिन्व्युत्पत्त्यव्युत्पत्तिपक्षद्वयस्यापि लक्ष्यानुरोधादाश्रयणम् । तथा च ( अप्तृन्नि )ति सूत्रे व्युत्पत्तिपक्षाश्रयणे नप्त्रादीनामपि तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घसिद्धौ तेषां ग्रहणं व्यर्थं सन्नियमार्थम् ।

तथा चायं नियमः–( उणादिनिष्पन्नानां संज्ञाशब्दानां दीर्घश्चे-न्नप्त्रादीनामेवेति ) तेन अन्योणादिनिष्पन्नसंज्ञाशब्दानां पितृ-मातृप्रभृतीनां दीर्घाभावो हि नियमफलम् । नप्त्रादिशब्दानाम-प्युणादिनिष्पन्नत्वाद्दीर्घसिद्धिः । अव्युत्पत्तिपक्षाश्रयणे तु न नियमार्थं नप्त्रादिग्रहणं किन्तु विध्यर्थमेव । ननु उद्गातृशब्द-स्योणादिनिष्पन्नत्वेऽपि दीर्घो न स्यान्नियमेन तद्व्यावृत्तेरित्यत आह-उद्गातृशब्दस्य तु भवत्येवेति । ( समर्थः पदविधिरि ) ति सूत्रे उद्गातार इति भाष्यप्रयोगात् उद्गातृशब्दस्यौणादि-कत्वाभावबोधनेन दीर्घसिद्धिः । अस्यौणादिकत्वमभ्युपगत्य-भाष्यप्रयोगादेव दीर्घकल्पनं तु न युक्तम् । भाष्यकृतान्यप्रयो-गस्योदाहरणत्वेन दानेऽप्येतस्य भाष्यप्रयोगत्वाभावादिति भावः ॥

परत्वात्तृज्वद्भावे प्राप्ते (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम् । अयम्भावः, क्रोष्टुशब्दस्य षष्ठीबहुवचने क्रोष्टु आमिति स्थितौ ( ह्रस्वनद्यापो नुडि )तिसू-त्रेण नुटि ( तृज्वत्क्रोष्टुरि ) त्यनेन तृज्वद्भावे च प्राप्ते ( वि-प्रतिषेध ) सूत्रबलात्परत्वात्तृजेव स्यात् । पराऽपेक्षया नित्यस्या-ऽधिकबलवत्त्वेन तृज्वद्भावं बाधित्वा नित्यत्वान्नुडेवेति नाश-ङ्क्यम् । कृताकृतप्रसङ्गित्वस्यैव नित्यत्वपदार्थत्वान्नुटश्च सति तृज्वद्भावे ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) ति-परिभाषयाऽप्रवृत्त्याऽनित्यत्वात् । तथा च नुट्तृज्वद्भावयोर्मध्ये परत्वात्तृजेव पाक्षिकः स्यादिति पूर्वपक्षे जाते–उत्तरमाह–नुम-चिरेति वार्त्तिकेन । नुमचिरतृज्वद्भावान् पूर्वविप्रतिषेधेन बा-धित्वा नुडेवेति वार्त्तिकार्थः । वारीणामित्यत्र नुमभावो हि नु-टा नुम्बाधफलम् । तिसृणामित्यत्राचिरबाधफलम् । क्रोष्टूना-

मित्यत्र तृज्वद्भावबाधफलम्। अचिरविधायकशास्त्रस्यापवादत्वा-द्बाध्यसामान्यचिन्तायां स्त्रविषये यावत्प्राप्तस्य बाधः। अ-त एव गुणदीर्घोत्वानामपवाद इति ग्रन्थः समुपपद्यते। तथा च विशेषाऽपदेशेनाऽचिरभावेन नुटोऽपि बाधादुत्सर्गापवादशास्त्र-योस्तुल्यबलत्वाभावान्न विप्रतिषेधविचारोपपत्तिरिति न श-ङ्कनीयम्। सत्येवमेतदंशे ( न तिसृ चतसृ ) इतिज्ञापकादेव नु-ट्सिद्धेः। अयमेव प्रकारो नुट्सिद्धेः प्रदर्शितो भाष्ये। वार्त्ति-कस्वरूपश्च तृज्वद्भावांशरहितमेव बोध्यमिति ॥

ननु लोके प्रायो दीर्घ ॠकारान्तलॄकारान्तयोरप्रयोगादनु-करणशब्दानिरूपणं युक्तमित्याह—कॄ तॄ इत्यनयोरनुकरणे त्विति। ( यत्तदेतेभ्यः परिमाणे वतुप् ) तिसूत्रे एतेभ्य इ-तिप्रयोगे त्यदाद्यत्वस्य दर्शनादनुकरणशब्दानां प्रकृतिवत्व-ज्ञापनादाह—प्रकृतिवदनुकरणमिति। अनुकरणशब्दानामु-च्चारणमात्रफलकत्वात्तैरनुकार्यशब्दस्वरूपमात्रं बोध्यते। प्र-कृत्याऽनुकार्येण तुल्यं वर्तत इति तदर्थात्। यत्तदेतेभ्य इत्यत्रो-पात्तानां यत्तदेतच्छब्दानामेकशेषादर्शनात् ( क्षियः ) इतिसूत्रे क्षिधातोरनुकरणे विभक्तिदर्शनाच्चानुकरणानां प्रकृतिवत्त्वाति-देशस्य वैकल्पिकत्वमित्याभिप्रेत्याह—वैकल्पिकातिदेशादिति। अनुकार्यानुकरणयोरन्योन्यं भेदोऽभेदश्चेति पक्षद्वयम्। तत्र भे-दपक्षेऽनुकरणशब्देभ्योऽर्थबोधनाय पृथक् शक्तेः स्वीकारात्ते-षां शक्तिमत्स्वरूपार्थबोधजनकत्वेनार्थवत्त्वात्प्रातिपदिकत्वेन वि-भक्त्युत्पत्तिः। नन्वेवं भू सत्तायामित्यादिधातुसूत्रोपात्तभूश-ब्दस्याप्यनुकरणत्वाद्विभक्त्यापत्तिरिति चेन्न। एतन्निर्देशादेव तत्र तदनुत्पत्तेः। अभेदपक्षे तु अनुकरणशब्दैरप्यनुकार्यशब्द-निरूपितशक्त्यैवार्थबोधनात्तत्र पृथक्शक्त्यभावेन शक्तिमत्स्वरूपा-

र्थवत्त्वासत्त्वादप्रातिपदिकत्वेन वित्यनुत्पत्तिरिति भावः ॥

शसा साहचर्यात्सुबेवाऽम् गृह्यते । नेह अचिनवम्, असुनवमिति । अयम्भावः, तद्धितो यः शस् तस्यौकारान्तान्न सम्भवः किन्तु सुप एव सम्भव इति । कैयटकारस्तु—तद्धितोऽप्यस्ति शस्प्रत्यय इति कथमत्र साहचर्येण सुप एवामो ग्रहणमित्याशंक्याऽचीत्यधिकृत्याऽजादिशसः सुप एव सम्भवो न तु तद्धितस्येत्यभिप्रेत्य अचिनवमसुनवमित्युदाजहार । अत्राऽमि परे नाऽऽत्वमिति संक्षेपः ॥

ओतो णिदिति वाच्यमिति । ननु गोशब्दस्य द्वितीयैकवचनेऽमि गो अमितिस्थितौ ( सुडनपुंसकस्य )त्यमः सर्वनामस्थानत्वे ( गोतो णिदि )ति णिद्वद्भावे च कृते ( औतोऽम्शसोरि )तिप्राप्तमात्वं बाधित्वा परत्वाद्वृद्धिर्दुर्वारेति चेन्न । सत्येववमात्वस्यानवकाशत्वात्तेन वृद्धिबाधात्तदप्राप्तेः । नचैतद्वचनस्यैव कुतो लाभ इति वाच्यम् । गोतो णिदिति सूत्रे गकारस्याविवक्षणादेवैतस्य लाभात् । नचैतद्वचनाभ्युपगमे किं फलमिति वाच्यम् । चित्रगुरित्यादौ णिद्वद्भाववारणस्यैव फलत्वात् । अन्यथा ( पदाङ्गाधिकारे तस्य तदन्तस्य च ) त्यनेन तदन्तस्याप्यङ्गाधिकारीयकार्यबोधनात् गोशब्दान्तात्परं यत्सर्वनामस्थानं तण्णिद्वदित्यर्थे स्थानिवद्भावेन गोशब्दान्तत्वस्याक्षततया तत्रोक्तदोषस्य दुर्वारत्वं स्यात् । वचनाभ्युपगमे तु चित्रगुरित्यस्यानौकारान्तत्वेनाऽल्विधौ स्थानिवद्भावनिषेधेन च न काप्यापत्तिरिति भावः ॥

नागेशास्तु—गोतो णिदिति सूत्रस्थतपरकारणस्यैतत्सूत्र(१)

(१) तत्र हि तपरकरणं किमर्थम् । इह मा भूत् । चित्रगुः, शबलगुरिति । नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति । स्थानिवद्भा·

भाष्य एव प्रत्याख्यातत्वाच्चित्रगुरित्यत्र प्राप्तोक्तदोषस्य गोःपूर्वणित्त्वात्वस्वरेषु स्थानिवद्भावनिषेधाद्गोशब्दत्वाभावादेव वारणम् । न च चित्रगुशब्दस्य सम्बुद्ध्येकवचने हे चित्रगो इत्यादावुक्तदोषः स्यादिति वाच्यम् । लाक्षणिक-प्रतिपदोक्तशब्दयो र्ग्रहणप्राप्तौ प्रतिपदोक्तशब्दस्यैव ग्रहणमित्यर्थिकया, शीघ्रोपस्थितिकत्व-विलम्बोपस्थितकत्वेत्येतदुभयबीजवत्या(लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)तिपरिभाषया सूत्रे प्रतिपदोक्तगोशब्दस्यैव ग्रहणेनादोषात् । न च गकारस्य विवक्षितत्वे गोशब्दात्परस्यैव सर्वनामस्थानस्य णित्वाद्द्यौरिति न स्यादिति वाच्यम् । तत्र ( द्योः सर्वनामस्थाने णित्वं वक्तव्यमि )तिवार्त्तिकेन (ओतोऽम्शसोरि) तिसूत्र(१)भाष्योक्तेनैव णिद्वद्भाव-

---

वात्प्राप्नोति । अत उत्तरम्पठति । तपकरणमनर्थकम् स्थानिवत्त्वप्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः । गोः पूर्वणित्वात्वस्वरेषु स्थानिवद्भावो न भवतीति । स चावश्यम्प्रतिषेध आश्रयितव्यः । इतरथा हि सम्बुद्धिजसोः प्रतिषेधः । यो हि मन्यते तपकरणसामर्थ्यादत्र न भविष्यतीति सम्बुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात् । हे चित्रगो, हे चित्रगव इति । अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणे कृते कस्मादेवात्र न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे एतया परिभाषया शक्यमुपस्थातुम् । नेत्याह न हीदानीं क्वचिदपि स्थानिवत्स्यादित्युक्तम् ।

(१) तत्र हि अम्युपसंख्यानम् । गाम्पश्य । किम्पुनः कारणान्न सिध्यति । वृद्धेर्बलीयस्त्वात् । परत्वाद्वृद्धिः प्राप्नोति । नवाऽनवकाशत्वात् । अनवकाशमात्वं वृद्धिम्बाधिष्यते । सावकाशम् । कोऽवकाशः । द्यां गच्छ । द्योश्च सर्वनामस्थाने वृद्धिर्विधेया । किम्प्रयोजनम् । य द्याव इन्द्र ते शतं शतं भूमिरुत स्युः । यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते । अनवकाशमात्वं वृद्धिम्बाधिष्यत इत्युक्तम् ॥

सिद्धेरित्याहुः ॥

विहितविशेषणञ्चेति । ( गोतो णिदि )ति सूत्रे गकारस्याऽविवक्षया लब्धे ( ओतो णिदि ) वचनं विहितविशेषणं स्वीकार्यम् । तथा च ओकारान्ताद्विहितं यत्सर्वनामस्थानं तण्णिद्वदित्यर्थे न काप्यतिव्याप्तिरितिमनसि निधाय दर्शयति–तेनेह न हे भानो इति । ननु (सम्बुद्धौ शाकल्यस्येतावनार्षे) इति सूत्रेण प्रकृतिविधानसामर्थ्यादेवाऽत्र णिद्भावाऽप्राप्त्याऽतिव्याप्त्यसम्भव इति चेन्न । तथा सति हे भानव इत्यस्यातिव्याप्तिविषयत्वादित्याह--हे भानव इति ॥

ननु ग्लौशब्दादमि शसि च ग्लौ अम् ग्लौ असिति स्थितौ ( वर्णग्रहणे सवर्णग्रहणमि ) तिशिष्टोक्त्या ( औतोऽम्शसोरि ) त्यत्रौकारग्रहणादात्वं दुर्वारमित्याशंक्य समाधत्ते-( औतोऽम्शसोरि )तीह न प्रवर्तते । ( ऐऔज् )तिसूत्रेण ओदौतोः सावर्ण्याभावज्ञापनादिति । एदैतोरोदौतोश्च सति सावर्ण्ये एकारेणैकारस्यौकारेणौकारस्य च ग्रहणसिद्धौ ( ऐ औजि )तिपृथक् सूत्रं व्यर्थं सज्ज्ञापयति सावर्ण्यं न भवतीति । अत एव ( अणुदित्सवर्णस्य चाप्रत्यय ) इतिसूत्रप्रसङ्गेऽभिहितः एदैतोरोदौतोश्च न मिथः सावर्ण्यमिति ग्रन्थसन्दर्भः सङ्गच्छत इति भावः ॥

इत्यजन्तपुल्लिँङ्गप्रकरणम् ।

## अजन्तस्त्रीलिङ्गप्रकरणम् ।

एङ्ह्रस्वादिति सम्बुद्धिलोप इति । ( सम्बुद्धौ चे ) त्यनेन सम्बुद्धिपदमनुवाद्य सुलोपविधानात्तत्तच्छब्दानुवादेन विहितत्वरूपस्य प्रतिपदोक्तत्वस्य सम्बुद्धौ सत्त्वेन ( हल्ङ्या-ब्भ्यो दीर्घात्सुतिस्यपृक्तं हलि ) तिसूत्रात्प्रागेत्वेऽस्याप्राप्त्या ( एङ्ह्रस्वादि )ति सूत्रेण सम्बुद्धिलोप इति भावः । न च द्वयोः सम्बन्धः सन्निपातस्तल्लक्षणजायमानस्य विधेः स्वातिरिक्तस-बन्धविघातकेऽनिमित्तकत्वमित्यर्थिकया ( उपजीव्यविरोधो न न्याय्यमित्येतन्मूलिकया ( सन्निपातलक्षणो विधिरनिमित्तं त-द्विघातस्ये )ति परिभाषया सम्बुद्धिनिमित्तकस्यैत्वस्य सम्बुद्धि-लोपे निमित्तकत्वाऽभावादेङ्ह्रस्वादित्यस्याऽप्राप्त्या हल्ङ्यादि-सूत्रस्योल्लेखोऽयुक्त इति वाच्यम् । ( कष्टाय क्रमणे ) ( नयास-योरि ) त्यादिनिर्देशात्तस्या अनित्यत्वेनेहाप्रवृत्त्या तदुल्लेखनस्य युक्तत्वात् ॥

( वृद्धिरेचि ) रमायै इति । ननु रमाशब्दाच्चतुर्थ्ये-कवचने ङयि ( याडाप ) इति याटि रमाया ए इतिस्थितौ ( आटश्चे ) त्यनेनैव वृद्धिसिद्धौ ( वृद्धिरेची )त्यस्योपन्यासोऽ-सङ्गत इति चेन्न । ( आटश्चे)ति सूत्रे टकारेत्संज्ञकाऽऽशब्दस्यैव ग्रहणात् याट्स्याटोष्टकारस्य च समुदायानुबन्धत्वादिहाऽतथा-त्वादाटश्चेत्यस्याऽप्राप्तावुक्तसूत्रोपन्यासस्य सङ्गतत्वा दितिभावः ।

एकादेशस्य पूर्वान्तत्वेन ग्रहणादाम्मि सर्वनाम्न इति सुडिति । ननु सर्वाशब्दात्षष्ठीबहुवचने आमि सर्वा आमिति स्थितौ सर्वशब्दस्यैव गणे पठितत्वादावन्तस्यातथात्वा-

दसर्वनामसंज्ञकत्वेन सुण्न स्यादिति चेन्न । ( अन्तादिवच्चे )तिसूत्रेण एकादेशस्य पूर्वस्थानिघटितपूर्वसमुदायवृत्तिसर्वनामत्वस्यैकादेशविशिष्टेऽतिदिष्टत्वात्सर्वेत्यावन्तस्य सर्वनामत्वसौलभ्यात्सुडुपपत्तेः । एवं सप्तम्येकवचने सर्वस्यामित्यत्रापि स्याडुपपत्तिर्बोध्येति । नचातिदेशेनावन्तस्य सर्वनामत्वोपपादनेऽप्येकादेशनिष्पन्नाकारे ह्याप्त्वाभावादावन्तत्वस्य सुतरामभावात्सुडागमानापत्तिरूपोक्तदोषस्तदवस्थ एव । अत एव खट्वेत्यादौ परादिवद्भावेनैकादेशपरस्थानिघटितपरसमुदायवृत्त्याप्त्वातिदेशादावन्तत्वलाभेन ( हल्ङ्याब्भ्यो )तिसुलोपः । न च परादिवद्भावेनात्राप्यावन्तत्वानयनात्तदुपपत्तिरिति वाच्यम् । उभयत आश्रयणे अन्तादिवद्भावाप्रवृत्तेरिति वाच्यम् । ( उभयत आश्रयणे नान्तादिवदि )त्यस्यैकदेशयुक्तित्वेनाऽकिञ्चित्करत्वात्परादिवद्भावेनाप्त्वातिदेशादावन्तत्वलाभेनोक्तानुपपत्तेः परिहारादिति भावः ॥

नागेशास्तु-( प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि )ति परिभाषया सर्वेसकारान्तस्य सर्वनामसंज्ञकस्य ग्रहणेन लिङ्गबोधकप्रत्ययविशिष्टस्य सर्वेत्यावन्तस्य ग्रहणात्सुडुपपत्तिः सुलभैवेति । नचास्य सत्येवान्तत्वे सर्वनामसंज्ञकाऽकारान्तसर्वशब्दग्रहणेन ग्रहणं स्यात्परमस्याऽऽबन्तत्वमेव कथमिति वाच्यम् । ( अन्तादिवच्चे )त्यतिदेशसूत्रेणाऽऽकाररूपस्थानिघटितपरसमुदायवृत्त्याप्त्वस्यातिदेशेन समुदायस्यावन्तत्वाक्षतेरित्याहुः ॥

( दिङ्नामान्यन्तराले ) इति प्रतिपदोक्तदिक्समासस्य ग्रहणान्नेह । यो्त्तरा सेत्यादि । अयम्भावः,

(लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)ति परिभाषया लाक्षणिकापेक्षया प्रतिपदोक्तस्याधिकप्राबल्यबोधनात् तत्तच्छब्दानुवादेन विहितत्वरूपप्रतिपदोक्तत्वस्य दिक्समासस्यैव सत्वादस्यैव च शीघ्रोपस्थितिकतया ग्रहणादन्यस्य च विलम्बोपस्थितिकत्वेन न ग्रहणमिति। योत्तरेत्यादेरर्थस्तु यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यादिरूपस्तथा चोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इति दिक्॥

बहुव्रीहिग्रहणं स्पष्टार्थमिति। ननु (विभाषा दिक्समासे बहुव्रीहावि)तिसूत्रे बहुव्रीहिग्रहणाऽभावेऽन्यस्यापिदिक्समासस्य ग्रहणापत्त्या तद्व्यावृत्तये बहुव्रीहिग्रहणस्यावश्यकत्वाद्वैयर्थ्याभावेन स्पष्टार्थत्वोक्तिरसङ्गतेति चेन्न। (दिङ्नामान्यन्तराले) इत्यस्य बहुव्रीह्यधिकारे पाठाद्दिक्समासस्य बहुव्रीहिग्रहणस्य सिद्धौ स्पष्टार्थत्वोक्तेः सङ्गतत्वादिति भावः।

असंयुक्ता ये डलकास्तद्वतां ह्रस्वो नेति। (अम्बार्थनद्यो ह्रस्व) इति सूत्रे (अम्बार्थं द्व्यक्षरं यदी)तिभाष्यकृता पठितत्वाद् द्व्यच्काम्बार्थकस्यैव ह्रस्वो भवतीति नियमाश्रयणेन डलकवतां ह्रस्वो नेत्यस्य भाष्यकृता प्रत्याख्यातत्वात्फलाभेदाय सामान्यतोऽपि वार्त्तिकस्यासंयुक्तविषयत्वमिति भावः। द्व्यक्षरं यदीत्यस्याऽङ्गत्वात् द्व्यक्षराम्बार्थकान्तस्य ह्रस्व इत्यर्थे जगदम्बेत्यादौ ह्रस्वो भवत्येवेत्यवधेयम्॥

इह पूर्वविप्रतिषेधेनेति। जराशब्दस्य प्रथमा-द्वितीयाद्विवचने औङि जरा आविति स्थितौ (औङ आपः) इत्यनेनशीभावे (जराया जरसन्यतरस्यामि) त्यनेन जरसादेशे च प्रा-

प्ते ( विप्रतिषेधे परं कार्यमि )त्यनेन परत्वाज्जरसादेशप्राप्ता-वपि पूर्वविप्रतिषेधेन श्यादेशे पश्चाज्जरसादेशप्रसङ्गे विरुद्धां ( सन्निपात )परिभाषामनित्यां मत्वा जरसीतिरूपमाहुः केचित् । तदयुक्तम् । ( सन्निपात ) परिभाषानित्यत्वे ज्ञापकत्वाभावात् । सतोऽपि ज्ञापकस्य भाष्यकृता मत्याख्यातत्वादिति केचिन्मतन्नि-र्मूलमेवेति भावः ॥

यद्यपि जरसादेशस्य स्थानिवद्भावेनेत्यादि । जरा-शब्दस्य प्रथमा-द्वितीया द्विवचने तृतीया-चतुर्थीपञ्चम्येकव-चने जरा औ-जरा आ-जरा ए-जरा असितिस्थितौ युगपज्ज-रसादेशे विभक्त्यादेशे च प्राप्ते परत्वाद्विप्रतिषेधसूत्रेण कृते जरसा-देशे तस्य स्थानिवद्भावेनाबन्तत्वादौङ आप इत्यादिमूलोक्तसू-त्रपञ्चकविहितेन कार्यपञ्चकेन भवितव्यम् । तथा नासिका-पृ-तनाशब्दानामपि तत्तद्विभक्तिषु नस् निश् पृद्रूपादेशैश्च भवित-व्यमिति पूर्वपक्षः । तत्समाधानश्चेत्थम्-आप्त्वधर्मस्याल्मात्र-स्थत्वादाबन्तत्वस्य तथात्वाभावात्तदाश्रयणेऽनल्विधाविति नि-षेधाऽप्रवृत्त्या स्थानिवत्त्वेन दोषस्तिष्ठत्येवेति नाशंकनीयम् । स-र्वेष्वाप्घटितसूत्रेषु औङ आप इत्यादिषु आ आविति प्रश्लेषा-दारूपस्यैवापो ग्रहणादतिदेशेनाऽऽबन्तत्वाश्रयणेऽप्यारूपत्वालाभा-भेनादोषादितिभावः । एवमेव ( हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृ-क्तं हलि )तिसूत्रेऽप्यारूपस्याऽऽपः, ईरूपस्य ङीपः प्रश्लिष्य दीर्घग्रहणप्रत्युदाहरणभूतम् , अतिखट्वो निष्कौशाम्बिरिति प्रयो-गद्वयं संसाध्य त्यक्तन्तत्रत्यदीर्घग्रहणम् । नचातिदेशात् ( सुपि-चे )तिकृते श्रूयमाणाऽऽकारे ह्याप्त्वाश्रयणादतिखट्वायेत्यत्र या-ट् स्यादिति वाच्यम् । आपः सामानाधिकरण्यानुरोधादधि-कृताङ्गपदस्य पञ्चम्यन्तत्वेन विपरिणामादुपसर्जनस्त्रीप्रत्यये तदा-

दिनियमसत्त्वेन ( प्रत्ययग्रहण ) परिभाषया तदादिपदोपस्थाप-
नात् आबन्ततदाद्यभिन्नादङ्गात्परस्य ङितो याडिति ( याडाप )
इत्यस्यार्थे आबन्ततदादेः खट्वेत्यस्याऽङ्गत्वाभावादतिखट्वेत्य-
ङ्गस्य चाबन्ततदादित्वाभावात्सूत्राप्रवृत्तेः। नच ( प्रत्ययग्रहणे
यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि ) तिपरिभाषया गृही-
तस्याऽऽबन्तस्याऽङ्गविशेषणत्वाद्द्वितीयतदन्तविधिनाऽऽबन्तान्ता-
दङ्गात्परस्य ङितो याडित्यर्थेतिखट्वायेत्यत्र दोषः स्यादेवे-
ति वाच्यम्। अङ्गविशेषणतयाऽङ्गाभिन्नाबन्ततदादेः परस्येत्यर्थ-
स्यैव लाभात्। नच स्त्रीप्रत्ययमात्रे न शास्त्रीयोपसर्जनत्वमिति
तदादिविधेरप्रसक्त्या तद्घटितसूत्रार्थः कथमिति वाच्यम्। शा-
स्त्रीयोपसर्जनत्वाऽभावेऽपि लौकिकोपसर्जनत्वस्य सत्त्वेन सूत्रा-
र्थोपपत्तेः। स्त्रीप्रत्ययमात्रे शास्त्रीयोपसर्जनत्वासम्भवेन लौकि-
कोपसर्जनत्वस्यैवावश्यमभ्युपगन्तव्यत्वात्। नच स्त्रीप्रत्यये शा-
स्त्रीयोपसर्जनत्वासद्भावेऽपि स्त्रीप्रत्ययान्ते तस्य सद्भावान्न दोष
इति वाच्यम्। शास्त्रीयोपसर्जनत्वस्य तत्र सद्भावेऽपि ( प्रत्य-
यग्रहण ) परिभाषया तदादिनियमाप्रसक्तेः। स्वान्तपर्याप्तश-
क्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनि-
ष्ठावच्छेदकताप्रयोजकत्वं हि लौकिकोपसर्जनत्वम्। अस्य सम-
न्वयप्रकारश्च यथा—स्वपदेन स्त्रीप्रत्ययस्य ग्रहणात्तदन्तमतिख-
ट्वेति तत्पर्याप्ता शक्तिः स्त्रीत्वविशिष्टखट्वाकर्मकातिक्रमणकर्तृ-
त्वरूपस्तन्निष्ठविशेष्यतानिरूपितप्रकारता अतिखट्वनिष्ठा तन्नि-
रूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वस्य स्त्रीप्रत्यये सत्त्वा-
ल्लक्षणसमन्वयः।

अत्र शेखरकृतः—( लक्षणप्रतिपदोक्तयोः प्रतिपदोक्त-
स्यैव ग्रहणमि )ति परिभाषया ( याडाप ) इत्यादौ प्रतिपदो-

क्ताऽऽकारस्यैव ग्रहणात् खट्वायै इत्यत्राऽऽकारस्य लाक्षणिकत्वान्न याडापत्तिः। नचोक्तपरिभाषाया वर्णग्रहणे प्रवृत्त्यभावाद्दोषः स्यादेवेति वाच्यम् । तत्राप्युक्तपरिभाषायाः प्रवृत्तेरोत्सूत्रेभाष्ये स्पष्टत्वात् । नच सूत्रस्य निशायै इत्यादौ चारितार्थ्येन खट्वायै इत्यादावेव याण्न स्यादिति वाच्यम् । लक्षणप्रवृत्तिमन्तरा यस्य रूपस्य न सम्भवस्तस्यैव लाक्षणिकस्योक्तपरिभाषाविषयत्वात् । एकादेशतः प्रागपि तद्रूपस्य सत्त्वादिह तथाऽभावेन परिभाषाऽप्रवृत्तेः । (पदाङ्गाधिकारे तस्य तदन्तस्य च) तिवार्त्तिकानुरोधादङ्गस्य विशेष्यत्वस्यैवौचित्यबोधनाच्च । अत एवाऽऽबन्तान्तं यदङ्गन्तस्मात्परस्य याडित्यर्थाभिप्रायेणाऽतिखट्वायेत्येतत्सिद्ध्यर्थमतिखट्वाय इति स्थितौ प्रवृत्तस्य (ङ्याब्ग्रहणेऽदीर्घ) इति वार्त्तिकस्य व्याख्यानं कृत्वा श्रुताऽऽकारस्मृतानुबन्धाभ्यामाप्त्वेनाऽऽशङ्क्य लाक्षणिकत्वेन तत्समाधायाऽऽकारप्रश्लेषेण तत्प्रत्याख्याने भाष्ये नैतत्परिहारार्थमन्यविध उपायप्रदर्शनम्। किञ्चाङ्गस्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य च स्पष्टमेव वैयर्थ्यं स्यात् । किञ्च खट्वाया अर्द्धेऽर्धखट्वायामित्यादौ याड् न स्यात् । किञ्चाऽऽकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त्वमित्याशङ्कनमप्ययुक्तमेव । दीर्घात्प्राक्स्थानिवद्भावस्य फलाभावादप्रवृत्त्या स्थानिन्याप्त्वबुद्धेरसत्त्वेन तदादेशे दीर्घे तदाप्त्वस्य दुर्लभत्वात् । परम्परया कार्यमादाय स्थानिवद्भावप्रवृत्तौ मानाभावात् । (याडाप) इति सूत्रे भाष्येऽपि अतिखट्वायेत्यत्र स्थानिवत्त्वात्प्राप्तस्य याटः प्रतिषेधो वक्तव्यो न वक्तव्यो ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधात् । नच दीर्घत्वे आबसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात् । स्थानिवत्त्वेतु त-

त्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिरित्युक्तम् । यद्यपि स्थानिवत्सू-त्रस्थभाष्येण याडापसूत्रस्थभाष्येण च हल्ङ्याप्सूत्रयाडापसू-त्रयोरेव प्रश्लेषलाभस्तथापि भाष्यस्योपलक्षणत्वमन्यसूत्रविषयो-दाहरणानभिधानम्वेत्युभयो रुचितं स्वयमेवोहनीयमितिप्राहुः ॥

ङिति ह्रस्वश्च । अत्र ( वामी ) तिसूत्राद्वेत्यस्यानुवृत्त्या-ह्रस्वयोरप्राप्तौ दीर्घयोस्तु ( नेयङुवङ्स्थानावस्त्री ) तिनिषेध-प्राप्तौ चास्यारम्भादप्राप्तविभाषेयम् । अत्र च वाक्यद्वयम् । त-त्राद्यवाक्ये यू इति-स्त्र्याख्यौ-अस्त्री-इयङुवङ्स्थानाविति नेति चानुवर्तते । द्वितीयवाक्ये यू इति-वेति-स्त्रीवाचकावित्येत-न्मात्रार्थकस्त्र्याख्याविति चानुवर्तते । इह इयङुवङ्स्थानौ स्त्री-शब्दाभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि पदानि ईदूतोर्विशेषणा-नि । ह्रस्वयोस्तु स्त्रियामित्येव विशेषणन्नतु स्त्रीत्वपर्यन्तम् । स्त्री-त्वपर्यन्तस्य विशेषणत्वे तु उभयलिङ्गानामिष्वशनिप्रभृतीनाम्, सर्वलिङ्गानां पटुमृदुप्रभृतीनाञ्च स्त्रीत्वेऽपि नदीत्वानुपपत्तिः । तेषां कैयटमतसिद्ध-लिङ्गान्तरानभिधायकत्वरूप-नित्यस्त्रीत्व-स्याऽभावात् । हरदत्तादिमतेऽपि ह्रस्वांशे नित्यग्रहणव्यावर्त्त्या-लाभाच्च । अत एवाख्याग्रहणं परित्यज्य स्त्रीशब्दमात्रं निष्कृष्य सम्बद्ध्यते इत्याशयेनाह--नित्यस्त्रीलिङ्गाविति । आद्यवाक्ये-स्त्र्याख्यपदस्य नित्यस्त्रीलिङ्गावित्यर्थकत्वादेव ( यूस्त्र्याख्यौ नदी ) तिसूत्रे भाष्ये दीर्घांशेऽस्य सूत्रस्य निषेधविकल्पत्वमु-क्तम् । तत्फलन्तु कटप्रुवे ब्राह्मण्यै इत्यत्र कटप्रूशब्दस्य लिङ्गा-न्तरविशिष्टार्थाभिधायकत्वेन लिङ्गान्तरविशिष्टार्थानभिधायक-त्वरूपकैयटोक्तनित्यस्त्रीत्वाभावान्नदीत्वाभावरूपम्बोध्यम् ।

परेतु-सूत्रेऽस्मिन्नाख्याग्रहणरहितस्यैव सम्बन्धात्कटप्रुवे ब्रा-

ह्मण्यै इत्यत्र नदीत्वविकल्पो भवत्येव। यद्वाऽत्र सूत्रे स्त्र्याख्यावित्येव स्त्रीवाचकावित्येतन्मात्रार्थकम्। तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम्। एवञ्च ङित्परं यदङ्गं स्त्रीबोधकन्तद्वा नदीसंज्ञकमिति पर्यवसितोऽर्थः। एवंविधसूत्रार्थनिष्पत्तेरेव वार्त्तिके प्रथमलिङ्गग्रहणञ्चेत्यस्याऽप्रवृत्त्यन्वाख्यायके ह्रस्वौ च इयङुवङ्स्थानौ च अर्थान्तरोपसंक्रान्तौ स्त्रीवचनावेव नदीसंज्ञौ भवतो नतु पुंवाचकाविति वक्तव्यम्। शकट्यै ब्राह्मण्यै क माभूत् अतिश्रिये ब्राह्मणाय, श्रिये ब्राह्मणायेति (यूस्त्र्याख्यावि) तिसूत्रशेषे भाष्ये उक्तम् तथाचैतद्भाष्यानुरोधात् समुदायस्य केनाप्यप्राप्त्या ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पविधानादवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावान्नास्य सूत्रस्य निषेधविकल्पः सम्भवति। नन्वेतस्याप्राप्तविभाषात्वं कुतो लभ्यत इति चेन्न। प्रवृत्तौ स्त्रीवचनावित्यत एव तल्लाभात्। नचास्य निषेधविकल्पत्वाभावे कथन्निषेधविकल्पः स्यादिति वाच्यम्। वाक्यद्वयेऽपि विधिविकल्पस्यैवात्र सूत्रे दर्शितत्वात्। नचैवं (ङिति ह्रस्वश्चे)त्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयत इति कैयटो व्याकुप्येतेति वाच्यम्। तस्य वाक्यद्वयपरत्वस्यैवौचित्यात्। नचैवमुपक्रमे कैयटेन कृतं निषेधविकल्पपरत्वेन व्याख्यानं विरुणद्धीति वाच्यम्। उपक्रमे निषेधपरत्वेन व्याख्यानस्य (स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वमजानता एकदेशिना) कृते (यू इति (१) ह्रस्वयोर्ग्रहणमिति पक्षोपपादने)युक्तिभूतत्वात्तस्येहाऽनादरणीयत्वादिति संक्षेपः॥

---

(१) तत्रहि किम्पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोः। किञ्चातः यदि दीर्घयो र्यू इति निर्देशो नोपपद्यते। अथ ह्रस्वयोः। इहा-

ननु शास्त्रेऽस्मिन् बाध्यविशेष–बाध्यसामान्यचिन्तेति पक्षद्वयम् । तत्र स्वविषये प्राप्तानामन्यतमो बाध्य इति बाध्यविशेषचिन्तापक्षः । स्वविषये यावन्तः प्राप्तास्ते सर्वे बाध्या इति बाध्यसामान्यचिन्तापक्षः । अत्र बाध्यविशेषचिन्तापक्षस्याश्रयणात् मध्यवर्तिनोऽपवादाः पूर्वोपस्थितानेव विधीन्बाधन्ते नतु पश्चादुपस्थितानित्यर्थकेन (मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानि)ति न्यायेन, आचिरादेशेन दीर्घोत्त्वयोरेव बाधान्नाद्यपक्षस्यात्र ग्रहणं किन्तु द्वितीयपक्षस्यैव । तथा च तेन स्वविषये प्राप्तानां गुणदीर्घोत्वानां बाध इत्याह—गुणदीर्घोत्वानामपवाद इति । उक्तपक्षद्वयस्य जातिव्यक्तिपक्षवल्लक्ष्यानुसाराद्व्यवस्था बोध्या । नच प्रियतिस्रित्यादौ रादेशस्य सावकाशत्वेनापवादत्वाऽभावादुक्तग्रन्थो न सङ्गतिमाप्नोतीति वाच्यम् । उक्तप्रयोगस्य यणा गतार्थत्वेन रादेशस्यावकाशत्वाभावात् । तथा च तिस्रस्तिष्ठन्तीत्यत्र (जसि चे)ति गुणस्य, तिस्रः पश्यन्तीत्यत्र (प्रथमयोः पूर्वसवर्ण) इति पूर्वसवर्णदीर्घस्य, प्रियतिस्रः स्वमित्यत्र (ऋत उद्)ित्युत्वस्य रादेशेन बाधो बोध्य इति भावः ॥

---

कटे अत्रापि प्रसज्येत । नैष दोषः । अवश्यमत्र विभाषा नदीसंज्ञैषितव्या । तात्पर्येणावश्यमित्युक्तिः । उभयं हीष्यते हेशकटि, हेशकटे इति च । इह तर्हि शकटिबन्धुरिति । नदीबन्धुनीत्येष स्वरः प्राप्नोति । अत्र पूर्वपदान्तोदात्तत्वं स्यात । सिद्धान्ते तु (शकटि शकट्योरि)ति फिट्सूत्रेण त्रयाणाम्पर्यायेणोदात्तत्वात्पूर्वपदप्रकृतिस्वरेण त्रयोऽप्यच उदात्ता भवन्ति । इह च बहुशकटिरिति (नद्यृतश्चे) ति कप् प्रसज्येत इत्याशंक्य ( यूस्त्र्याख्यौ नदी ) ( नेयङुवङ्स्थानावस्त्री ) ( वामि ) ततो ( ङिति ) । ङिति च इयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवतः । ततो ( ह्रस्वौ ) ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्स्थानौ वा नेति निवृत्तमित्युक्तम् ।

स्त्रियामित्यस्य त्रिचतुरोर्विशेषणत्वान्नेहेति। सान्निध्यात्स्त्रियामिति पदम् अङ्गस्य त्रिचतुरोश्च विशेषणं सम्भवति तत्र स्त्रियामित्यस्याङ्गविशेषणत्वाभ्युपगमे स्त्रियां विद्यमानं यत्त्रिशब्दान्तमङ्गं चतुश्शब्दान्तश्चाङ्गं तदवयवस्य निर्दिश्यमानस्य त्रिशब्दस्य चतुश्शब्दस्य च तिसृचतस्रादेशौ स्त इति (अचिर ऋत) इत्यस्यार्थे प्रियास्त्रयस्त्रीणि वा यस्येति विग्रहे प्रियत्रिरित्यत्र त्रिशब्दान्ताङ्गस्य स्त्रियां विद्यमानत्वात्तिस्रादेशो दुर्वारस्तद्वारणाय त्रिचतुश्शब्दयोरेव विशेषणत्वमभ्युपगन्तव्यम्। तथा चोक्तविग्रहे त्रिचतुश्शब्दयोः स्त्रियामविद्यमानत्वेन न तिस्रादेशापत्तिः। नन्वङ्गस्य त्रिचतुरोर्विशेषणत्वे किम्प्रमाणमितिचेन्न। (श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि)ति न्यायस्यैव प्रामाण्यादिति भावः॥

स्वमो र्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेश इति। ननु प्रियास्तिस्रो यस्य कुलस्येति विग्रहे त्रिशब्दस्य स्त्रियां विद्यमानत्वात्तिस्रादेशो दुर्वार इति चेन्न। (स्वमोर्नपुंसकादि) ति प्रियत्रिशब्दात्परस्य सोर्लुकि तस्य (नलुमताङ्गस्ये )तिनिषेधेन प्रत्ययलक्षणाभावाद्विभक्तिपरत्वाभावेन तिस्रादेशाऽप्राप्तेः। नच (नलुमताऽङ्गस्ये)त्यस्यानित्यत्वात्र प्रत्ययलक्षणप्रतिषेध इति वाच्यम्। तथा सति तत्र तिस्रादेशस्यैवेष्टत्वात्। नचैतस्यानित्यत्वे किम्प्रमाणमिति वाच्यम्। (इकोऽचि विभक्तावि)त्यत्राचीत्यस्यैव प्रमाणत्वात्। नचाचीत्यस्यासत्त्वेऽनजादौ भ्यामादौ नुमापत्तिरिति वाच्यम्। तत्र सत्यपि नुमि नलोपेनेष्टरूपोपपत्तावचीत्यस्य ज्ञापकत्वोपपत्तेः। नच सम्बुद्धौ (न ङिसम्बुद्ध्योरि)ति निषेधान्नलोपाप्राप्त्याऽतिप्रसक्तस्य नुमोऽभावार्थमचीत्यस्य सार्थक्येन ज्ञापकत्वन्न स्यादि-

ति वाच्यम् । सम्बुद्धेर्लुका शब्देन लोपाद्विभक्तिपरत्वाभावेन नुमोऽप्राप्तेः । नच सम्बुद्धावपि प्रत्ययलक्षणेन विभक्तिपरत्वादतिप्रसक्तनुम्वारणाय तदिति वाच्यम् । (नलुमताऽङ्गस्ये) त्यस्यानित्यत्वमन्तरा प्रत्ययलक्षणाऽसम्भवात् । नचाचीत्यस्योत्तरार्थत्वेन सार्थक्याद्वैयर्थ्याभावेन ज्ञापकत्वाऽसम्भव इति वाच्यम् । तस्योत्तरार्थत्वे तत्रैव कर्तव्यत्वौचित्यादिह करणस्य स्पष्टवैयर्थ्येन ज्ञापकत्वाक्षतेः । तथा चाचिग्रहणेन न लुमतेतिनिषेधशास्त्रस्यानित्यत्वबोधनात्सम्बुद्धौ नुमो वारणाय तस्यावश्यकतया स्वांशे चारितार्थ्यम् । नच सम्बुद्धिगुणमात्रविषय एव तस्यानित्यत्वात्कथमत्रानित्यत्वमिति वाच्यम् । लक्ष्यानुसारेण सम्बुद्धेरन्यत्रापि क्वचित्तदनित्यत्वाभ्युपगमात् । अत एव प्रियतिसृ-प्रियत्रीति मूलोक्तरूपद्वयं कैयटेनाप्यभ्युपगतमिति भावः ॥

ननु प्रियत्रिशब्दादौङि जसि च विभक्त्यादेशे तिस्रादेशे च प्रियतिसृ इ-प्रियतिसृ ई इति स्थितौ ( अचिर ऋत ) इति रादेशे ( इकोऽचि नुम्विभक्तावि ) ति नुमि च युगपत्प्राप्ते परत्वाद्रादेशस्यैव ( विप्रतिषेध ) सूत्रबलात्प्राप्तनिश्चये तत्र पूर्वविप्रतिषेधाश्रयणान्नुमेवेत्याह-रादेशात्पूर्वविप्रतिषेधेन नुमिति । नच रादेशे पूर्वविप्रतिषेधाश्रयणे किम्प्रमाणमिति वाच्यम् । प्रियतिसृणी-प्रियतिसृणीति भाष्योदाहरणद्वयस्यैवात्र प्रमाणत्वात् । किञ्च ( न तिसृ चतसृ ) तिज्ञापकेन सामान्यतोऽनागमविषये रादेशप्रवृत्ते र्ज्ञापनात् । अत एव प्रियत्रिशब्दस्यषष्ठीवहुवचने अमि प्रियतिसृणामित्यत्र नुट्सिद्धिः । अन्यथा रादेशे ह्रस्वान्तत्वाभावान्नुण्नेति तदाशयः ॥

द्वेरत्वे सत्याविति । स्त्रीवाचकाद्द्विशब्दस्य प्रथमा-द्वि-

तीया विभक्त्यो द्विवचने द्वि आविति स्थितौ (त्यदादीनामः)इत्यनेनाऽत्त्वे (अजाद्यतष्टाबि)ति टापि (औङ आप)इति श्यादेशे (आद्गुण)इति गुणादेशे च कृते द्वे द्वे इति सिद्ध्यति । अयमत्र सन्देहो जागर्त्ति-(सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये)ति परिभाषया विभक्तिसान्निपातेन जायमानात्वस्य टापूद्वारा विभक्तिविघाते निमित्तत्वाभावाट्टापोऽप्रवृत्तेरिष्टप्रयोगो न स्यादिति पूर्वपक्षः । तं समाधत्ते-(न यासयोरि)ति निर्देशादुक्तपरिभाषाऽप्रवृत्तेरदोषात् । नच (असिद्धं बहिरङ्गमन्तरङ्गे) इति परिभाषयाऽन्तरङ्गटापूदृष्ट्या बहिरङ्गस्यात्वस्याऽसिद्धत्वान्न टाविति वाच्यम् । अस्याः परिभाषायाश्चाप्युक्तसूत्रनिर्देशेनैवाऽनित्यत्वज्ञापनात् । नच (अङ्गवृत्ते पुनर्वृत्तावविधिरि)ति परिभाषयाऽङ्गकार्यस्याऽत्वस्य जायमानत्वे पुनरन्यस्याङ्गकार्यस्य टापः प्रवृत्तिर्न स्यादिति वाच्यम् । (द्वयोरेकस्य निर्धारणे डतराजि)ति सूत्रे द्वयोरित्यत्र (ओसि चे)ति कृतैत्वनिर्देशात्तदनित्यत्वज्ञापनात् । तथा च नोक्तप्रयोगसिद्धौ बाधकः कोऽपीति भावः ॥

ननु (लिङ्गविशिष्ट) परिभाषया ङीषन्तसखीशब्दस्यापि सखिशब्दग्रहणेन ग्रहणादनङादिकार्यं प्राप्नोतीत्यभिप्रेत्याशङ्कते-प्रातिपदिकग्रहणे इत्यादि । समाधत्ते (विभक्तौ लिङ्गविशिष्टाग्रहणामि)ति । विभक्तिनिमित्तके कार्ये कर्तव्ये न लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं भवतीति तदर्थः । अत्र घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषाऽनित्यत्वबोधनात्सिद्धेयमिति भावः ॥

ननु (ङिति ह्रस्वश्चे)ति सूत्रे ह्रस्ववाक्येऽप्यस्त्रीत्यस्य स-

म्बन्धे स्त्रीशब्दावयवभिन्नो यो ह्रस्वेवर्णस्तदन्तस्य नदीत्वमित्यर्थेऽतिस्त्रियै इत्यत्र नदीत्वं न स्यादत्र स्त्रीशब्दावयह्रस्वेवर्णान्तत्वाऽभावादित्याशंक्य समाधत्ते—अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदास इति। तत्र हेतुमाह—तत्सम्बद्धस्यैवानुवृत्तेरिति। इयङुवङ्स्थानिसम्बद्धस्यैवानुवर्तनादित्यर्थः। वाक्यभेदाद्यापत्तिभिया नाऽस्त्रीत्यत्र प्रसज्यप्रतिषेधाश्रयणं किन्तु पर्युदासाश्रयणमेव। ननु इयङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधो दुर्वार इत्याशङ्कान्निवारयितुमाह—दीर्घस्यैवायं निषेधो न तु ह्रस्वस्येति। निषेधशास्त्रे ह्रस्वपदाभावान्न निषेध इति तदाशयः॥

ननु पादान्तरम्विनाऽपि स्त्रियां वर्तमानात्वरूप–वृत्तिकाराद्युक्तनित्यस्त्रीत्वस्य नदीसंज्ञाविधौ प्रधीशब्दस्य स्वीकारात् आध्यै प्रध्यै ब्राह्मण्यै इतिभाष्यप्रयोगोपपत्तिः। अन्यथा लिङ्गान्तरानभिधायकत्वरूप–कैयटोक्तनित्यस्त्रीत्वस्यासत्त्वाद्भाष्यप्रयोगोऽनुपपद्यते। एवकारस्य भिन्नक्रमत्वान्नित्यमित्यस्य पदान्तरं विनाऽपीत्यर्थः। उक्तभाष्यप्रयोगे बहुव्रीहिस्वीकारे तु (नद्यृतश्चे) ति कपो दुर्वारत्वान्नासौ समासः। किन्तु आध्यायति–प्रकृष्टं ध्यायतीति व्युत्पत्तिर्बोध्या। अत्र च कैयटोक्तस्य लिङ्गान्तरानभिधायकत्वरूपनित्यस्त्रत्वस्याऽभावादुक्तभाष्यप्रयोगानुपपत्तिः प्राप्नोति। तथा च प्रदर्शितव्युत्पत्तिकस्य प्रधीशब्दस्य वृत्तिकाराद्युक्तनित्यस्त्रीत्वसत्त्वाल्लक्ष्मीशब्दवदेव रूम्बोध्यमित्याह–प्रधीशब्दस्य वृत्तिकारादीनाम्मते लक्ष्मीवद्रूपमिति। वस्तुतस्तु आध्यै प्रध्यै–ब्राह्मण्यै इति भाष्यप्रयोगे बहुव्रीहिसमास एव बोध्यो नतु समासान्तरः कश्चित्। न च बहुव्रीहिसमासेऽभ्युपगते कवापत्तिर्दुर्वारेति वाच्यम्। समासात्प्रागेव नदीत्वं

यस्य भावि तदुत्तरपदकादेव कपो विधानस्य ऋत्साहचर्येण लाभादिह तथाऽभावेन तदभावात् । ततश्च नित्यपदस्य स्वारासिकार्थं विहायातिविप्रकृष्टर्थपरत्वाभ्युपगमे विनिगमकाभावात्कैयटोक्तनित्यस्त्रीत्वस्यैवौचित्यम् । एतन्मते प्रधीशब्दस्य लिङ्गान्तरानभिधायकत्वरूपनित्यस्त्रीत्वाभावात्पुंवदेव रूपम्बोध्यमिति भावः ॥

कथं तर्हि—हापितः क्वासि हे सुभ्रु इति । केवलभ्रूशब्दस्योवङ्स्थानित्वात्समुदायस्य सुभ्रूशब्दस्याप्युवङ्स्थानित्वेन ( नेयङुवङ्स्थानावस्त्री )ति निषेधशास्त्रेण नदीत्वनिषेधेन सम्बोधने ह्रस्वाभावान्मूलोक्तस्य सुभ्रु इति ह्रस्वान्तप्रयोगोऽसङ्गत एवेति पूर्वपक्षाभिप्रायः । समाधानमाह—प्रमाद एवायमिति वहव इति । अनवधानरूपस्यैव प्रमादत्वात्तस्य च काव्ये पुष्टिकरत्वेन गुण एवेति भावः । केचित्तु—(नञ्घटितमनित्यमि )ति परिभाषया नञ्घटितशास्त्रमात्रस्यानित्यत्वबोधनान्नेयङुवङ्स्थानावस्त्रीति शास्त्रस्यापि नञ्घटितत्वेनानित्यत्वबोधनादप्रवृत्त्या न दोष इति भावः ॥

आरम्भसामर्थ्यान्नित्यत्वसिद्धौ णग्रहणं स्पष्टार्थमिति । ननु ( एकाजुत्तरदे णः ) इति सूत्रेण ( रषाभ्यां नोणः समानपदे ) इति सूत्रादनुवृत्तणकारेणैव णत्वविधानसिद्धौ पुनस्तत्र णग्रहणं व्यर्थम् । नच ( वा भावकरणयोरि ) त्युत्तरसूत्राद्वापदानुवृत्त्यभावाय णग्रहणं तिष्ठतीति वाच्यम् । अस्यारम्भसामर्थ्यादेव नित्यत्वोपपत्तेः । नचास्य पुनर्भूणाम् । वृत्रहणावित्यादौ णत्वार्थमावश्यकत्वादारम्भसामर्थ्यादित्युक्तिर्न सङ्गतेति वाच्यम् । ( प्रातिपदिकान्तनुम्विभक्तिषु चे )ति सूत्रेणैव तत्तल्लक्ष्योपपत्तेरिति भावः ॥

ननु ( न षट्स्वस्रादिभ्यः ) इत्यत्र स्वस्रादिपदेन कियतां ग्रहणमित्याशंक्य परिगणनरूपसमाधानमाह-स्वसा तिस्रश्चतस्रश्चेति । नच ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) ति परिभाषयैव तिसृचतस्रोर्ङीबभावोपपत्तौ तयोः स्वस्रादिगणे पाठो व्यर्थ इति वाच्यम् । उक्तपरिभाषानित्यत्वज्ञापनार्थत्वेन सार्थक्यात् । नच (न तिसृचतसृ)ति सूत्रेण नामि दीर्घत्वप्रतिषेधज्ञापनादेव तिसृचतस्रोर्ङीबभावोपपत्तौ पुनस्तयो र्गणे पाठो व्यर्थ एवेति वाच्यम् । तथा सति ( कृन्मेजन्त ) इति सूत्रस्थकैयटरीत्या तयोरिह पाठाभावस्यैवेष्टत्वादिति भावः ।

इत्यजन्तस्त्रीलिङ्गप्रकरणम् ।

## अजन्तनपुंसकलिङ्गप्रकरणम् ।

अतोऽम् । अत इत्येतदधिकृतस्याऽङ्गस्य विशेषणम् । ( स्वमोर्नपुंसकादि ) तिचानुवर्तते । ( स्वमोर्नपुंसकादि ) तिप्राप्तस्य लुको बाधकत्वमेतत्सूत्रविहितस्यामः । ( येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती ) तिन्यायात् । उत्सर्गप्रतियोग्यविषयेऽचारितार्थ्यं ह्येतन्न्यायप्रवृत्तिबीजन्तत्प्रकृतेऽस्त्येव । नचोत्सर्गशास्त्रस्य प्रवृत्त्युत्तरं यत्रापवादत्वेनाभिमेतस्य प्राप्तिस्तत्रापवादत्वव्यवहारो भवति । प्रकृतेतूत्सर्गस्य लुकः प्रवृत्त्युत्तरं नाऽम्भावस्य प्राप्तिः स्थान्यभावादिति कथमपवादत्वव्यवहार इति कथनमम्भावे लुगभावार्थन्तच्च नोचितं स-

न्निपातपरिभाषयैव लुगभावस्य सिद्धेरिति वाच्यम् । लुकः पूर्वमम्भावस्य निरवकाशत्वेन प्रवृत्तिरित्यत्रैव तात्पर्यात् । कृते त्वम्भावे ( सन्निपात ) परिभाषया लुगभावस्य सिद्धिरिति त्वन्यदिति ।

नन्वेकमात्रालाघवार्थम् ( अतोऽमि ) त्यस्य स्थाने ( अतो म् ) इत्येवास्तु सूत्रमिति चेन्न । तथा सूत्रकरणे ज्ञानमित्यत्र सोर्मादेशे ( सुपि चे )ति दीर्घापत्तेः ) नच ( सन्निपातलक्षणो- विधिरनिमित्तं तद्विघातस्ये )ति परिभाषया प्रकृतिप्रत्ययसान्निपातलक्षणजायमानस्य मादेशस्य स्वातिरिक्तसम्बन्धविघातके दीर्घेऽनिमित्तत्वात्प्रथमैकवचने दोषाभावात् ( आदेः परस्ये ) ति सूत्रेणाऽमोऽकारस्थाने मादेशेऽन्त्यमकारस्य संयोगान्तलोपेन द्वितीयैकवचनेऽपीष्टरूपसिद्ध्या दोषाभावाच्च ( अतोम् ) इत्येव सूत्रमस्त्विति वाच्यम् । म् इत्येव सूत्रसत्त्वे सम्बोधने हे ज्ञानेत्यत्र ( सन्निपात ) परिभाषया सम्बुद्धिलोपानापत्तेः । तत्र मानित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात् । इत्युक्तदोषदुर्वारतया नात्र मिति छेदोऽभ्युपगन्तव्यः किन्तु यथाश्रुत एवेति विज्ञेयम् । यथाश्रुतस्य सूत्रकृदभिप्रेतत्वादेव ( एङ्ह्रस्वात्सम्बुद्धेरि )ति सूत्रे हेज्ञानेत्यादौ मलोपार्थं हेकतरदित्यत्र सम्बुद्धिलोपाभावार्थश्चाङ्गाक्षेपो वैयधिकरण्येनान्वयो हल्पदानुवृत्तिश्चाऽभ्युपगताः । मितिच्छेदस्य सूत्रकृदभिप्रेतत्वे तु वर्णग्रहणे सर्वत्र तदन्तग्रहणार्थमङ्गाक्षेपमात्रस्यैव कर्तव्यत्वेन ( येन यदाक्षिप्तन्तत्तस्य विशेषणमि )तिन्यायेन तादृशादङ्गात्परा या सम्बुद्धिरित्येव लाघवाद्वदेत् । वैयधिकरण्यसम्बन्धेनान्वयो हल्पदानुवृत्तिश्च न कर्त्तव्येति भावः । भाष्ये तु सूत्रकृदभिमेतन्यासस्यैवेष्टतामवधार्य अङ्गाक्षेपवैयधिकरण्यान्वयहल्पदानुवृत्त-

यश्चास्थिता नतु मितिच्छेदोऽभिहित इति भाष्यविरुद्धकल्पन-मन्याय्यमिति नागेशः।

केचित्तु-यथा ( एङ्ह्रस्वात्सम्बुद्धेरि ) ति सूत्रे हल्ग्रहणानुवृत्तौ कुण्डशब्दस्य सम्बुद्ध्येकवचने सोरमादेशे ( आदेः परस्ये ) सकारलोपे ( सुपि चे ) ति दीर्घे कुण्डामिति प्राप्नोति, (सन्निपात) परिभाषानित्यत्वाभिप्रायेणोक्तन्तथैवात्र मिति च्छेदपक्षेऽपि दीर्घे कर्तव्ये ( सन्निपात ) परिभाषाया अनित्यत्वादप्रवृत्तिः स्यात्। एवञ्चोक्तपरिभाषाबलाज्ज्ञानमित्यत्र दीर्घवारणं कस्यचिदयुक्तमेवेत्याहुः। अत्रेदं बोध्यम्-अमितिच्छेदपक्षेऽदन्तसन्निपातनिमित्तकस्याऽमादेशस्य न साक्षात्तत्सान्निपातविघातकदीर्घम्प्रति निमित्ततेति ( सन्निपात ) परिभाषाऽप्रवृत्तिस्तस्मिन्पक्षे सम्भवति। म् इति छेदपक्षे तु सान्निपातलक्षणविधे र्मकारादेशस्य सन्निपातविघातकदीर्घनिमित्तत्वमुचितमेवेति। सूत्रेऽत इत्यत्र तकार उच्चारणार्थो नतु ग्रहणार्थः। न च नकारस्योच्चारणार्थत्वे ( म् ) इति छेदे ( सन्निपात ) परिभाषया दीर्घवारणं कथमिति वाच्यम्। यादृशशब्दसान्निपातेन सोरादेशस्तस्य विनाशेनादोषात्। अत एव दाक्षिरित्यादौ अङ्गसंज्ञा अकारान्तप्रकृतिप्रत्ययसन्निपातकृताऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशंक्याऽनित्यत्वेन भाष्ये समाहितम्। अतस्तस्य सान्निपातस्य शब्दोपात्तत्वाग्रहाभावात्। भाष्यकृता तु मादेशे (सान्निपात) परिभाषया सम्बुद्धिलोपाप्राप्तिभिया ( अम् ) इत्येव च्छेदमङ्गीकृत्य ( एङ्ह्रस्वादि ) त्यत्रव्याधिकरणान्वय-हल्पदानुवृत्तिरूपगौरवं फलमुखत्वान्न दोषावहमित्यनुसृतम्। परिभाषाऽनित्यत्वेन तु न समाहितम्।

तस्या अगतिकगतित्वात् । किञ्च तस्या अनित्यत्वे दीर्घापत्ति-रिति तत्रैव भाष्ये ध्वनितत्वादिति दिक् ॥

एङ्ह्रस्वादिति हल्मात्रलोपः, हेज्ञानेति । अय-म्भावः, ज्ञानशब्दस्य सम्बुद्ध्येकवचने सौ हे ज्ञान सु इति स्थि-तौ सम्बुद्धिलोपाऽमादेशयोः प्राप्तौ ( विप्रतिषेध ) सूत्रबलेन परत्वात्सम्बुद्धिलोपं बाधित्वा सोरमादेशे कृते ( अमि पूर्वरूप ) इति पूर्वरूपत्वे च जाते—तस्यान्तवद्भावाद्ध्रस्वान्तमङ्गं भवतीति ततः परस्य सम्बुद्धिसम्बन्धिनो मकारस्य लोपसिद्धिरिति । नचान्तवद्भावेनैकादेशविशिष्टेऽङ्गत्वातिदेशेऽपि पूर्वरूपेणाऽमो-ऽकारस्यापहारेण सम्बुद्धेर्ह्रस्वान्ताङ्गात्परत्वाभावाल्लोपो न स्यादिति वाच्यम् । पूर्वरूपेणाऽमोऽकारापहारेऽपि प्रदर्शितरी-त्यैकादेशविशिष्टेऽङ्गत्वस्य सद्भावेन ह्रस्वान्तादङ्गात्परो यः स-म्बुद्धेरवयवो हलित्यर्थकरणात् अङ्गात्परस्याः सम्बुद्धेरभावेऽपि-तदवयवस्य मकाररूपस्य हलोऽङ्गात्परत्वेन लोपोपपत्तेरिति भावः॥

अद्ड्डतरादिभ्यः पञ्चभ्यः । अत्राद्डेति पाठः । न-चात्र दकारस्य ष्टुत्वं डकारस्य संयोगान्तलोपश्च कुतो नेति वाच्यम् । तथा सति सुस्थानिकादेशभूतस्याऽद्डेत्यस्य स्वरू-पभङ्गापत्तेरिति कैयटः । एवञ्च नित्यस्यापि शास्त्रस्य सूत्रेषु छन्दोवत्सूत्राणीतिवचनेन छन्दस्त्वातिदेशादप्रवृत्तिरि भावः । पञ्चभ्य इति । अधिकव्यवच्छेदायाऽस्य सर्वाद्यन्तर्गणत्वात् ॥

परे तु । डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वाद-ङ्गस्येत्यनेन नाऽन्वयार्हमिति डतरादिभ्यो विहितयोरङ्गसंज्ञानि-मित्तभूतयोः स्वमोरित्यर्थ इति ( सर्वादि ) सूत्रे भाष्ये स्पष्टम् । तथा च परमकतरं कुलमित्यादौ नाऽद्डादेशापत्तिः । यत्तु कै-

यदेन अर्थद्वारकविधानमाश्रयितव्यं तेन परमकतरदित्यभिहित-न्तन्न युक्तम् । तस्य डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्वी-कारे पञ्चम्यन्तात्तादृशार्थप्रतीतेरसम्भवात् । षष्ठ्यर्थे पञ्चमी स्वीकारे च विरुद्धविभक्तित्वादिति भाष्यासङ्गतेः । विधान-स्य सर्वथानाश्रयणादर्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतेश्च । नचैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम् । तत्प्रत्याख्यानायैवैतद् भाष्यप्रवृत्तेः । परमकतरादिव्यावृत्तये-ऽवश्यमाश्रयणीयेन विहितविशेषणेनैवाऽतिकतरादिव्यावृत्तिसि-द्धावुपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति तदाशयः । ( त्यदा-दीनामि ) इत्यत्र षष्ठ्यन्तत्वात् । त्यदादीनामित्यर्थद्वारकं वि-भक्तिविशेषणम् । ( अस्थिदधी ) सत्र व्याख्यानादङ्गमर्थद्वार-कं विभक्तिविशेषणमित्यपि तत्रैव भाष्ये स्पष्टमिति प्राहुः ॥

टेर्लुप्तत्वात्प्रथमयोरिति पूर्वसवर्णदीर्घः । एङ्ह्र-स्वादिति सम्बुद्धिलोपश्च न-हेकतरदिति । अदूडादेश-म्विहाय तत्स्थानेऽदादेशं दादेशं च विधायापि हेकतरदित्यस्य-सिद्धावादेशे डित्वम्व्यर्थमिति पूर्वपस्य जायमानत्वे समाधान-माह-टेर्लुप्तत्वादित्यादिना । डानुबन्धराहितस्यादेशस्याऽभ्युपग-मेऽदादेशपक्षे ( प्रथमयोः पूर्वसवर्ण ) इति दीर्घापत्तिर्दुर्वारा स्यात् । दादेशपक्षे च दकारस्य ह्रस्वात्परत्वेन ( एङ्ह्रस्वादि ) ति सम्बुद्धिलोपापत्तिश्च दुर्वारा स्यादिति । अतो डानुबन्धविशि-ष्ट एवादेशोऽभ्युपगन्तव्यस्तथा सति प्रकृत्यकारस्य लोपे न पू-र्वसवर्णदीर्घस्य दकारलोपस्य चापत्तिरिति भावः ।

सोरमादेशे कृते ( सन्निपात ) परिभाषया न जरसिति । अयम्भावः, अविद्यमाना जरा यस्य कुलस्य त-

त्कुलमित्यत्र अजरशब्दस्य प्रथमैकवचने सौ अजर सु इति स्थितावजादिविभक्तिपरत्वाभावाज्जरसादेशाप्राप्तावपि सोरमादेशे कृते त्वजादिविभक्तिपरत्वेन जरसादेशो दुर्वार एवेति पूर्वपक्षस्य समाधानमिदम् । उक्तपरिभाषाप्रवृत्तिश्चेत्थं सङ्घटनीया तथा हि प्रकृतिप्रत्यययो र्योऽकारान्ताव्यवहितोत्तरसुत्वरूपः, स्वव्यवहितपूर्वाकारान्तत्वरूपश्च सन्निपातस्तल्लक्षणजायमानस्याऽमादेशस्य स्वातिरिक्तसम्बन्धविघातके जरसादेशे निमित्तत्वं न स्यात् । जरसादेशेनोक्तरूपसन्निपातस्य स्पष्ट एव विघात इति ॥

सान्तमहतः संयोगस्य । अत्र सान्तेति लुप्तषष्ठीकं पृथक्पदम् संयोगस्येत्यनेन समानाधिकरणम् । (नोपधायाः)(सर्वनामस्थाने चाऽसम्बुद्धावि) त्यनुवर्तते । तदाह—सान्तसंयोगस्येति । उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम् । नच पारिभाषिकार्थस्यैवोपाधशब्दस्य ग्रहणमस्तु मास्तु च पूर्वत्वमात्रोपलक्षणस्य ग्रहणमिति वाच्यम् । तस्याऽसम्भवादेवाऽग्रहणात् । सर्वनामस्थान इति सान्तसंयोगस्य विशेषणं नत्वङ्गविशेषणम् । सर्वनामस्थान इत्यस्य सान्तसंयोगविशेषणत्वादेव हंसशिरांसीत्यादौ न हंसशब्दावयवाऽकारस्य दीर्घापत्तिः। अङ्गविशेषणत्वे तु तत्रापि दीर्घो दुर्वार एव स्यादिति बोध्यम् । नच सर्वनामस्थान इत्यस्याऽङ्गांशे उत्थिताकांक्षत्वादङ्गस्य विशेषणत्वं स्यात्ततश्चोक्तस्थले दोषः स्यादेवेति वाच्यम् । तथा सति ( अनन्त्यविकारेऽन्त्यसदेशस्ये )ति परिभाषयोक्तदोषपरिहारात् । नचात्रोक्तपरिभाषया उक्तातिप्रसङ्गवारणाय स्वीकारे तु ( स्महत ) इत्येव सूत्रं कर्तव्यम् । नोपधाया इति वर्तते । अङ्गस्येतिप्रकृतम् । तच्च विशेष्यम् । स्महत इत्यस्य विशेषणत्वात्तदन्तविधिना सान्तम्महच्छब्दान्तश्च

यदङ्गं तदवयवो यो नकारस्ततः पूर्वस्याऽचो दीर्घ इत्यर्थे सक-लेष्टसिद्धौ संयोगग्रहणमन्तग्रहणञ्च व्यर्थमिति वाच्यम् । अन्त-तीत्यन् । त्सरतीति त्सर अन् च त्सर् च अन्त्सरौ । तावा-चष्टेऽन्त्सयति । ततः क्विपि अन्त्स इति प्रातिपदिकन्ततः सुपि प्रतिना समासे प्रत्यन्त्सशब्दात्सुप्यौजसादावदीर्घार्थं संयोग-ग्रहणस्यावश्यकत्वात् । संयोगग्रहणे तु प्रत्यासत्त्या नकारा-व्यवहितसान्तो यः संयोग इत्यर्थाश्रयणेन दोषपरिहारसम्भवा-त् । एतादृशप्रत्यासत्तिविवक्षया दोषाभावसूचनार्थमेव बहूनां संयोगसंज्ञोक्ति र्भाष्यीया सङ्गच्छते । नच णिलोपस्य स्थानि-वत्त्वान्न दीर्घ इति वाच्यम् । क्वौ लुप्तं न स्थानिवदित्यनेन त-न्निषेधात् । सूत्रेऽसति संयोगग्रहणे प्रकृतोदाहरणेऽन्त्यवर्णतद्व-र्णयोरितराव्यवधानाभावेन ( अनन्त्यविकार ) इति परिभा-षाया अप्राप्त्या आद्याऽकारेऽतिप्रसङ्गश्च, तद्वर्णविशेषणभिन्न-त्वस्यानिवेशेऽपि भेदत्रयविशिष्टेन तकारेण व्यवधानात् । य-दि त्वन्त्यवर्णतद्वर्णभिन्नो योऽन्त्यपर्याप्त्यधिकरणाविषयकप्र-तीतिर्विषयाभावस्तद्व्यवधानाऽभावस्य निवेशस्तदा नायन्दोषले-शावसर इति दिक् ॥

परत्वाज्जरसि कृते झलन्तत्वान्नुमिति । अयम्भा-वः, अजरशब्दस्य प्रथमाबहुवचने जसि तत्स्थाने ( जश्शसोः शिः ) इत्यनेन कृते श्यादेशे अजर इ इति स्थितो नुमो जरसा-देशस्य च युगपत्प्राप्तौ क आदेशोऽत्र स्यादिति जायमानस्य पूर्व-पक्षस्योत्तरमिदम् । ( विप्रतिषेधे परं कार्यमि )ति सूत्रे परश-ब्दस्येष्टवाचकत्वाच्च पूर्वविप्रतिषेधेन विभक्त्यादेश इति जरसा-देशात्प्राग्विभक्त्यादेशे पश्चात्प्राप्तयोर्नुम्जरसादेशयो र्मध्ये जर-

सादेशस्य परत्वादुक्तसूत्रेण नुमः प्राक् जरसादेशे ततो झलन्त-
लक्षणे नुमि रूपमिष्टं सिद्ध्यतीति दिक् ॥

ननु ( पद्दन्नो मासे ) तिसूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वेन भेदसादृश्ययोश्च प्रकारशब्दार्थत्वेन तत्र तद्भिन्नत्वे सति तद्-गतभूयो धर्मवत्त्वरूपस्य सादृश्यपदार्थत्वेन शसादिभिन्ने शसादि-सदृशे प्रत्यये परे पादादीनाम्पदादय आदेशा इति सूत्रार्थः सम्पद्यते । अत्र शसादिपरत्वस्य सुप्त्वेनैव ग्रहणात्पदत्वेन तस्याग्रहणादनेनैव हृल्लेख इत्यादिसमासस्थलेऽपि हृदादेश-सिद्धौ ( हृदयस्य हृल्लेखयदण्लासेष्वि ) त्यादिसूत्राणं फला-भावात्स्पष्टमेव वैयर्थ्यम् । नच हृल्लेख इत्यादौ शसादिपरत्वा-भावादनेन हृदादेशाप्राप्त्या सूत्रस्यावश्यकत्वाद्वैयर्थ्योक्तिरस-ङ्गतेति वाच्यम् । प्रत्ययलक्षणेन तत्रापि शसादिपरत्वसत्त्वात् । नच ( न लुमताऽङ्गस्ये ) ति प्रत्ययलक्षणनिषेधात्कथं शसादि-परत्वमिति वाच्यम् । तस्यानित्यत्वेन प्रत्ययलक्षणप्रवृत्तेः सौल-भ्यात् । एवञ्च ( मांस्पचन्या उखायाः ) इति भाष्यप्रयोगो-ऽप्युपपद्यते । अत्र हि पच्यतेऽस्यामिति पचनी ( करणाधिक-रणयोश्चे ) तिल्युट् । टित्वात् ( टिड्ढाणञि ) तिङीप् । मांसस्य पचनी मांस्पचनीति षष्ठीतत्पुरुषसमासे ङसो लुका लुप्तत्वेन प्र-त्ययलक्षणाभावात्प्रभृतिग्रहणस्य प्रकारार्थत्वमन्तरा मांसशब्दस्य मांसित्यादेशो न स्यात् । तस्य प्रकारार्थत्वे तु न लुमतेत्यस्या-नित्यत्वेन शसादिपरत्वादेशः सुलभ एव ।

( अत्र ब्रूमः–प्रभृतिग्रहणस्य सत्येव प्रकारार्थत्वे नलुमते-त्यस्यानित्यत्वाच्छसादिपरत्वन्नान्यथेति तु नाग्रहस्तथा च प्र-भृतिग्रहणस्य प्रकारार्थत्वमन्तराऽप्युक्तरीत्या शसादिपरत्वादादे-

शस्य सौलभ्येन प्रभृतिग्रहणस्य प्रकारार्थत्वफलदानमिदमयुक्तमिवप्रति भाति। यत्तु-शेखरकृताऽप्युक्तमत्र सुप्त्वेनैव सादृश्यग्रहणन्न तु शब्दत्वेन शब्दत्वेन सादृश्यग्रहणे तु ( वा शोकष्यञ्रोगेष्विं )त्यादिसूत्रवैयर्थ्यं स्यादिति तदपि न समीचीनम्। सुप्त्वेन सादृश्यग्रहणेऽपि न लुमतेति निषेधानित्यत्वानुसरणं-कर्तव्यं स्यात् शब्दत्वेन सादृश्यग्रहणे तु नोक्तनिषेधानित्यत्वानुसरणं कर्तव्यम्भवतीति लाघवम्। सूत्रवैयर्थ्यञ्चेदस्तु नाम वैयर्थ्यम् तेषामदृष्टार्थत्वेन साफल्यादिति )॥

पुनः प्रकृतमनुसरामः। नच ( पृषोदरादीनि यथोपदिष्टमि )ति सूत्रे वक्ष्यमाणात्।

(१)लुम्पदेवश्यमः कृत्ये तुङ्काममनसोरपि।
समो वा हिततयो र्मांसस्य पचि युड्घञोः॥

इति वचनादेव मांसशब्दस्य मांसित्यादेशसिद्धौ प्रभृतिग्रहणस्य प्रकारार्थत्वेनाऽस्योपन्यासोऽयुक्त इति वाच्यम्। एतद्वचनस्यापि प्रभृतिग्रहणं प्रकारार्थमित्येतत्सिद्धार्थानुवादरूपत्वात्। प्रभृतिग्रहणस्य प्रकारार्थत्वेन पचि युड्घञोरपि ( पद्दन् ) इति सूत्रेणैवादेशो भविष्यतीत्यभिप्रायात्। किञ्चोक्तवचनेन ल्युडन्तोत्तरपद एवादेशविधानात्पचनीसस्य ( अयस्मयादिगणे ) पाठेन ( अयस्मयादीनि छन्दासि ) इत्यनेन भसंज्ञया पदसंज्ञाया बाधेनोत्तरपदत्वाभावादेतदप्राप्तेरित्येतत्सर्वमभि-

(१) कृत्यप्रत्ययेऽवश्यम शब्दस्य मलोपः। काममनश्शब्दयोः परयोस्तुमो मकारस्य लोपः। हिततयोः परयोः समो मकारस्य लोपः। पचि युड्घञोश्च मांसशब्दस्यान्त्यलोप इत्यर्थः॥

प्रेत्याह—प्रभृतिग्रहणं प्रकारार्थमिति ॥

(पद्दन्न) इत्यत्र हि छन्दसीत्यनुवर्तितं वृत्तौ तथापि (अपो भिरि) त्यत्रेत्यादि । पद्दन्न इति सूत्रे (शीर्षश्छन्दसी) तिसूत्राच्छन्दसीत्यस्यानुवर्तनेन छन्दस्येवानेन पदाद्यादेशः स्यान्न तु लोके तथा च लौकिकप्रयोगे पदाद्यादेशस्याऽविधानमिति नाशंक्यम् । माद्भिः शराद्भि र्दुरोदरन्तवेत्यत्र माद्भिरित्यस्योपपत्तये (अपोभिरि) ति सूत्रे (मासश्छन्दसी) ति वार्त्तिकाच्छन्दोग्रहणानुवर्तनस्यावश्यकतयैतच्छन्दोग्रहणेनैव (पद्दन्न) इति सूत्रेणाऽपि पदाद्यादेशस्य छन्दस्येव विधानलाभात् (शीर्षश्छन्दसी) त्यतोऽनुवृत्तस्याऽत्रत्यछन्दोग्रहणस्य वैयर्थ्येन सामर्थ्याल्लोकेऽपि क्वचित्पदाद्यादेश इत्यर्थज्ञापनेन तदुपपत्तेरिति भावः ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य । अत्र ह्रस्वपदश्रवणात् (अचश्चे) तिपरिभाषयाऽच उपस्थितिस्तेन प्रातिपदिकस्य विशेषणात्तदन्तविधिस्तदाह—अजन्तस्येति । ननु वैयधिकरण्यसम्बन्धेनान्वये प्रातिपदिकावयवो योऽच् तदन्तस्येत्यर्थक प्रातिपदिकस्याच इति कुतो नोक्तमिति चेन्न । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् । सुवाग्ब्राह्मणकुलमित्यादावतिव्याप्त्यापत्तेश्च ।

ननु क्लीववदर्थे वर्तमानस्याऽजन्तस्य ह्रस्वः स्यादित्यर्थेनैव सामर्थ्यात्प्रातिपदिकस्य लाभे सूत्रेऽस्मिन्प्रातिपदिकस्येत्यस्य ग्रहणव्यर्थमिति चेन्न । अत्र प्रातिपदिकपदेन सत्वप्रधानप्रातिपदिकस्यैव ग्रहणमित्यर्थकत्वेन तस्य सार्थक्यात् । नच प्रातिपदिकग्रणाभावे वारिणीत्यादौ विभक्त्यन्तेऽप्यतिप्रसक्तस्य ह्रस्वस्य व्या-

२१

त्त्वर्थम्प्रातिपदिकग्रहणस्यावश्यकत्वेन वैयर्थ्याभावात्सत्वप्रधा-नप्रातिपदिकग्रहणार्थत्वोक्तिरयुक्तेति वाच्यम् । ( नपुंसकाच्चे ) त्यत्र ह्रस्वाशिविधानस्यैव समुचितत्वे दीर्घकरणसामर्थ्यादेव ह्र-स्वाभावज्ञापनात् । नच ह्रस्वाशिविधाने (शि सर्वनामस्थानमि) ति सूत्रेण तस्य सर्वनामस्थानत्वेन ज्ञाने इत्यत्र ( नपुंसकस्य झलच ) इति नुमापत्तिरिति वाच्यम् । ( सुडनपुंसकस्ये ) ति सूत्रेऽनपुंसकग्रहणाभावे सर्वनामस्थानामित्यस्य नियमार्थत्वेन नपुंसकात्परस्य ईयेत्येतस्यैवं सर्वनामस्थानसंज्ञकत्वन्नान्यस्येति नियमेन सिद्धावनपुंसकग्रहणसामर्थ्याज्जश्शसम्सम्बन्धिनः शेरेव ग्रहणमिति ज्ञापनेनादोषात् ।

नचाऽत्रत्यप्रातिपदिकपदेन सत्वप्रधानप्रातिपदिकग्रहणे कि-म्फलमिति वाच्यम् । काण्डे कुड्ये इत्यादौ ( अन्तादिवद्भावेन ) प्रातिपदिकत्वानयनेऽपि ह्रस्वाभावस्यैव फलत्वात् । नच सूत्रोपा-त्तनपुंसकशब्दस्य गुणिवाचकत्वात्क्लीबवदर्थे इत्यनुपपन्नमिति वाच्यम् । नपुंसकशब्दस्याऽर्शाद्यजन्तस्यैवात्र ग्रहणात् । नच प्रकृ-त्यर्थप्रत्ययार्थयो र्मध्ये प्रत्ययार्थस्यैव प्राधान्यमिति शिष्टोक्त्या प्रत्ययार्थस्य प्राधान्यात्प्रकृत्यर्थस्य प्रातिपदिकस्य ( द्रव्यस्य ) प्राधान्यकथनमनुपपन्नमिति वाच्यम् । विभक्त्यर्थस्य संसर्गत्वेन मानाभ्युपगमेन प्रकृत्यर्थस्य द्रव्यस्य प्राधान्यसत्त्वात् (काण्डे कुड्ये इति विभक्त्यर्थप्रधानमि ) तिभाष्यात् विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतायास्तत्राभ्युपगमे बाध-काभावात् । शब्देन प्रतिपादितेऽर्थे विशेष्यत्वस्वीकारस्य सर्व-सम्मतत्वाच्च । संसर्गताख्याविषयतायाः प्रकारत्व–विशेष्यत्वयो र्विरुद्धत्वे साधकाभावाच्च । अत एव वह्निर्नास्तीत्यत्र घञर्थे व-

क्षिपदार्थस्य वक्षित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वये व-क्षित्वमवच्छिन्नत्वम्प्रतियोगित्वञ्चेति त्रितयमेव विशेषणविशेष्य-भावापन्नं संसर्ग इत्युक्तम्परैः । नच सप्तम्यन्तस्थल एव विभ-क्त्यर्थस्य प्राधान्यन्न तु प्रथमाद्यन्तस्थलेऽपीति वाच्यम् । प्रथ-माया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गकबोधेन तस्याः प्राधान्यात् । स्पष्टञ्चेदम्भाष्ये ।

अत्र ( सन्निपात ) परिभाषया ( आतोरि ) त्या-कारलोपो नेति । ननु श्रियं पाति यत्कुलं तच्छ्रीपन्तस्मै श्री-पायेत्यत्र श्रीपशब्दाच्चतुर्थ्येकवचने ङयि ङकारस्येत्संज्ञायां लोपे च ( ङेर्य ) इति सूत्रेणाऽनुबन्धरहितस्यैकारस्य स्थाने यादेशे ( सुपिचे ) ति सूत्रेण दीर्घादेशे च सिद्धिः । अत्रायं सन्देहो जागर्त्ति, यकारे परे पूर्वस्य भसंज्ञायाम् ( आतो धातोरि ) त्याकारलोप इति नाशङ्कनीयम् । ( सन्निपातलक्षणो विधिरनि-मित्तं तद्विघातस्ये ) ति परिभाषाविरोधाल्लोपाप्राप्तेः । सन्निपात-परिभाषाविरोधश्चेत्थम् । श्रीप ङे इत्युभयोः प्रकृतिप्रत्यययो यः स-म्बन्धोऽकारान्ताऽव्यवहितोत्तरङेत्वरूपः, ङे प्रत्ययाव्यवहितपू-र्वाऽकारान्तत्वरूपश्च तल्लक्षणजायमानो विधि र्यादेशः स च स्वा-तिरिक्तसम्बन्धविघातके भसंज्ञाद्वाराऽऽकारलोपे निमित्तं न स्या-दुपजीव्यविरोधात् । ( उपजीव्यविरोधो न न्याय्य ) इति शि-ष्टोक्तेः । नच रामायेत्यत्र दीर्घे कर्त्तव्येऽतिप्रसक्तामुक्तपरिभाषां ( कष्टाय क्रमणे ) इतिनिर्देशादनित्यां विज्ञाप्य अप्रवृत्तिरिवाऽ-त्रापि तदप्रवृत्त्या नोक्तदोष इति वाच्यम् । उक्तसूत्रनिर्देशाद्दीर्घे ऽप्रवृत्तावपि लोपेऽप्रवृत्तौ प्रमाणाऽभावेन दोषस्य तादवस्थ्या-त् । तथा च परिभाषाविरोधाल्लोपाभावोपपादनं ग्रन्थोक्तं युक्त-मेवेति भावः ।

न लुमतेत्यस्यानित्यत्वादिति । ननु वारिशब्दस्य सम्बुद्धौ हे वारि सु इति स्थितौ ( एङ्ह्रस्वात्सम्बुद्धेः ) इतिसूत्रेण लुप्तस्य सोः ( प्रत्ययलोपे प्रत्ययलक्षणमि ) ति सूत्रेण प्रत्ययलक्षणेन सोः सत्त्वात्तस्मिन् परे ( ह्रस्वस्य गुणः ) इति सूत्रेण प्रसक्तस्य गुणस्य ( न लुमताऽङ्गस्ये ) ति सूत्रेण निषेधात् हे वारीत्येकमेव गुणाघटितरूपं स्यान्नतु गुणघटितं हे वारे इत्यपि तथा च हे त्रपो, हे त्रपु इति भाष्योदाहरणमसंङ्गतं स्यादिति शङ्कोत्थितौ समाधानरूपोऽयं ग्रन्थः । इत्थञ्चास्याऽभिप्रायः, ( इकोऽचि विभक्तावि ) त्येतत्सूत्रस्थाऽचिग्रहणात्मकज्ञापनेनोक्तनिषेधस्यानित्यत्वज्ञापनादुक्तरूपद्वयसिद्धिरिति । नचात्र सूत्रेऽचीत्यस्याऽभावे हलादिविभक्तावपि नुमापत्तिरिति तन्न तदभावाय तस्यावश्यकतया ज्ञापकत्वाभावादुक्तनिषेधानित्यत्वस्य वक्तुमशक्यतया शङ्कादलीयोक्तदोषस्य तादवस्थ्यमिति वाच्यम् । हलादिविभक्तौ सत्यपि नुमि तल्लोपे दोषाऽभावात् । नचैवमपि सम्बुद्धिविषये ( न ङिसम्बुद्ध्योरि ) ति निषेधसूत्रस्य जागरूकत्वान्नलोभावात्तच्छ्रवणनिवृत्त्यर्थमचीत्यस्यावश्यकत्वाज्ज्ञापकत्वमसम्भवीति वाच्यम् । (न लुमताङ्गस्ये) ति सूत्रेण प्रत्ययलक्षणनिषेधाद्विभक्तिपरत्वाभावेन नुमोऽप्राप्त्या तन्निवृत्त्यर्थमचीत्यस्यावश्यकतया ज्ञापकत्वस्य सुस्थिरत्वात् । नचाऽथापि न तस्यात्र ज्ञापकत्वसम्भवस्तस्योत्तरार्थत्वेनात्रैयर्थ्यादिति वाच्यम् । तस्योत्तरार्थत्वस्येष्टत्वेऽनुवृत्तिक्लेशाऽभावाय तत्रैवाचीत्यस्य कर्तव्यत्वौचित्यादिह करणे वैयर्थ्यस्य स्पष्टत्वात् । तथा च ( न लुमताङ्गस्ये )ति निषेधसूत्रस्यानित्यत्वेऽचीत्यस्य ज्ञापकत्वं सुस्थिरमेव । एवञ्चोक्तनिषेधस्यानित्यत्वादप्रवृत्त्या प्रत्ययलक्षणेन सम्बुद्धिसत्त्वात्तस्मिन् गुणे हे वारे इति गुणघटितरूपोपपत्तावुक्तभाष्यप्रयो-

गद्वयस्य प्रयासमन्तरैव सिद्धिरिति दिक् ॥

तृतीयादिषु भाषितपुंस्कं पुम्वद्गालवस्य । ननु भाषितपुंस्कशब्दस्य भाषितः पुमान् येन शब्देनेत्यर्थेऽनादिशब्दे भाषितपुंस्कत्वसत्त्वेऽपि पीलुशब्देनाऽपि पुंसो भाषिततया भाषितपुंस्कत्वातिप्रसङ्गस्य दुर्निवारतया भाषितः पुमान् यस्मिन्प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहि र्बोध्यः । प्रत्यासत्त्या भाषणक्रियया स्वकरणत्वेनाक्षिप्तशब्दश्च क्लीबसमानानुपूर्वीकः क्लीबसमानार्थकश्च गृह्यते ततोऽर्शादित्वादचि भाषितपुंस्कशब्दस्य निष्पन्नत्वात्फलितमाह—प्रवृत्तिनिमित्तैक्ये इति । वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारत्वाश्रयत्वम् हि प्रवृत्तिनिमित्तलक्षणम् । एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कशब्दस्य पुम्वद्भाव इति तदर्थः साधारणः । यस्य शब्दस्य पुंनपुंसकयोरेकप्रवृत्तिनिमित्तं तस्य पुम्वद्भाव इति तस्य फलितार्थः । तथा च क्लीबपुंसोरारोपितादित्वरूपं ह्येकमेव प्रवृत्तिनिमित्तमिति स्यादेव पुम्वद्भावः । पीलुशब्दस्य तु नेत्थम् । तस्य तु वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तं फले फलत्वव्याप्यजातिः प्रवृत्तिनिमित्तमिति पुंसि क्लीबे चैकजातेः प्रवृत्तिनिमित्तत्वाभावान्न पुम्वद्भाव इत्यत आह—पीलुने अत्र न पुम्वत्—प्रवृत्तिनिमित्तभेदादिति ।

एच इग्घ्रस्वादेशे । आदिश्यत इत्यादेशो ह्रस्वश्चासावादेशश्चेति ह्रस्वादेशस्तस्मिन् । निर्धारणे सप्तमीयं । जातावेकवचनमतो व्याचष्टे—आदिश्यमानेषु ह्रस्वेषु मध्य इति । नन्वेचाम्पूर्वभागस्याऽकारसदृशत्वादुत्तरभागस्य तु इवर्णोवर्णसदृशत्वात्तत्राऽन्तरतमस्य ह्रस्वस्यासत्वात्पर्यायतयाऽकार-

स्यैकारौकारयोश्चादेशापत्तिरिति चेन्न। मा कदाप्यकारो भूदिति नियमार्थमेतत्परिभाषायाः सत्त्वादत आह–इगेव स्यादिति। आन्तरतम्यादेकारैकारयोरिकारः। ओकारौकारयोस्तु उकारः। अत्रैकारान्तस्योदाहरणं यथा इः स्मृतो येनासौ स्मृतेः शोभनः स्मृतेर्यस्य स सुस्मृतीत्यादि। एकारस्यात्र ह्रस्वेकाररूपो हीगादेशः। अत्रायं निष्कर्षः। ( सिद्धमेङः सस्थानत्वात्–ऐचोश्चोत्तरभूयस्त्वादि ) ति भाष्यवार्त्तिकेनैव निर्वाहे सूत्रमिदं परिभाषाख्यं व्यर्थमेव बोध्यम्। इत्थं ह्युक्तभाष्यवार्त्तिकाभिप्रायः शब्दपरविप्रतिषेधादेङ उत्तरभागान्तरतमौ इउवर्णावेवेति सिद्धम्। ऐचोश्चेत्यत्र चकारो भिन्नक्रमः। उत्तरभूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः। अवर्णस्याऽर्द्धमात्रा, इवर्णोवर्णयोरध्यर्द्धमात्रा बोध्या। उत्तरभागाधिक्यान्मल्लग्रामादिवद्भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति॥

ननु प्रकृष्टस्वर्गवत्त्वादिरूपप्रवृत्तिनिमित्तस्य पुंनपुंसकयोस्तुल्यत्वाद्भाषितपुंस्कत्वेन प्रद्युनेत्यत्र पाक्षिकपुम्वद्भावो दुर्वारः स्यादित्याशङ्कां निराकर्तुमाह–इह न पुंवत्। यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावादिति। अयम्भावः,एकस्मिन्प्रवृत्ति निमित्ते सति भाषितपुंस्कस्येगन्तस्य पुम्वत्त्वमिति पुम्वद्भावविधायकस्य ( तृतीयादिष्वि ) ति सूत्रस्यार्थे प्रद्युरूपस्येगन्तस्य भाषितपुंस्कत्वाभावान्नात्र पुम्वद्भाव इति। स्पष्टीकृतश्चैतन्माधवेन· रा दाने इतिधातावतिरि ब्राह्मणकुलमिति प्रक्रम्येति बोध्यम्। न च प्राचोदाहृतस्य प्रद्यावा प्रद्याया सुनावेत्यस्य कथमुपपत्तिरिति वाच्यम्। प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्येन सुद्योशब्दस्य भाषितपुंस्कतया तस्यैव चेदानीमिगन्तत्वात् ( एकदेशवि·

कृतन्यायेन ) प्रद्युशब्दस्यापि भाषितपुंस्कत्वेन पुम्वद्भावानापत्तेः । एष च पुम्वद्भावो माधवमते नास्ति । मतान्तरे त्वस्तीति बोध्यम् ॥

वस्तुतस्तु ( सन्निपात ) परिभाषया नुड्यात्वं नेसादि परिभाषां बाधत इत्युक्तं प्ररीणामित्यन्तमिति । प्रकृष्टा रा यस्य तत्प्ररीति विग्रहे निष्पन्नप्ररिशब्दस्य षष्ठीवहुवचने आमि प्ररि आमिति स्थितावचूपरत्वात्प्राप्तनुमं प्रबाध्य (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ) तिवार्त्तिकेन नुटि हल्परत्वात् ( एकदेशविकृतमनन्यवदि ) ति न्यायेन ( रायो हली ) ति सूत्रेण सत्सात्वे प्रराणामिति रूपसिद्धिरिति भावः । नच ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) ति परिभाषया प्ररि आमित्युभयोः प्रकृतिप्रत्ययो यः सम्बन्धो ह्रस्वान्ताव्यवहितोत्तरामूरूपः, आमव्यवहितपूर्वह्रस्वान्तत्वरूपो वा स एव सन्निपातलक्षणजायमानो विधि र्नुडागमः तस्य च स्वातिरिक्तसम्बन्धविघातके रायो हलीत्यात्वे निमित्तत्वाभावान्माधवोक्तरूपमसङ्गतमिति वाच्यम् । नुण्निमित्तीभूतस्य ह्रस्वीयसन्निपातस्य दीर्घेणाऽवश्यंविनाश्यत्वमिति सम्भावनासत्त्वात्सन्निपातपरिभाषाऽप्रवृत्त्याऽऽत्वे बाधकाभावेन माधवमतसिद्धरूपस्य सङ्गतत्वात् । नचैवं रामाणामित्यत्र नामीत्यनेन नुण्निमित्तह्रस्वसन्निपातविघातस्याऽवश्यं जायमानतयोक्तपरिभाषाविषयत्वाऽभावेन सुपि चेति दीर्घेऽप्यप्रवृत्त्या मूलोक्तस्य सुपि चेति दीर्घो न प्रवर्तते सान्निपातपरिभाषाविरोधादित्यस्यासङ्गत्यापत्तिरिति वाच्यम् । नामीति सूत्रविहितदीर्घस्य नित्यत्वात्तेन सुपिचेति दीर्घस्य बाधेनाऽप्रवृत्तिकल्पनस्य युक्तत्वात् एष च माधवाशयः, ( श्नान्नलोप )

इति षष्ठाध्यायस्थभाष्यकैयटविरोधाद्धेयः । तत्र हि शकारोच्चारणाऽभावे नान्नलोप इति न्यासे यज्ञानामित्यत्र दीर्घे नलोपे च प्राप्ते परत्वान्नलोप इत्युक्तम् ! समान्यापेक्षज्ञापने तु सुपि चेतिदीर्घस्यैव नलोपापेक्षया परत्वेनाऽस्यैव च प्रवृत्तौ तदसङ्गतं स्यात् । तथा च नामीति दीर्घे कर्तव्य एवोक्तपरिभाषाऽनित्या नान्यत्रेति । [ कष्टाय क्रमणे ] इति निर्देशादनित्याया उक्तपरिभाषायाः सुपि चेति दीर्घेऽप्रवृत्तिकल्पनेऽपि सामान्यतो दीर्घे प्रवृत्त्यभावकल्पने न किमपि प्रमाणं चेति भावः ॥

इति नपुंसकलिङ्गप्रकरणम् ।



## अथ हलन्तपुल्लिङ्गप्रकरणम् ।



दादे र्धातो र्घः । नन्वेतस्मिन् सूत्रे भाष्यकृता धुगित्यत्र ( हो ढ ) इति सूत्रेण ढत्वं कुतो न भवतीत्याशङ्क्य तच्चापवादत्वेन समाधाय, अथवैवं वक्ष्यामि होढोऽदादेः—ततो धातो र्घ इति, तत्र दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । तथा च पूर्वयोगेनाऽदादिधातुघटकहकारस्य ढत्वविधानादेव दादिधातुघटकहकारस्य घत्वे सिद्धे भाष्यकृत्कृतस्य दादिपदानुवर्तनस्य द्वितीययोगे वैफल्येन सामर्थ्याद्दादिपदमौपदेशिकदादित्ववदुपलक्षकमित्याशयेन फलितार्थं दर्शयति—उपदेशे इति । नच ( हो ढोऽदादेरि ) तिन्यासाङ्गीकारे धुडित्यादौ ढत्वं न स्यात्तस्य दादित्वेन दादिभिन्नत्वाऽभावादिति वाच्यम् । ( वा द्रुहमुहष्णुहष्णिहामि ) ति सूत्रे वाग्रहणस्य समुच्चयार्थकत्वाड्ढस्याप्य-

नुवर्तनेन तदुपपत्तेः । नचैवं दामलिडित्यत्र ढत्वं न स्यात् दादिधातुहकारस्य घत्वविधानादिति वाच्यम् । उक्तरीत्योत्तर-योगे औपदेशिकदादित्ववतो दादिपदस्यैव ग्रहणादर्थाधिकारा-नुरोधात्पूर्वयोगेऽपि तथाविधस्यैव दादिपदस्य ग्रहणेनोक्तप्रयो-गोपपत्तेः ।

केचित्तु—सूत्रेऽस्मिन् लक्षणया दादिपदमौपदेशिकदादि-त्ववत् । नचात्र [ औपदेशिकप्रायोगिकयो र्मध्ये औपदेशिक-स्यैव ग्रहणमि ]ति परिभाषयैवोपदेशपदे लब्धे लक्षणानुसरणं व्यर्थमिति वाच्यम् । [अत्वसन्तस्य चाधातोरि]तिसूत्रस्थभाष्या-नुरोधादुक्तपरिभाषानङ्गीकारात् । अत एव च तत्र तत्र सूत्रे कृतस्योपदेशग्रहणस्य चारितार्थ्यमित्याहुः । ननु प्रकृतसूत्रस्थ-भाष्यव्याख्यानतो लब्धस्योपदेशपदस्य ग्रहणे फलम्प्रदर्शयितु-माह—उपदेशे किमिति । उपदेशपदाभावे दुहेर्लङि अधोगि-त्यत्र सत्यडागमे दादिभिन्नत्वाद्धत्वं न स्यादित्यव्याप्तिः । इच्छा-र्थयजन्तात्कर्तृक्विपि दामलिडित्यत्र दादित्वाद्धत्वं स्यादित्यति-व्याप्तिश्च दुर्वारा । तस्मादेतद्द्वयनिवृत्तिरेवास्य फलम् । अव्या-प्तेर्लक्षणं तु लक्ष्ये लक्षणस्याऽगमनरूपम् । अतिव्याप्तेश्च अल-क्ष्ये लक्षणगमनरूपमिति भावः । नच प्रक्रियालाघवानुरोधा-त्सूत्रेऽस्मिन् घस्थाने गकारपाठस्यैवौचित्यम् । अन्यथा घादेश-विधानेऽपि तत्स्थाने गादेशविधानेन प्रक्रियागौरवादिति वाच्यम् । गघटितन्यासाभ्युपगमे गकारस्य भष्भावप्रत्याहारेऽसत्त्वेन झषन्तत्वा-भावेन धुगित्यादौ भष्भावानापत्तेरित्यलम् ॥

एकाचो धातोरिति सामानाधिकरण्येनान्वये तु इह न स्यादिति । अयम्भावः, ( सम्भवति सामानाधिक-

रण्ये वैयधिकरणमन्याय्यमि ) त्यभियुक्तोक्त्या सामानाधिकरण्यान्वयसम्भवे वैयधिकरण्यान्वयो न युक्तः तथा च एकाजूरूपो यो धातुर्झषन्तस्तदवयवस्य बशः स्थाने भषित्यर्थे गर्द्धबित्यादौ भष्भावो न स्यात्तस्यानेकाच्त्वेनैकाजूरूपत्वाऽभावात् । तथा-चात्र वैयधिकरण्यान्वय एव स्वीकर्तव्यः । एवञ्च नोक्तस्थले-भष्भावानापत्तिरिति भावः ॥

ननु धुग्भ्यां धुक्ष्वित्यादौ भष्भावाय झलीत्यस्यावश्यकतया निवृत्त्युक्तिरसङ्गतेति चेन्न । तत्र पदान्ते इत्येव भष्भावसिद्धेः । नच बुबुधिध्वे इत्यत्र भष्भावनिवृत्तये ध्वम्प्रत्ययस्य झलीति विशेषणमन्तराऽनिर्वाहान्निवृत्त्युक्तेस्तादवस्थ्यमेवेति वाच्यम् । इटो ध्वमवयवत्वाऽभावेऽपि भष्भावनिमित्तध्वशब्दानवयवत्वादेकाच्ध्वशब्दयोरिटा व्यवायात्स्वत एव तत्र भष्भावाऽप्राप्त्या दोषाऽभावेन झलीत्यस्य नैष्फल्यादित्यत आह-झलीति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यादिति । अत्र प्राञ्चः । झलि पदान्ते च प्रातिपदिकस्य बशो भष्विधानाद्धातोस्तदविधानेन झलीत्यनावश्यकमेवेत्याहुस्तन्न । सूत्रेऽस्मिन्प्रातिपदिकस्य सम्बन्धे अधोक् अधोगित्यादेरसिद्ध्यापत्तेः । प्रातिपदिकसम्बन्धस्याप्यप्रकृतत्वेनाऽसम्भवाच्चेत्यलम् ॥

व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भाव इति । अयम्भावः, धातोरवयव इति वैयधिकरण्येनान्वये एकाजूरूपो यो धातुर्झषन्तस्तदवयवस्य बशः स्थाने भष् स्यादित्यर्थे क्विबन्तस्य दुहे धुगित्यादौ ( दादे र्धातो र्घः ) इति सूत्रेण भष्भावो न स्यात् धात्ववयव एकाच् दु इति उघिति च तत्राद्यस्य झषन्तत्वाभावादन्त्यस्य बशूघटितत्वाऽभावाद्दुघिति समुदायस्य

च धात्ववयवत्वाभावादतो व्यपदेशिवद्भावस्याश्रयणम् । (व्यपदेशिवदेकस्मिन्नि ) तिपरिभाषास्वरूपम् । विशिष्टोऽपदेशो मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी तेन तुल्यं व्यपदेशिवत् । अनेकस्मिन् ( ससहाये ) वर्णे यत्कार्यं तदेकस्मिन् ( असहाये ) वर्णेऽपि भवतीत्यर्थः । पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्तव्ये पृथग्योगकरणं सामार्थ्यात्परिभाषां ज्ञापयतीति दिक् ॥

धुगिति । ननु क्विबन्तस्य दुहेः प्रातिपदिकत्वेनाऽधातुत्वाद्धातुकार्यस्य भष्भावरूपस्य कथमत्रोपपत्तिरिति चेन्न । ( अत्वसन्तस्य चाधातोरि ) तिसूत्रेऽधातोरिति निषेधसामर्थ्यादप्रधानक्रियावाचकस्यापि धातुत्वज्ञापनाद्भष्भावोपपत्तेः । न च श्रौणहत्ये तत्वविधानरूपज्ञापकज्ञापितया, धातोरुच्यमानकार्यस्य धातुविहितप्रत्यये विधानमित्यार्थिकया, ( धातोरुच्यमानं कार्यं तत्प्रत्यये ) इति परिभाषया धातुशब्दमुच्चार्य विहितप्रत्यय एव तत्कार्यविधानादिहाऽतथाविधेन धातुकार्यं न स्यादिति वाच्यम् । भष्भावरूपधातुकार्यस्य पदान्तनिमित्तत्वात्प्रत्ययनिमित्तत्वाऽभावेनोक्तपरिभाषाऽप्रवृत्तेः । एतत्परिभाषाऽप्रवृत्तेरेव ( नश्छव्यप्रशानि ) तिसूत्रेऽप्रशान्ग्रहणस्य चारितार्थ्यम् । अन्यथा ( मो नो धातोरि ) तिसूत्रेऽप्युक्तपरिभाषाप्रवृत्तौ प्रशान्शब्दे नत्वाऽप्राप्त्या रुत्वाऽसम्भवेन तन्निवर्तकं सूत्रेऽप्रशान्ग्रहणं स्पष्टमेव व्यर्थं स्यात् । नचात्रोक्तपरिभाषाप्रवृत्तेरिष्टत्वे सुधियाविरयादावाविरयस्य धातुशब्दमुच्चार्याविधानादियङ् न स्यादिति वाच्यम् । अङ्गस्यैवेयङो विधानेन धातोरविधानात्परिभाषाऽप्रवृत्तेरिति भावः ।

इग्यणः सम्प्रसारणम् । यण इति स्थानषष्ठ्यन्तम् । सम्प्रसारणमिति यण्स्थानिकस्येकः संज्ञा । प्रयुज्यमान इत्यध्याह्रियते तदाह–यणः स्थाने प्रयुज्यमान इति । नन्विकः सत्वे सम्प्रसारणसंज्ञा सत्यां च सम्प्रसारणसंज्ञायामिको निष्पत्तेरन्योऽन्याश्रयो दुर्वार इति चेन्न । विधिप्रदेशेषु (१)सूत्रशाटकवद्भाविसंज्ञाश्रयणादन्योऽन्याश्रयाभावात् । नच यण्स्थानिकस्येकः सम्प्रसारणत्वे अदुहितरामित्यत्र लङि तत्सम्बन्धिलकारस्थाने उत्तमपुरुषैकवचने इटि तस्य यण्स्थानिकत्वेन सम्प्रसारणसंज्ञायां सत्यां तरपम्प्रति लङन्तस्याङ्गत्वेन ( हल ) इति दीर्घः स्यादिति वाच्यम् । कैयटरीत्या यथासंख्यसम्बन्धेन सम्प्रसारणसंज्ञाऽप्राप्तेः । न च ( विधौ परिभाषोपतिष्ठते नानुवादे ) इति परिभाषयाऽनुवादे परिभाषाणामनुपस्थानाद्यथासंख्यं न स्यात् । नचैवं स्थानयोगस्यापि लाभो न स्यादिति वाच्यम् । ( षष्ठी स्थाने योगे ) ति सूत्रेऽस्यानुवर्तनेन व्याख्यानतस्तल्लाभात् ।

अत्र केचित्–( सम्प्रसारणस्ये ) ति सूत्रे तन्त्राऽऽवृत्त्याद्याश्रयणात्तद्भावितस्य ग्रहणेनाऽदुहितरामित्यत्र लङ्स्थानिकस्येटः सम्प्रसारणशब्देनाऽभावितत्वात् ( हल ) इति सूत्रेण दीर्घो न भवतीत्याहुः । नचैवमपि अक्षद्युवौ अक्षद्युत्र इत्यादावूठः सम्प्रसारणसंज्ञायां ( सम्प्रसारणाच्चे ) तिसूत्रेण पूर्वरूपं न

---

(१) सूत्रशाटकवदिति । अस्य सूत्रस्य शाटकं वयेत्यादौ ( यदि वातव्यो न शाटको यदि शाटको न वातव्यः ) इतिविरोधमाशङ्क्य मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति इति भाष्ये उक्तम् । तथा प्रकृतेऽपि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन जातस्य सम्प्रसारणसंज्ञा भवतीति भावः ।

स्यादिति वाच्यम् । ( सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणमि ) ति वार्त्तिकेन वार्णादाङ्गस्य बलीयस्त्वेन चोवङ एव प्राप्तेः । ( ष्यङः सम्प्रसारणमि ) त्यादिविधिप्रदेशेष्वेव यण इगिति पठित्वा सम्प्रसारणसंज्ञाविधायकमिदं प्रकृतसूत्रं त्यक्तुं शक्यमित्याहुर्नव्याः ॥

वाह ऊठ् । अत्र वाह इति णिजन्ताद्विचि क्विपि वा निष्पन्नस्य वाहशब्दस्य षष्ठ्येकवचनान्तम् । षष्ठ्याः स्थानमर्थः । ऊडिति विधेयम् । ननु ऊडितिविधेये ठकारनिर्देशो व्यर्थः प्रयोगे तस्यादर्शनेन फलाभावादिति चेन्न । ( एत्येधत्यूठ्स्वि ) ति सूत्रे वृद्धेर्निमित्तीभूतस्योठो विशेषणार्थत्वेन तत्र ठकाररूपानुबन्धस्य साफल्यात् । स चानुबन्धः ( हलन्त्यमि ) तीत्संज्ञकः । भस्येत्यधिकारः । ( वसोः सम्प्रसारणमि ) तिसूत्रादनुवृत्तस्य सम्प्रसारणपदस्योठो विशेषणत्वा दलोऽन्त्यस्येति नान्तस्य भवतीत्यभिप्रेत्याह—भस्य वाह इत्यादि । ननु ऊडिति विधेये लाघवाद्ध्रस्वनिर्देश एव युक्त इति चेन्न । तथा सति ( एत्येधत्यूठ्स्वि ) त्यनेन वृद्धेरप्राप्तेः । नच तत्रापि ह्रस्वस्यैव विधानमस्त्विति वाच्यम् । तथा सति जनौरित्यत्र ( ज्वरत्वरे ) ति सूत्रेण ऊठि तस्मिन्वृद्ध्यनापत्तेः । न च तत्रापि ह्रस्वविधानमेवास्त्विति वाच्यम् । तथा सति ज्वरतेस्त्वरते र्वा क्विपि जूः तूरित्यादौ दीर्घोकारश्रवणानापत्तेरिति दिक् ॥

छन्दस्यैव ण्विरिति पक्षे तु णिजन्ताद्विजिति । ( छन्दसि सह ) इतिसूत्राच्छन्दोग्रहणस्य ( वहश्च ) तिसूत्रेऽनुवर्तनाच्छन्दस्येव वहतेरपि ण्विप्रत्ययविधानस्य लाभाल्लोके विश्ववाहशब्दस्य प्रयोगो नोपपद्यत इति पूर्वपक्षस्य समाधानरूपो

ऽयं ग्रन्थः । अस्यायम्भावः, विश्वशब्दपूर्वकाण्णिजन्ताद्वाहे विं-चि लोकेऽप्युक्तशब्दस्य प्रयोग उपपद्यत इति । नचैवमुक्तरीत्या विश्ववाहशब्दस्य लोके साधुत्वसाधनेऽपि शसि विश्वौह इत्यस्य सिद्धिर्न स्यात् अङ्गभसंज्ञाक्षिप्तेन प्रत्ययेन वाहो विशेषणादजादिप्रत्ययपरकाऽव्यवहितपूर्वस्य वाहः संप्रसारणं स्यादिति सूत्रस्यार्थे णिलोपस्य स्थानिवद्भावाद्व्यवधानेन सम्प्रसारणाऽप्राप्तेरिति वाच्यम् । विच्प्रत्ययस्य क्विप्प्रत्ययोपलक्षकत्वेन (क्वौ लुप्तं न स्थानिवदि )तिपरिभाषया स्थानिवत्त्वनिषेधेन णिना व्यवायाऽभावात्सम्प्रसारणे बाधकाऽभावेनादोषात् । न च (क्वौ लुप्तं न स्थानिवदि ) तिनिषेधवचनस्य संकुचितविषयत्वात्क्वौ विधिम्प्रति न स्थानिवदित्यस्य क्विप्शब्दमुच्चार्य विहितविधावेव प्रवृत्त्या ( वचि स्वपि यजादीनां किति ) इत्यस्य वच्यादिधातुभ्यो विहिते किति सम्प्रसारणमिति व्याख्यानाण्णिजन्तात्क्विपो विधानाभावान्निषेधाऽप्राप्त्या स्थानिवत्त्वस्य दुर्वारतया णिचा व्यवधानात्सम्प्रसारणं च स्यादिति वाच्यम् । ( विभाषापूर्वाण्हे ) तिसूत्रभाष्ये प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमितिलौकिकविग्रहवाक्ये प्रष्ठौह इति सम्प्रसारणोत्तरवृद्धिघटितप्रयोगदर्शनाल्लोकेऽपि ण्विः प्रत्ययः क्वचिद्भवतीति कल्पनयाऽदोषादिति भावः । वस्तुतस्तु ( वहश्चे ) तिसूत्रे छन्दो ग्रहणन्नानुवर्तते । अत एव विभाषापूर्वाण्हेतिसूत्रस्थस्य प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति भाष्यप्रयोगस्य संगतत्वादनेनोक्तकल्पना न कर्तव्या भवतीति दिक् ॥

ननु—

सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥

इत्यभियुक्तोक्त्या सामान्यशास्त्रस्य विशेषशास्त्रेण बाधस्य सिद्धत्वात् व्यापकविषयताकस्य सामान्यशास्त्रविहितस्याऽऽपोऽपेक्षया नुमो विशेषशास्त्रविहितत्वाद्व्याप्यविषयकतया (सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेे) त्येतद्रूप—तक्रकौण्डिन्यन्यायमूलकेन (येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती) तिन्यायेन याप्सुटा सीयुडिव नुमाऽऽमो बाधात्पुनरामोऽप्राप्त्या प्रथमैकवचनान्तस्याऽनड्वानित्यस्य तथा नुमाऽमो बाधाद्धे अनड्वन्निति सम्बोधनैकवचनान्तस्य च सिद्धिर्न स्यादित्याशङ्कां निराकरोति—आदित्यधिकारादवर्णात्परोऽयं नुमिति । अयम्भावः, अत्र (आच्छीनद्योर्नुम्) त्यस्मादातोऽनुवृत्त्याऽनडुहशब्दान्त्याऽवर्णात्परो नुम्भवतीत्यर्थे उपजीव्योपजीवकयोरविरोधेन बाध्यबाधकभावाऽभावात्प्रकृते आम उपजीव्यत्वेन तस्मात्प्राक् नुमोऽप्राप्त्या नोक्तदोषः । एवमुक्तयुक्त्यैवाऽमापि नुमो न बाधः । केचित्तु—आमा च नुम्न बाध्यत इति पठन्ति । तस्यायमभिप्रायः, बहवोऽनड्वाहो येषु कुलेषु तानि बह्वनड्वांहि कुलानीत्यत्र परत्वादामि कृते पुनः प्रसङ्गविज्ञानात् (नपुंसकस्य झलचः) इति सूत्रेण भवत्येव नुम् नासौ बाध्यत इति दिक् ॥

नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं नेति । अनडुहशब्दस्य प्रथमैकवचनेऽनड्वानित्यत्र (वसुस्रंस्वि)ति सूत्रेण नकारस्य दत्वं स्यादितिशङ्काग्रन्थस्य समाधानरूपोऽयं ग्रन्थः । तस्यायम्भावः, नुम्विधानसामर्थ्यादविकृतेनैव नुमा सर्वत्र भवितव्यन्तु विकृतेन नुमेति । नुम्विधानोत्तरं तस्य दत्वे तु तद्विधानस्य स्पष्टमेव वैयर्थ्यं स्यात् । न च विधानसामर्थ्येन दत्वे

वारिते तु अनड्वांस्तत्रेत्यत्रापि विधानसामर्थ्यान्नकारस्थानिकं ( नश्छव्यप्रशानि )सेतद्विहितं रुत्वं न स्यादिति वाच्यम् । तत्रोपदेशवैयर्थ्याऽभावेन रुत्वोपपत्तेः । तदुक्तं भाष्यकृता (यम्विधिम्प्रत्युपदेशोऽनर्थकः स विधि र्बाध्यते यस्य तु विधेर्निमित्तं नासौ बाध्यत) इति । तथा च प्रकृते दत्वम्प्रति नुम्विधेर्नैरर्थक्याभावान्नुमा दत्वबाधो जातः । नुमश्च रुत्वम्प्रति निमित्तत्वान्न रुत्वस्य तेन बाध इति ॥

ननु यत्कर्तृकावश्यप्राप्तौ यस्य विधेरारम्भः स तस्य बाधक इति (येन नाप्राप्ति) न्यायस्यार्थः । तथा च हे अनड्वन्नित्यत्र सम्बुद्धिलोपस्यावश्यम्प्राप्तावम आरम्भादमोऽपवादत्वात्तेन (अमा) सम्बुद्धिलोपस्य बाधादेतद्विषये सम्बुद्धिलोपो न स्यात् । नच विषयभेदे बाध्यबाधकभावाऽसत्त्वान्न सम्बुद्धेरमा बाधः स्यादिति वाच्यम् । विषयभेदेऽपि बाध्यबाधकभावस्य सिद्धान्तितत्वादचिरादेशस्य नुडपवादत्वमित्यस्य सप्तमे भाष्येऽभिहितत्वादिति चेन्न । सर्वैः प्रत्ययलोपविधायकशास्त्रैः प्रत्ययोत्पत्त्यभावस्यैवान्वाख्यानादपवादत्वस्यैवासम्भवात् । एवञ्च सम्बुद्धेरमाऽबाधात्सत्यप्यमि सम्बुद्धिलोप इत्याह—हे अनड्वन्निति ।

अनड्वानिति । अनः शकटं वहतीति विग्रहे अनः शब्दोपपदाद्वहतेः क्विपि (अनसो डश्च)ति सकारस्थाने डादेशे (वचिस्वपि यजादीनां किती)ति सम्प्रसारणे प्रातिपदिकत्वेन सौ अनडुह स इति स्थितौ ( चतुरनडुहोरामुदात्तः ) इति सूत्रेणाऽऽमि (सावनडुह) इति नुमि(हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्) ति सोर्लोपे (संयोगान्तस्ये)ति हकारस्य लोपे अनड्वानिति सिद्ध्यति । ननु (न लोपः प्रातिपदिकान्तस्ये) तिसूत्रेण

नलोपः कुतो नेति चेन्न । संयोगान्तलोपस्याऽसिद्धत्वाद्धकारस्यै-व प्रातिपदिकान्तत्वान्नकारस्य तत्त्वाऽभावान्नलोपाप्राप्तेः ।

अल्विधित्वेन स्थानिवत्त्वाऽभावाद्धल्ङ्याबिति सुलोपो नेति । सुदिवशब्दात्प्रथमैकवचने सौ (दिव औदि) तिवकारस्यौकारादेशे यणि सुद्यौ सिति स्थितौ औदादेशस्य स्थानिवत्त्वेन सोर्हल्परत्वात् (हल्ङ्यावि)तिसुलोपो दुर्वार इति शङ्काग्रन्थस्य समाधानात्मकोऽयं ग्रन्थः । अयम्भावः, अनल्वि-धावित्यत्र पञ्चमीसमासस्याश्रयणाद्धलः परस्य विधौ कर्तव्ये स्थानिवद्भावो नेत्यर्थे स्थानिवद्भावनिषेधात्सोर्हलः परत्वाऽभा-वाल्लोपो नेति ॥

षट्चतुर्भ्यश्च । षट् च चत्वारश्च षट्चत्वारस्तेभ्यः । ननु (षट्चतुरश्चे)सेव सूत्रमेकवचनान्तमस्तु किमर्थं बहुवचननिर्देश इति चेन्न । । अर्थस्य प्राधान्यसूचनाय बहुवचननिर्देशस्य सा-फल्यात् । अर्थाद्यामः परत्वं (१)शब्दद्वारकं तेन सत्यपि तदन्त-विधौ परमचतुर्णामित्यादावेव नुडागमो भवति न तु बहुव्रीहौ । वक्ष्यत्येतत् (गौणत्वे तु नुट् नेष्यते) इत्यादिना । ननु षट्संज्ञा-विधायके (ष्णान्ता षडि)तिसूत्रे रेफस्यापि प्रक्षेपात् (ष्णान्ता ष-डि) ति न्यासेनैव रेफान्तस्यापि षट्त्वादेव नुडागमसिद्धाविह चतुर्ग्रहणं व्यर्थमिति चेन्न । तथा सति तिसृश्चतसृ इत्यादावपि षट्त्वे लुगापत्तेः । नचात्र ( सन्निपातलक्षणो विधिरनिमित्तं

(१) नच तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्यस्य फलित-त्वात्प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति दोषस्य तादवस्थ्यमेवेति वाच्यम् । एतत्सामर्थ्येन प्रधानीभूतषडर्थ-वाचकशब्दात्परत्वस्य विवक्षितत्वादिति भावः ।

२३

तद्विघातस्ये ) ति परिभाषया प्रकृतिप्रत्यययोः सम्बन्धरूप-सन्निपातलक्षणजायमानस्य रेफस्य स्वातिरिक्तसम्बन्धविघातक-शास्त्रे षट्संज्ञायां निमित्तत्वाऽभावेन लुग्न स्यादिति वाच्यम् । उक्तपरिभाषयोक्तस्थले लुग्वारणेऽपि चत्वार इत्यादौ लुगाप-त्तेः । नचात्रत्यदोषवारणाय (रो न) इत्येवास्तु न्यास इति वा-च्यम् । एतस्मिन्न्यासे पदलाघवाभावादिति प्राचीनानुरोधेन ॥

वस्तुतस्तु द्विवचननिर्देशे गौरवात्समाहारेण सर्वत्र सूत्रेषु निर्देशस्यादर्शनाच्च षट्संज्ञकशब्दानां बहुत्वाच्च बहुवचनोपप-त्तिः । किञ्च ( न षट्स्वस्रादिभ्य ) इत्यादौ शब्दबाहुल्याभि-प्रायेण बहुवचनस्येव ( तिसृभ्यो जसि ) त्यादावपि प्रयोगबा-हुल्याभिप्रायेण बहुवचनस्य वक्तुं युक्तम् । किञ्च ( नामी )ति सूत्रे भाष्ये ( आमी ) त्येवास्तु सूत्रम् । नचामीति सूत्रकरणे दीर्घस्य नित्यत्वात्पूर्वं दीर्घे ततो ह्रस्वाश्रयस्य नुटो न प्रवृत्ति-रिति वाच्यम् । ह्रस्वान्तान्नुडित्येतत्सामर्थ्येन भूतपूर्वगतेराश्रय-णेन ह्रस्वान्तत्वमादाय नुटः प्रवृत्तेः । न च नृणामित्यत्र नुड्वि-धानाय सूत्रस्य चारितार्थ्येन सामर्थ्याश्रयणेन नुटः प्रवृत्तिर्व-क्तुमशक्येति वाच्यम् । ( नैकमुदाहरणं योगारम्भं प्रयोजयती ) तिभाष्यादेकोदाहरणस्य सूत्रसार्थक्यकरणसामर्थ्याभावात्तदर्थं ( नृनघाप )। इति विशेषसूत्रस्य सत्त्वात्सामान्यसूत्रस्य वैय-र्थ्येन सामर्थ्याश्रयणेनोक्तकल्पनायाः कर्तुं शक्यत्वात् । नच तिसृणामित्यत्र सामान्यसूत्रस्य चारितार्थ्येन पुनः सामर्थ्याद्या-श्रयणमकिञ्चित्करमिति वाच्यम् । ( षट्चतुर्भ्यश्चे )ति सूत्रे त्रेः रित्यस्यानुवृत्त्या तिसृणामित्यत्र नुडुपपत्तेः । प्रकृतसूत्रस्य गौ-णेऽप्रवृत्तिकल्पने तु प्रियचतसृणामित्यत्र सामान्यनुड्विधायक-

सूत्रस्य चारितार्थ्येन भाष्यासङ्गतिः । न च (ऋन्नघ्राप )इति न्यासेन प्रियचतसृणामित्यत्र नुडुपपत्तिः स्यादिति वाच्यम् । भाष्यकर्तुरुक्तन्यासे तात्पर्याभावात् । त्रेरनुवृत्तिपरभाष्यासङ्गतेः । नैकमुदाहरणमित्यस्यासङ्गतेश्च । गौणे नुटोऽप्रवृत्तिसाधकभाष्यान्तराभावाच्च । नच भूतपूर्वगत्या नुडुपपादने पद्धां दतामित्यादावपि नुडापत्तिर्दुर्वारेति वाच्यम् । ह्रस्वत्वस्य मात्राकालिकाच्त्वरूपेण तत्र सामर्थ्यात् विशेषणभूतमात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणेन विशेष्यभूताऽच्त्वांशे तदनाश्रयणेनादोषादिति दिक् ॥

णत्वं द्वित्वं चतुर्णामिति । अयम्भावः, (रषाभ्यां णो नः समानपदे) ( अचोरहाभ्यां द्वे ) इति सूत्रद्वयविहितकार्ययोर्णत्वद्वित्वयो र्मध्ये द्वित्वस्य णत्वाऽपेक्षया परत्वात् (विप्रतिषेध ) शास्त्रबलाण्णत्वात्प्राक् द्वित्वे ततो णत्वे द्वित्वं णत्वमित्येव मूले वक्तव्य त्वतु तद्विपरीतमिति चेन्न । (पूर्वत्राऽसिद्धमि )त्यनेन पूर्वत्र कर्तव्ये परशास्त्रस्यासिद्धत्वबोधनात्परस्य द्वित्वस्य णत्वदृष्ट्याऽसिद्धत्वेन द्वित्वात्प्राक् णत्वस्यैव प्रवृत्तेः । न च द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थिकया—पूर्वत्रासिद्धाधिकारभवशास्त्रज्ञापकज्ञापितया ( पूर्वत्रासिद्धीयमद्वित्वे ) इति परिभाषया द्वित्वभिन्ने कार्ये कर्तव्ये पूर्वत्रासिद्धमित्यस्य प्रवृत्त्यभ्युपगमेन प्रकृते द्वित्वकार्यस्यैव कर्तव्यत्वात्पूर्वत्रासिद्धमित्यस्याऽप्रवृत्त्या परत्वाद्द्वित्वस्यैव सम्भवेन प्रागभिहितस्य द्वित्वं णत्वं चतुर्णामिति विपरीतग्रन्थलेखनरूपस्य दोषस्य तादवस्थ्यमेवेति वाच्यम् । सय्यँन्तेत्यत्र यकारत्रयघटितरूपसिद्धये स्वीकरणीयेन ( द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमि )ति वार्त्तिकेन वर्णद्वि-

त्वे ( पूर्वत्रासिद्धीयमद्वित्वे ) इति परिभाषाया अप्रवृत्तिकल्पनया-ऽदोषात् । अन्यथा द्वित्वप्रत्युक्तपरिभाषया पूर्वत्रासिद्ध-मित्यस्याप्राप्त्या परसवर्णस्य सिद्धत्वेन भाष्यप्रयोगासिद्धावुक्त-वार्त्तिकस्य वैयर्थ्यं स्यात् । तथा च पूर्वत्रासिद्धमित्यस्य द्वित्वे कर्तव्येऽपि प्रवृत्त्या द्वित्वस्यासिद्धत्वात्ततः प्राक् णत्वस्यैव प्र-वृत्तेरदोषात् । नच भाष्योदाहरणीभूतस्य वाक् वाक्क इति प्रयोगस्य सिद्ध्यर्थं ( पूर्वत्रासिद्धीयमद्वित्वे ) इत्येतत्परिभाषाया वर्णद्वित्वेऽपि प्रवृत्तेरावश्यकत्वम् अन्यथा ( पूर्वत्रासिद्धमि ) त्यनेन चर्त्वात्प्राक् गस्यैव द्वित्वबोधनादन्त्यस्य चर्त्वे पूर्वत्र ग-कारश्रवणापत्तिर्दुर्वारा स्यात् । न च पूर्वगकारस्य ( खरि चे ) ति सूत्रेण चर्त्वे भाष्यप्रयोगसिद्धिरिति वाच्यम् । अवसान-चर्त्वस्यासिद्धत्वात्खर्परत्वाऽभावेन चर्त्वाऽप्राप्त्या गकारश्रव-णस्य दुर्वारत्वात् । न च कस्य द्वित्वेऽप्यवसाने चर्त्वस्याऽसिद्ध-त्वाद्गकाररूपे झशि पूर्वस्य जश्त्वादुक्तरीत्यैव गश्रवणापत्तेर्दुर्वा-रत्वं स्यादिति वाच्यम् । पूर्वत्रासिद्धीयमित्यस्य ( न मुने ) इ-ति वत् द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्तव्ये-ऽसिद्धत्वञ्चेत्यर्थेऽवसानचर्त्वस्यासिद्धत्वाऽभावाज्झश्परत्वाभावेन पूर्वककारस्य जश्त्वाभावेन गश्रवणात्मदोषस्याऽभावात् । तथा च मूलोक्तः प्रकृतग्रन्थोऽसङ्गत एवेति चेन्न । ( पूर्वत्रासिद्धीयम-द्वित्वे ) इति परिभाषाया द्वित्वे कर्त्तव्येऽन्यदसिद्धन्न द्वित्वन्त्वासि-द्धमेवेत्यर्थे णत्वोत्तरं द्वित्वेन प्रकृतग्रन्थस्य सङ्गतत्वादिति भावः ॥

गौणत्वे तु नुट् नेष्यत इति । ( गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ) इति न्यायेन ( षट्चतुर्भ्यश्चे )ति सूत्रे मुख्या-र्थवाचकस्यैव चतुर्शब्दस्य ग्रहणाद्गौणस्य प्रियचतुर्शब्दस्याऽग्र-

हणान्नुणूनेति भावः । सूत्रे षट्चतुर्भ्य इति बहुवचननिर्देशसाम र्थ्याद्बहुत्वार्थकस्यैव चतुर्शब्दस्य ग्रहणंनैकत्वाद्यर्थवाचकस्यो- क्तशब्दस्याग्रहणान्नुणूनेति केचित्तन्न । बहुवचननिर्देशस्य लाघवार्थत्वेन सार्थक्यसम्भवे तत्सामर्थ्यादुक्तकल्पनायाः कर्तु- मशक्यत्वात् ।

यत्तु-( ष्णान्ता षट् ) तिसूत्रे संख्यापदानुवृत्त्या तस्य च संख्याबोधकशब्दपरतया ( प्रधानाप्रधानयोः प्रधाने कार्यस- म्प्रत्ययः ) इति न्यायेनाऽनुपसर्जनस्यैव संख्यारूपार्थस्य ग्रह- णादुपसर्जने षट्त्वमेव नेति । ननु पञ्च ब्राह्मणा इत्यादावपि पञ्चत्वसंख्याया आश्रयत्वांशे विशेषणत्वादप्राधान्येन प्रकृते नो क्तन्यायविषयतासंभव इति चेन्न । संख्यापदेन संख्येयस्याऽभि- धानात् । तेन संख्येयपरमपञ्चेत्यादौ संख्येयस्य प्राधान्येन संज्ञासिद्धिरिति । यद्वा ( प्रधान ) न्यायानाश्रयणेऽपि गौणे न षट्संज्ञापत्तिः । षडित्यन्वर्थसंज्ञाविज्ञानेन गौणे तदप्रवृत्तेः । षड् ब्राह्मणा इत्यत्र यथा षट्शब्दप्रयोगादन्यव्यवच्छेदो भव- ति संख्येयस्य च प्राधान्यतः प्रतीतिर्भवति तथा प्रकृतेऽपि ष- डिवाचरतीत्यर्थो विवक्षित इति भावः । तन्न । उक्तरीत्या मु- ख्यस्यैव पञ्चादिशब्दस्य ग्रहणे सति प्रियपञ्चा द्रौपदीत्यत्र (न षट्स्वस्रादिभ्यः ) इति डाप्निषेधानापत्तेः । ( आकडारादेका- संज्ञे )तिसूत्रभाष्ये षट्संज्ञाया डुसंज्ञया व्यवहारेणाऽस्य निरुक्ता- र्थत्वासम्भवाच्च । न च डुसंज्ञापक्षे तादृशार्थकत्वाऽभावेऽपि ष- ट्संज्ञापक्षे तु तादृशार्थकत्वमस्त्येवेति वाच्यम् । सर्वनामसंज्ञाव- दत्रापसर्जनप्रतिषेधानारम्भात् । उपसर्जनीभूतसर्वादेः संज्ञानि- षेधाय यथा वार्तिककृता प्रतिषेधवार्त्तिकमारब्धन्न तथोपसर्जन-

पञ्चादिशब्दानां षट्संज्ञातत्प्रयुक्तकार्ययोरभावाय किमपि वचनमारब्धमिति भावः। सर्वनामसंज्ञाविधायकसूत्रस्थेन ( षड्भ्य ) इति सूत्रविषयेण ( अङ्गाधिकारे यदुच्यते ग्रहणमाणविभक्तेस्तद्वती ) तिभाष्येण विरोधापत्तेश्च। तस्माद्गौणे षट्त्वस्य निराबाधान्नुड्व्यावृत्तिरेव सम्पादनीयेति दिक् ॥

कमलिति। कमलं करोति कमलमाचष्टे वेत्यर्थे ( तत्करोति तदाचष्टे ) इति णिचि इष्ठवद्भावेन टिलोपे ततः कर्तरि क्विपि ( णेरनिटी )ति णिलोपे ततः प्रातिपदिकत्वेन सोरुत्पत्तौ तस्य ( हल्ङ्याब्भ्यो ) ति सुलोपे प्रयोगसिद्धिः। ननु ( अचः परस्मिन्पूर्वविधावि ) ति सूत्रे पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासाश्रयणाद्दल्लोपणिलोपयोः स्थानिवत्त्वेन सोर्हल्परत्वाभावाल्लोपाप्राप्त्या कथमुक्तप्रयोगासिद्धिरितिचेन्न ( पूर्वत्राऽसिद्धे न स्थानिवदि ) त्यनेन पूर्वत्रासिद्धीये कार्ये कर्तव्ये स्थानिवत्त्वनिषेधात्केनाऽपि वर्णेनाऽव्यवधानाल्लोपेनतत्सिद्धेरिति तदाशयः। वस्तुतो लण्सूत्रे ( न हि पदान्ताः परेऽणः सन्ति, ननु चायमस्ति ( कर्तृ हर्तृ ) इति भाष्यात् भोभगो अघो अपूर्वस्य योऽशी ) ति सूत्रस्थस्य वृक्षव् करोतीत्यादिभाष्यस्यैकदेशयुक्तित्वलाभात् कमलवृक्षवित्यादिप्रयोगाणामनभिधानस्यैवौचित्यम्। अयं च भाष्यग्रन्थाभिप्रायः, आदौ न हि पदान्ताः परेऽणः सन्तीति सामान्यतोऽभिधानात्पश्चान्ननन्वयमस्तीत्यनेन परस्याऽणोऽजरूपस्यैव दर्शितत्वान्न तु हल्रूपस्येति परस्याऽणोऽनुनासिकत्वयोग्यस्याऽजूरूपस्य स्वीकारः सम्भवति न तु हल्रूपस्येति। अत्रानुनासिकत्वयोग्येत्यभिधानात् स्वर् अन्तर् प्रातर् लिह्

इत्यस्य सत्त्वेऽपि क्षतिविरहः । तेषामनुनासिकत्वयोग्यत्वाऽसम्भवात् । ( अमोऽनुनासिका नह्वावि ) त्युक्तेः । कमलित्यत्र लकारस्याऽनुनासिकत्वयोग्यत्वसत्त्वेऽपि नन्वयमस्तीति भाष्येणाऽच एव प्रदर्शनेन तस्याप्यनभिधानमिति । नचोक्तरीत्या लान्तशब्दानभिधानेऽपि तोयमाचक्षाणस्तोयू तोयौ तोय इत्यादियान्तानान्त्वभिधानमस्तीति वाच्यम् । (वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेने )ति वार्त्तिकेन यलोपे यान्तशब्दानामसम्भवात् । न च ( लोपो व्योर्वली)तिसूत्रेण यलोपे कर्तव्ये ।णिलोपस्य टिलोपस्य वा स्थानिवद्भावेन वल्परत्वाऽभावेन यलोपो न स्यादिति वाच्यम् । ( न पदान्तद्विर्वचनयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिष्वि )ति सूत्रेण यलोपे कर्त्तव्ये स्थानिवत्त्वनिषेधाद्वल्परत्वेन यलोपस्य दुर्वारत्वात् । न च ( प्राग्दीव्यतोऽणि )ति सूत्रे दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणवत्कातिपयशब्दैकदेशयान्तानुकरणे यान्तशब्दानां सम्भवोऽस्त्येवेति वाच्यम् । पूर्वोक्तभाष्यस्वारस्येनाऽनुकार्यस्वरूपभङ्गभिया च तत्रानुनासिकत्वयोग्यतायाः सम्भवेऽप्यनभिधानस्य कल्पनादित्यलम् ॥

किमः कः । ( अष्टन आ विभक्तावि ) त्यतो विभक्ताविस्यनुवर्तते तदाह—किमः कः स्याद्विभक्ताविति । किम्शब्दोऽत्र जिज्ञासिते शक्तः । अत्रेदमवधेयम् । उद्देश्यवाचकस्य किंशब्दस्य विधेयवाचकशब्दसमभिव्याहारे तत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वोपलक्षितो यो वक्तृजिज्ञासितो धर्मस्तद्धर्मावच्छिन्नबोधकता वाच्या । स च धर्मः को ब्राह्मणः, कः पण्डित इत्यादौ चैत्रत्वादिरूप एव न तु जिज्ञासाविषयतावच्छेदकांशे तस्यानुगमकस्य शक्त्यैक्यसम्पाद-

कस्य धर्मस्य विशेषणत्वम् । तेन रूपेण जिज्ञासाविषयतावच्छेदकधर्मस्य शाब्दबोधे मानाऽभावात् । एवञ्च को ब्राह्मण इत्यतो ब्राह्मणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान् ब्राह्मण इत्याकारकोऽन्वयबोधः श्रोतुः । वक्तुश्च किञ्चिद्धर्मावच्छिन्नोद्देश्यतानिरूपितब्राह्मणत्वावच्छिन्नविधेयताशालि ज्ञानं मे जायतामित्याकारिका जिज्ञासा प्राक् भवति । तस्याश्च वक्तृवाक्यजन्यसमभिव्याहृतब्राह्मणादिपदार्थतावच्छेदकावच्छिन्नविधेयतानिरूपितकिञ्चिद्धर्मावच्छिन्नोद्देश्यताकबोधेन निवृत्तिः । नचैवम्प्रमेयो ब्राह्मण इति वाक्यादपि तादृशजिज्ञासानिवृत्तिः स्यादेतद्वाक्यस्य किञ्चित्प्रमेयत्वादिरूपधर्माऽवच्छिन्नोद्देश्यकबोधजनकत्वादिति वाच्यम् । प्रागुक्तानुगमधर्मोपलक्षितधर्मस्य विधेयन्यूनवृत्तित्वेनापि विशेषणीयत्वात् । विधेयबोधककिम्पदस्य तु समभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो धर्मस्तदवच्छिन्ने शक्तिः । यथा द्रव्यं किमस्तीत्यादौ । यत्र सर्वनामसंज्ञकस्य किं शब्दस्य प्रयोगस्तत्र प्रागुक्तरीत्या बोधः कल्पनीयः । वितर्कबोधकः किंशब्दस्त्वव्ययसंज्ञकः प्रयोक्तृसमवेतसम्भावनात्मकज्ञानबोधकः ।

यथा—

किमिन्दुः किम्पद्मं किमु मुकुरबिम्बं किमु मुखमित्यादौ ।

तादृशज्ञाने च प्रकारतासम्बन्धेनेन्द्वादिपदार्थस्यान्वयः । तादृशज्ञानस्य तु विशेष्यतया प्रथमान्तार्थेऽन्वयः । यत्र तु कति घटाः सन्तीति प्रयोगस्तत्रापि (१)जिज्ञासितस्यैव किम्पदार्थत्वे-

(१) जिज्ञासितस्यैवेति । जिज्ञासाविषयीभूतस्यैवेत्यर्थः ।

न संख्यात्वावच्छिन्नस्य च डतिप्रत्ययार्थत्वेन च संख्यात्वन्यून-वृत्तिदशत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकं ज्ञानं जायतामित्याकारेच्छाविषयाभिन्नसंख्याविशिष्टाः सन्तीति शाब्दधी भवति । दश घटाः सन्तीति वाक्यतस्तु सा (१)आकाङ्क्षा निवर्तते । यत्र कस्य राजा पटुरित्यादावुद्देश्यतावच्छेदकीभूतषष्ठ्यर्थे किंशब्दार्थान्वयस्तत्र यादृशधर्मविशिष्टसम्बन्धे येन सम्बन्धेन जिज्ञासितस्यान्वयस्तत्र तेनैव सम्बन्धेन विशेषधर्मावच्छिन्नान्वितताहशसम्बन्धधर्मितावच्छेदककशाब्दधीः । एवं रीत्या सर्वत्र बोध्यम् ।

ननु ( किमः क ) इति सूत्रे ककारोच्चारणम्व्यर्थम् ( त्यदादीनाम ) इत्यतस्त्यदादिपदमनुवर्त्य त्यदादीनामिमः अः स्यादित्यर्थेनैवेष्टसिद्धेः । न च त्यदादिप्रयुक्तकार्यं द्विपर्यन्तानामेवेष्टं किम्शब्दश्च त्यदादिगणवहिर्भूत इति नेष्टप्रयोगस्य सिद्धिः स्यादिति वाच्यम् । त्यदादिगणवर्तिनो द्विशब्दात्प्राग् किंशब्दस्य पाठकरणेन सिद्धेः ( किं सर्वनामवहुभ्य ) इत्यत्र किंग्रहणस्याकर्तव्यत्वेन लाघवाच्च । न चेमः अविधाने इमावित्यत्राप्यादेशापत्तिरिति वाच्यम् । ( अङ्गकार्ये कृते पुनर्नाङ्गकार्यमि ) ति तन्निषेधात् । न च इम इत्यस्य षष्ठीनिर्दिष्टतया ( अलोऽन्त्यस्ये )ति परिभाषोपस्थित्याऽन्त्यस्य मकारस्य स्थाने आदेशापत्तिरिति वाच्यम् । ( नानर्थकेऽलोऽन्त्यविधिरनभ्यास-

---

(१) पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षापदार्थः । यत्पदविशेष्यकाव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदप्रकारज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाऽभावस्तादृशबोधे तत्पदे तत्पदवत्त्वमाकांक्षा । तादृशाकांक्षाज्ञानस्य च शाब्दबोधे कारणता बोध्या ।

विकारे ) इतिपरिभाषयाऽलोऽन्त्यपरिभाषानिषेधेनाऽन्त्यस्यादेशानापत्तेः। न च द्विशब्दात्प्राक् किंशब्दे पठिते स च कश्चेत्येकशेषे किंशब्दस्य शेषापत्तिः स्यादिष्टश्च तच्छब्दस्यैवेति वाच्यम्। साकच्कादेशविधानपरभाष्यप्रामाण्यादेकशेषे द्विपर्यन्तानां त्यदादीनामितिनियमस्य बाधेन तादृशप्रयोगस्यैवाऽसत्त्वात्। न च ( कुतिहोरि ) त्याद्यर्थं किमः ककारोच्चारणस्यावश्यकतया वैयर्थ्योक्तिरसङ्गता स्यादन्यथेमः कादेशे ककारद्वयस्य श्रवणप्रसङ्ग इति वाच्यम्। तत्रापि ( कुतिहोरि ) ति न्यासकरणेनैवेष्टोपपत्तेः। न च ( क्काती ) त्येत्सूत्रविहितकादेशे ककारश्रवणार्थं किमः ककारोच्चारणस्यावश्यकत्वमन्यथोक्तयुक्त्या कद्वयश्रवणं दुर्वारमिति वाच्यम्। तत्रापि( क्काती ) तिन्यासोहितसूत्रेणैवेष्टसिद्धेरप्रत्यूहत्वात्। एवञ्च ( किमः क ) इति सूत्रे व्यर्थमेव ककारोच्चारणमित्याशङ्कामपाकर्तुमाह दीक्षितः-अकच्सहितस्याप्ययमादेश इति। प्रकृतसूत्रस्थककारोच्चारणस्य प्राक्प्रदर्शितरीत्या वैयर्थ्येन सामर्थ्यात्साकच्कस्यापि किम् ( ककिम् ) शब्दस्य कादेशो भवतीत्यर्थज्ञापनादिष्टं सिद्ध्यति। ( इमः अ ) तिन्यासे तु साकच्कस्य ककिम्शब्दस्येमः स्थानेऽविधाने कक इत्यापत्तिरिति भावः। न च ( अव्ययसर्वनाम्नामकच् प्राक्टेरि ) तिसूत्रेण कृतेऽकाचि तस्य शब्दान्तरत्वादादेशो न स्यादिति वाच्यम्। ( तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ) इतिन्यायेन साकच्कस्यापि किंशब्दत्वेनादेशोपपत्तेः। नचोक्तन्यायाभ्युपगमेऽपि ( स्वार्थे परिपूर्णस्य कुत्साद्यर्थसम्बन्धः ) इत्यस्यान्तरङ्गत्वात्प्राक्कादेशे ततोऽकचि कक इत्यापत्तिरिति वाच्यम्। अकचोऽङ्गसंज्ञापेक्षप्रत्ययानपेक्षत्वेनान्तरङ्गत्वात्कादेशात्प्रागेव प्रवृत्तेः।

न च सुबन्तस्य प्रियकुत्सनादियोगेनाऽकचोऽन्तरङ्गत्वं न सम्भवतीति वाच्यम् । सुपः शब्दतो निमित्तत्वेनोपादानाभावात्तस्यान्तरङ्गत्वाक्षतेः । न च कादेशस्याऽप्यन्तरङ्गत्वं कुतो नेति वाच्यम् । कादेशे तु विभक्तेः शब्दतो निमित्तत्वेनाश्रयणेन बहिरङ्गत्वस्यैव सत्त्वात् । न चात्र ( निर्दिश्यमानस्यादेशा भवन्ती ) तिपरिभाषया षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वरूपनिर्दिश्यमानस्यैवादेशलाभात्साकच्कस्योक्तशब्दस्य चोक्तरूपनिर्दिश्यमानत्वाभावेन न प्रकृतसूत्रे ककारोच्चारणस्य साकच्कादेशविधानार्थत्वं सम्भवतीति वाच्यम् । कादेशविधानसामर्थ्यात्परिभाषाया अप्रवृत्तेः । न च ( तन्मध्यपतित ) न्यायविषयेऽपि ( निर्दिश्यमान ) परिभाषाप्रवृत्तिर्भवति. अत एव भिन्धकीत्यत्राऽकचि कृते धित्वन्न प्राप्नोति निर्दिश्यमानपरिभाषयेति भाष्ये आशङ्क्य(१) अन्तरङ्गत्वाद्धित्वे कृतेऽकजित्याद्युक्तम् तथा चोक्तपरिभाषया न साकच्कस्यादेशप्राप्तिरिति वाच्यम् । ( किमः कः ) इत्यस्यावृत्त्याश्रयणादेकेनाकज्रहितस्य द्वितीयेन साकच्कस्यादेशोपपत्तेरिति(२)कैयटः । न चोक्तपरिभाषया साक-

---

(१) अन्तरङ्गत्वादिति । कुत्साविषयतिङन्तादकचो विधानेन बहिरङ्गत्वं ध्यादेशस्य तु तदन्तर्गतहिप्रत्ययापेक्षत्वेनान्तरङ्गत्वमिति भावः ।

(२) कैयट इति । एतेनाऽरुचिं सूचयति नागेशः । तथाहि—यथा स्थानिवद्भावविषये स्थानिबुद्ध्यैव कार्यप्रवृत्तिस्तत्र निर्दिश्यमानपरिभाषा न प्रवर्तते तथा ( तन्मध्यपतित ) न्यायेनाऽपि तद्बुध्यैव कार्यप्रवृत्तिरेतद्विषयेऽपि निर्दिश्यमानपरिभाषाया अप्रवृत्तिकल्पनेनैव साकच्कस्यादेशसिद्धावावृत्त्याश्रयणं व्यर्थमिति । एतेन निर्दिश्यमानपरिभाषाव्याख्यानावसरे परिभाषेन्दुशेखरेऽकज्विषये निर्दिश्यमानपरिभाषाप्रवृत्तिं स्वीकृत्य समाधानं कृतमिति विरोध इति तदेतत्प्रत्युक्तम् ।

चकस्यानिर्दिश्यमानत्वेनाऽऽदेशाऽप्रवृत्तौ ( अनाऽऽप्यक ) इत्यत्राऽक इतिपर्युदासस्य वैयर्थ्यं स्यादिति वाच्यम्। अस्मादेव ज्ञापकात्साकच्कापहारकादेशविषये निर्दिश्यमानत्वाऽभावस्य साकच्कानपहारकादेशविषये निर्दिश्यमानत्वस्य चाभ्युपगमात्। अत एव सर्वशब्दाद्दाप्रत्यये ( सर्वस्य सोऽन्यतरस्यां दी ) तिवैकल्पिकः सादेशो न भवति। अनेषक इत्यादौ सत्वादि च सिद्ध्यतीति।

वस्तुतस्तु सर्वमेतद्व्यामोहमात्रं निष्कर्षस्तु साकच्के कर्किशब्देऽकचः किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तन्मध्यपतितत्वसत्त्वान्निर्दिश्यमानत्वेन स्यादेवाऽऽदेशः। भिन्धकीत्यत्र तु अकच्प्रत्ययस्य तिङन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तिङन्तवृत्तिधर्मारोपेऽपि हित्वारोपे प्रामाण्याभावेन निर्दिश्यमानस्य हेरभावात्। अकचि कृते धित्वं न प्राप्नोतीति पूर्वपक्षस्तु युक्त एव। एवं च तन्मूलकोक्तनिर्दिश्यमानत्वाभावकल्पनं अक इति पर्युदासवैयर्थ्यापादनपूर्वकमवान्तरकल्पनं चायुक्तमेव। नचैवं सर्वकदंसत्र का गतिरिति वाच्यम्। तत्र यथा लक्षणं सादेशस्यैवेष्टत्वात्। नचैवं निर्दिश्यमानपरिभाषा तु नेह प्रवर्तत इति शब्दरत्नग्रन्थोऽनुपपद्यत इति वाच्यम्। परमकिंशब्दादकचि तस्य किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वाऽभावेन तन्मध्यपतितन्यायाविषयत्वेन कादेशाऽप्राप्त्या कादेशविधानसामर्थ्येन तादृशलक्ष्यस्य निर्दिश्यमानपरिभाषयाऽव्यावृत्तौ तत्तात्पर्यादिति दिक्॥

ननु इदम्शब्दस्य चतुर्थ्येकवचने ङयि ( त्यदादीनामः ) इत्यत्वे कृते इद ए इतिस्थितौ ( पूर्वपरनित्यान्तरङ्गापवादाना-

मुत्तरोत्तरं बलीयः) इतिपरिभाषया पूर्वशास्त्रापेक्षया परशास्त्रस्य प्राबल्यबोधनात् ( अनाप्यकः ) इत्येतद्विहिताऽनादेशस्य ( सर्वनाम्नः स्मै ) इतिविहितस्मैभावापेक्षया परत्वेनेमं बाधित्वा सत्यनादेशे ( सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे ) ति परिभाषया पुनस्तत्र स्मायादेशो न स्यादिति पूर्वपक्षन्निराकर्तुमाह--नित्यत्वान्ङेः स्मै इति। अयम्भावः, प्रागुक्तपरिभाषया नित्यशास्त्रस्य परशास्त्रापेक्षया प्राबल्यबोधनादनादेशापेक्षया स्मैभावस्य कृताकृतप्रसङ्गित्वरूपनित्यत्वसत्त्वादनादेशं बाधित्वा स्मायादेश एव भवति । नचानादेशस्याप्युक्तरूपनित्यत्वसत्त्वादनादेश एव कुतो नेति वाच्यम् । लक्ष्यानुरोधाद्बाधकाबाधितकृताकृतप्रसङ्गित्वरूपनित्यत्वस्यैव ग्रहणेन तादृशनित्यत्वस्य स्मायादेशस्यैव च सत्त्वेनास्यैव प्राप्तेः अनादेशस्य तु ( हलि लोप ) इत्यनेन बाधकाबाधितत्वाभावेनोक्तविधनित्यत्वाभावादिति संक्षेपः ।

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । ननु प्रकृतसूत्रेणाऽनुदात्ताऽशूविधानं फलाभावात् व्यर्थमिति चेन्न। आभ्यामित्यादौ ( ऊडिदं पदाद्यप्पुम्रैद्युभ्यः ) इत्यनेन ( सावेकाचस्तृतीयादिर्विभक्तिरि ) त्यनेन वा प्राप्ताया विभक्तेरुदात्तताया अभावपूर्वकान्तोदात्तत्वाय तस्य सार्थक्यात् । अन्यथा ( सावेकाच ) इतिसूत्रेऽन्तोदात्तादित्यस्यापकर्षेण ( ऊडिदमि ) तिसूत्रेऽन्तोदात्तादित्यस्यानुवृत्त्या च विभक्त्युदात्ततायाः दुर्वारप्रसङ्गात् । आभ्यामित्यादेः सर्वानुदात्तत्वं तु प्रकृतेः प्रकृतसूत्रेण प्रत्ययस्य च ( अनुदात्तौ सुप्पिताविं ) ति सूत्रेणानुदात्तत्वेन बोध्यम् । नचाभ्यामित्यादेः सर्वानुदात्तत्वे किं साधकमिति

वाच्यम् । एभिरग्रे प्रेगान्तदेषामित्यादौ सर्वानुदात्तत्वश्रवणस्यैव तत्र मानत्वात् ।

अश्वचनं साकच्कार्थमिति । अयम्भावः, ( इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावि ) तिसूत्रेण इदमोऽनुदात्तमात्रविधानेनापि ( त्यदादीनाम ) इत्यत्वे ( हलि लोप ) इतिलोपे च सत्याभ्यामित्यादिसमीहितरूपस्याऽन्वादेशविषयस्य तु विशिष्यैनादेशविधानादेनेन एनयोरित्यादेश्च सिद्धे व्यर्थमशवचनं साकच्कार्थमिति । अशः शित्वेन सर्वादेशार्थत्वादकाजित्रशिष्टस्यादेशे इत्यन्तर्गतो भावः । नचाऽथापि शित्करणम्व्यर्थं त्यदादीनाम इत्यकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशत्वासिद्धेरिति वाच्यम् । अकारस्याऽकारविधानसामर्थ्येन सर्वादेशत्वज्ञापनवदीर्घाभावस्यापि ज्ञापनसम्भवात् । तस्मात्साकच्कादेशार्थत्वमेव शित्करणप्रयोजनमिति स्थितम् । अनुदात्तत्वार्थमेवाकारविधानमितिसन्देहनिवर्त्तकं शित्करणमिति केचित् । वस्तुतः अ अ इति प्रश्लिष्य निर्देशे तु अद्वयविधानसामर्थ्यादेव अनेकाल्त्वात्सर्वादेशत्वसिद्धाविह शित्करणं त्यक्तुं शक्यमित्यलम् । न च संज्ञाभूतस्योपसर्जनीभूतस्य चेदमो भ्यामादावनुदात्ताश्विधानेनाभ्यामिति रूपसिद्ध्यर्थमिहाश्ग्रहणमिति वाच्यम् । ( एतदस्त्रतसोरि ) त्युत्तरसूत्रसाहचर्येण तयोरविधानात् । उत्तरसूत्रे हि तसोर्निमित्तत्वेनोपादानात्तयोश्च संज्ञोपसर्जनयोरभावात्सर्वनामसंज्ञकस्यैव स्थानित्वमित्युत्तरसूत्रेण जायमानादेशस्य संज्ञोपसर्जनभिन्नस्यैव बोधकत्वमित्यर्थाधिकारानुरोधात्पूर्वसूत्रस्याऽश्ग्रहणस्यापि संज्ञोपसर्जनभिन्नस्यैव बोधकत्वमिति भावः ।

परत्वादुपधादीर्घ इति । ननु राजन् स इति स्थितावु-पधादीर्घसुलोपयोर्मध्ये दीर्घस्य परत्वेऽपि सुलोपस्य प्रतिपदो-क्तत्वाद्दीर्घं बाधित्वा सुलोपस्यैव प्राप्त्या मूलोक्तग्रन्थोऽसङ्गत एवेति चेन्न । परत्वादुपधादीर्घः प्राप्तस्तं बाधित्वा प्रतिपदोक्तत्वा-त्पूर्वं सुलोपस्ततो दीर्घ इत्यत्रैव ग्रन्थस्य तात्पर्यात् । अत एव हलन्तनपुंसकलिङ्गे ( इह हल्ङ्यादिलोप इत्यादिः । नान्तलक्ष-ण उपधादीर्घ ) इत्यन्तो ग्रन्थः सङ्गच्छते । अन्यथा तत्रापि सु-लोपात्प्राक् परत्वादुपधादीर्घस्यैवाभिधानौचित्यादिति भावः ।

ततो नलोपः । राजेति । ननु राजन् शब्दस्य प्रथमै-कवचने सौ राजन् स इत्यत्र प्राप्तं परत्वादुपधादीर्घं बाधित्वा प्रतिपदोक्तत्वात्पूर्वं सुलोपे तत उपधादीर्घे राजानिति स्थितौ ( प्रत्ययलोपे प्रत्ययलक्षणमि ) त्यनेन नान्तस्य सुबन्तत्वात्पद-त्वेऽपि तेनैव प्रत्ययलक्षणेन प्रत्ययान्तत्वस्यापि जातत्वादप्रत्य-य इति निषेधेन प्रातिपदिकत्वाऽभावान्नलोपो न स्यात्प्रातिपदि-कसंज्ञकं यत्पदं तदन्तनकारस्यैव लोपविधानादिति चेन्न । अ-प्रत्यय इति पर्युदासेन प्रत्ययान्तभिन्नस्य प्रत्ययान्तसदृशस्य प्रातिपदिकत्वमित्यर्थे यथोद्देशपक्षे पूर्वकृतप्रातिपदिकसंज्ञामादा-य नलोपसिद्धेः । नचोक्तरीत्या यथोद्देशपक्षे निर्वाहेऽपि कार्य-कालपक्षे तूक्तदोषस्तदवस्थ एवेति वाच्यम् । व्यवस्थितयो-र्यथोद्देशकार्यकालपक्षयोर्मध्ये एकतरपक्षाश्रयणेन प्रयोगसि-द्धिसम्पादनेऽपीतरपक्षाश्रयणेन दोषदानस्य भाष्यकृता काऽप्यनुक्त्याऽदोषात् । नचाऽप्रत्यय इत्यत्र प्रसज्यप्रतिषेधाश्र-यणात्प्रत्ययान्तस्य प्रातिपदिकत्वाऽविधानेन पक्षेऽस्मिन् लोपे-नैव जातनिवृत्तेरपि वक्तुं शक्यतयोक्तदोषस्य तादवस्थ्यमेवेति

वाच्यम् । ( न ङिसम्बुद्ध्योरि ) तिनिषेधसामर्थ्यात्प्रत्ययलक्षणेन प्रत्ययान्तत्वमाश्रित्य निषेधाप्रवृत्तेर्ज्ञापनेनादोषादित्यलम् ।

नचाल्लोपः स्थानिवदिति । ननु राजञ्छब्दस्य द्वितीयाबहुवचने शसि ( लशक्वतद्धिते ) इति शस्येत्वे ( यचि भमि ) ति भत्वे ( अल्लोपोऽन ) इत्यल्लोपे राजन् असितिस्थितौ (अचः परस्मिन्पूर्वविधावि) तिसूत्रे पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासाश्रयणादल्लोपस्य स्थानिवद्भावाद्व्यवधानेन श्चुत्वाऽप्रसक्तौ राज्ञ इति न सिद्ध्येदिति चेन्न । ( पूर्वत्राऽसिद्धे न स्थानिवदि ) त्यनेन स्थानिवद्भावनिषेधादव्यवधानेन श्चुत्वे निराबाधेन तत्सिद्धेः । न च (१) ( असिद्धं बहिरङ्गमन्तरङ्गे ) इतिपरिभाषयान्तरङ्गं श्चुत्वम्प्रति बहिरङ्गस्याल्लोपस्यासिद्धत्वबोधनाद्व्यवधानेन श्चुत्वाप्रसक्त्या दोषस्तदवस्थ एवेति वाच्यम् । यथोद्देशपक्षे श्चुत्वस्यान्तरङ्गपरिभाषाम्प्रत्यसिद्धत्वादन्तरङ्गरूपप्रतिपाद्याऽसत्त्वेन परिभाषाऽप्रवृत्त्याऽदोषात् । न च कार्यकालपक्षे परिभाषाया विधिशास्त्रप्रदेशे कार्यहेतुकाऽपकर्षादेतस्याः परिभाषायाः श्चुत्वशास्त्रप्रदेशस्थतयाऽन्तरङ्गशास्त्रस्य परिभाषाम्प्रत्यनसिद्धत्वात्पुनरुक्तदोषः स्थित एवेति वाच्यम् । एकतरपक्षयेण प्रयोगोपपत्तौ पक्षान्तराश्रयणेन दोष-

---

(१) इयं हि परिभाषा षष्ठाध्यायस्थ ( वाह ऊडि ) तिसूत्रस्थोठ्ग्रहणेन ज्ञापिता । तथाहि—ऊठोऽभावे सूत्रेण सम्प्रसारणमात्रस्यैव विधाने तस्य लघूपधगुणे (वृद्धिरेची)ति वृद्धौ विश्वौह इत्यादिसिद्धौ व्यर्थमूठ्ग्रहणम्परिभाषां ज्ञापयति । ज्ञापितायान्त्वस्यां जातस्य बहिरङ्गस्य सम्प्रसारणस्याऽन्तरङ्गगुणम्प्रति परिभाषयाऽसिद्धत्वबोधनादन्तरङ्गगुणाऽप्राप्त्या प्रयोगसिद्ध्यर्थमूठ्ग्रहणमावश्यकमिति भावः ।

द्वानस्य भाष्यकृता क्वाप्यनङ्गीकारात् । वस्तुतः कार्यकालेऽपि परिभाषाऽप्रवृत्तेः प्रागभिहितत्वाच्चेति भावः ।

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । अत्र सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् । अत्र सर्वशब्दस्य यथासम्भवमनेकार्थत्वात्तत्राप्येकस्मादनेकविभक्त्यसम्भवादनेकविभक्त्यर्थान्तर्भावाय षष्ठीतत्पुरुषसमासः कार्य इति भाष्याशयः । विधिशब्दस्य च भावसाधनत्वं कर्मसाधनत्वञ्च । भावस्य धात्वर्थरूपत्वात्तस्मिन्बुद्धिस्थे सति विधिशब्दस्य विधानाङ्ग.वसाधनमित्युक्तिरिति भावः । ननु विधिशब्दस्य भावकर्मोभयसाधनत्वेन क्व तस्य भावसाधनत्वं क्व कर्मसाधनत्वमिति चेन्न । स्वरादिविषये भावसाधनत्वस्य तुग्विषये कर्मसाधनत्वस्य च सत्त्वात् । कृतीत्येतत्सामर्थ्यात्तुक एव विशेषणमित्याह–कृति तुगिति । ( पूर्वत्राऽसिद्धमि )त्यनेनैव सिद्धेऽन्यनिवृत्तिफलकमिदमित्यत आह–नान्यत्रेति । अन्यनिवृत्तिफलकासिद्धविषयकविधित्वमेव नियमत्वम् । अत एव ( पञ्च पञ्च नखा भक्ष्या ) इत्यत्र भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते इत्युक्तं पस्पशायां भाष्ये । तदाह–इत्यसिद्धत्वादिति । अनेन शास्त्रेण प्रापकप्रमाणरागप्राप्तभक्षणस्य तदितरात्विषयत्वरूपसंकोचकल्पनम् । तेनान्येषां भक्षणाऽभावो गम्यते तद्भक्षणे प्रायश्चित्तं च गम्यते । न च शशकाद्यतिरिक्तपञ्चनखस्य भक्षणे प्रायश्चित्ते सिद्धेऽपि शशकभक्षणस्य शब्देन विधानात्तदभक्षणे प्रत्यवायापत्त्याऽवश्यानुष्ठेयत्वापत्तिः, अश्वरसनाग्रहणे मन्त्रोच्चारणस्येवेति वाच्यम् । प्रापकप्रमाणस्य नियतत्वे सर्वत्रावश्यानुष्ठेयत्वेन शशकादिभक्षणप्रापकरागरूपप्रमाणस्य त्वनियतत्वेन दोषदर्शनादिना रा-

गनिवृत्तेरदोषात् । पञ्च पञ्च नखा भक्ष्या इति विधिस्तु राग-प्राप्तभक्षणेऽभ्यनुज्ञामात्रं करोति न तु स्वयमेव विधत्ते । भक्ष-णस्य विधिप्रवृत्तेः प्रागेव रागप्राप्तत्वात् । अभ्यनुज्ञाविधिश्च स्वविषयस्य बलवदनिष्टाननुबन्धित्वमात्रबोधको न तु स्वविषये प्रवृत्तिसिद्धये तस्येष्टसाधनत्वबोधकोऽपीति न तस्य धर्मत्वं तथा च रागरहितानां तत्राप्रवृत्तावपि न तदननुष्ठानप्रयुक्तप्रत्यवाया-पत्तिस्तेषामिति बोध्यम् ।

सुब्विधेरुदाहरणम्—राजभिरित्यादि ।[1] अत्रैस्भावो न, सुब्विधिशब्देऽनेकविभक्त्यर्थान्तर्भावाद्राजभ्यां राजस्वित्या-दिसिद्धम् । सुब्विधिशब्देन च सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्य-कविधिर्गृह्यते । उद्देश्यत्वं चात्र स्थानित्व-निमित्तत्वान्यतरत्व-रूपम् निमित्तत्वञ्च यद्बुद्धिर्यत्कार्यप्रयोजिका तत्त्वम् । अत एव दण्डिष्वित्यत्र विधायकत्वसंशङ्कासङ्गतिः । तत्रादेशविधायकस्य ( आदेशप्रत्यययोरि ) त्यस्य प्रवृत्तौ प्रत्ययत्वावच्छिन्नस्य बु-द्धिर्निमित्तं प्रत्ययत्वञ्च नैतादृशमिति भावः । न च भिस्त्वस्य सुप्त्वव्याप्यत्वाभावेन तदवच्छिन्नोद्देश्यके ऐसादेशेऽपि निय-मानुपपत्तिरिति वाच्यम् । केवलभिस्त्वस्य सुप्त्वव्याप्यत्वाभा-वेऽपि निमित्ततावच्छेदकस्याङ्गसंज्ञाप्रयोजकत्वविशिष्टभिस्त्वस्य सुप्त्वव्याप्यतया तदवच्छिन्नोद्देश्यकस्यापि सङ्ग्रहसम्भवात् ।

स्वरविधेरुदाहरणम्—पञ्चार्ममिति ।( दिक्संख्ये सं-ज्ञायामि ) ति समासे नलोपे कृतेऽवर्णान्तपूर्वपदस्य जातत्वात् ( अमे चावर्णं द्व्यच् त्र्यजि ) ति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोप-स्यासिद्धत्वान्न भवति । संज्ञाविधेरुदाहरणम्—पञ्चेत्यत्र नलोपे कृतेऽपि षट्संज्ञाप्रवृत्ति नलोपस्यासिद्धत्वात् ( न षट्स्व-

ष्ट्रादिभ्य ) इति टाप् न भवति। अत्र षट्संज्ञामन्तरा लुकोऽप्राप्त्या नलोपस्यैवाप्राप्तिः स्यादतः प्रथमं षट्संज्ञाप्रवृत्तिर्वक्तव्या तामादाय यथोद्देशपक्षमाश्रित्य तत्प्रयोजनमन्यथासिद्धम् । न च पञ्चभिः सप्तभिरित्यत्र नलोपासिद्धत्वेन षट्त्वे ( ष्णान्ता षट् ) इति सूत्रप्रवृत्तिः प्रयोजनमिति वाच्यम् । स्वराविधावित्येव सिद्धेरिति केचित्तु-दण्डिदत्तौ दत्तदण्डिनावित्येव संज्ञाविधेरुदाहरणम् । अत्र नलोपस्यासिद्धत्वाद्घिसंज्ञा नास्तीति ( द्वन्द्वे घी ) तिपूर्वनिपातनियमो न भवतीत्याहुः । तेषामयमाशयः-दण्डिदत्तौ दत्तदण्डिनावित्यत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । इष्यते त्वनियमः । असिद्धत्वे तु अघित्वात्सिद्ध्यति । न च पूर्वनिपाते नलोपो नलोपे वा घित्वे पूर्वनिपात इत्ययुक्तम् । यस्य पूर्वपदत्वे घित्वं भावि तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः । न च घित्वे बहिरङ्गतया नलोपोऽसिद्ध इति वाच्यम् । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादिति ।

तुक्शब्दस्य पृथङ्निमित्तत्वे वृत्रहच्छत्रम् भ्रूणहच्छायेत्यत्र तुक् न स्यादिति कृति तुगिति । नचैवं कृतीत्युपादानस्य साफल्यात्सामर्थ्यात्तुक एव विशेषणमित्यभिधानमसमञ्जसमिति वाच्यम् । सामर्थ्यादित्यस्य स्वार्थान्वययोग्यतावच्छेदकधर्मवत्त्वादित्यर्थात् कृतितुग्विधेरुदाहरणम् । कृतीति किम् । वृत्रहच्छत्रम् । कृति तुग्ग्रहणादेव (१)परिभाषायां संज्ञाकृतस्य बहिर्भूतनिमित्तकसंज्ञाकृतस्य च बहिरङ्गत्वस्य नाश्रयणम् । अन्यथा वृत्रहभिरित्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोऽसिद्धः स्यादिति । यदिसंज्ञाकृतबहिरङ्गत्वस्याप्याश्रयणं

(१) अन्तरङ्गपरिभाषायामित्यर्थः ।

स्यात्तदाऽन्तरङ्गे तुकि कर्तव्ये पदसंज्ञासापेक्षनलोपस्यासिद्धत्वा- त्तुगभावे सिद्धे कृतितुग्ग्रहणस्य वैयर्थ्यं स्यात् । नन्वल्पापेक्षम- न्तरङ्गम्बह्वपेक्षं वहिरङ्गमित्याश्रित्याधिकायाः संज्ञाया आश्र- यणेन वहिरङ्गत्वमिति न ब्रूमः । किन्तु वहिर्भूतभिन्निमित्तकप- दत्वनिमित्तकत्वेन नलोपस्य वहिरङ्गत्वमिति ब्रूम इति भावः । अवयवावयवस्य समुदायावयवत्वेन वृत्रहभिरित्यत्र तुकि सति भिस्सन्निपातविघातस्य स्पष्टजायमानत्वात् ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) तिपरिभाषया तत्र तुकं व्यावर्त्य प्रत्याख्यातं तुग्ग्रहणं भाष्ये । वस्तुतस्तु—नान्तभिस्सन्निपातनि- मित्तकस्य नलोपस्य तादृशसन्निपातविघातकतुकोऽनिमित्तत्व- मिति भाष्याशयः। न च यत्रान्तर्वर्त्तिविभक्त्याश्रितो नलोपस्तत्रैव वृत्रहधनमित्यादौ तुको व्यावृत्तये तुग्ग्रहणमस्त्विति वाच्यम् । सन्निपातनिमित्तकनलोपविषयाणां वृत्रहधनमित्यादीनामनभि- धानादिति भावः । तुगभावे कृतीत्यपि व्यर्थमेवेति बोध्यम् । न च ( सन्निपात ) परिभाषया तुग्मात्रव्यावृत्तौ प्राप्तायां नि- यमार्थं कृतीति कृति तुगेव न अन्यस्तु भवत्येवेति वाच्यम् । वृत्रहच्छत्रमित्यत्र नलोपस्य सान्निपातलक्षणत्वाऽभावात् ॥

केचित्तु—( द्वन्द्वे घी ) तिसूत्रस्थघिशब्दस्य पूर्वोक्तान्यो- न्याश्रयस्य परिहाराय भाविघित्वाश्रये लक्षणामाश्रित्यानियम- स्य दण्डिदत्तौ दत्तदण्डिनावित्यत्र सिद्ध्यर्थं प्रकृतसूत्रे संज्ञाग्रह- णकरणापेक्षया द्वन्द्वसंज्ञाप्रवृत्तिकाले यस्य घित्वं तत्पूर्वं प्रयोज्य- मित्येवार्थोऽस्तु । प्रकृते द्वन्द्वसंज्ञाप्रवृत्तिकाले नलोपस्यासिद्धत्वा- दनियमः सिद्ध एवेति प्रकृतसूत्रे संज्ञाग्रहणन्न कर्तव्यमिति ला- घवम् । किञ्च यदि ( द्वन्द्वे घी ) तिसूत्रस्थघिपदस्य भाविघित्वा-

श्रये लक्षणाऽऽश्रीयते तदा भानुच्छत्रे छत्रभानू इत्यनियमः प्राप्नोति । भानुशब्दस्य पूर्वपदत्वे तुका भवितव्यमिति भाविघित्वस्याभावात् द्वन्द्वसंज्ञाप्रवृत्तिकालिकघित्वस्य पूर्वनिपातप्रयोजकत्वं तु नियमः सिद्ध्यतीत्याहुः । तत्रेदं चिन्त्यम् । द्वन्द्वसंज्ञाप्रवृत्तिकालिकघित्वं पूर्वनिपातप्रयोजकमाश्रित्य पूर्वोक्तानियमसिद्धिमाश्रित्य प्रकृतसूत्रस्थसंज्ञाग्रहणकरणोपपादनमशक्यम् । ग्रामाणि देवदत्तौ वातप्रमिवृषाविसादौ पूर्वनिपातो यदिगन्तस्य स्यात्तदा ( इको ह्रस्वोऽङ्यो गालवस्ये ) तिसूत्रेण ह्रस्वे सति घिसंज्ञा स्यात् ततश्चेगन्तस्यैव पूर्वनिपात इत्येवान्नियमः सिद्ध्यति ह्रस्वत्वस्य बहिरङ्गासिद्धत्वं तु न बहिरङ्गपरिभाषाया अनित्यत्वात् । प्रकृते चोक्तपरिभाषाया अप्रवृत्तौ दत्तदण्डिनौ दण्डिदत्ताविति भाष्यमेव मानम् । एवञ्च घिपदस्य भावि घित्वाश्रये लक्षणाया आवश्यकत्वे दण्डिदत्तौ दत्तदण्डिनावित्यादावानियमसिद्ध्यर्थम्प्रकृतसूत्रे संज्ञाग्रहणस्येत्पदयोजनं दत्तम् । न च घिपदस्य भाविघित्वाश्रये लक्षणा चेत्तदा ( द्वन्द्वे घी ) तिसूत्रस्य हरिहरावित्यत्र हरिशब्दस्य पूर्वनिपातसिद्धिः प्रयोजनत्वेनोक्ता न सङ्गच्छेत । हरिशब्दस्य घिसंज्ञायाम्पूर्वनिपातस्याप्रयोजकत्वात् । ( द्वन्द्वे घी ) तिसूत्रस्थघिपदस्य तन्त्रेण शक्यलक्ष्योभयबोधजनकत्वात् । यदि तु ( लक्षणहेत्वोरि ) तिसूत्रस्थहेतुशब्दस्य परनिपातकरणेन पूर्वनिपातप्रकरणमनित्यमिति विभाव्यते तदा दण्डिदत्तौ दत्तदण्डिनावित्याद्यनायासेन निर्वहतीति प्रकृतसूत्रस्थं संज्ञाग्रहणमकर्तुं शक्यमिति दिक् ॥

नचाल्लोपस्य स्थानिवत्त्वमिति । ननु प्रतिदिवन्शब्दस्य द्वितीयाबहुवचने शसि ( लशक्वतद्धिते इति शस्येत्सं-

ज्ञायाम् । ( अल्लोऽपोऽनः ) इति सूत्रेणाऽनोऽकारलोपे प्रतिदिव्न् असिति स्थितौ ( अचः परस्मिन्पूर्वविधावि )त्यत्र पूर्वविधाविति पदे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासस्याश्रयणादल्लोपस्य स्थानिवत्त्वेनाऽकारस्याऽनुपधत्वेन ( हलि चे )ति दीर्घाऽप्रसङ्गेन प्रतिदीव्न इतीष्टरूपानुपपत्तिरिति चेन्न । ( न पदान्तद्विर्वचने )तिसूत्रेण दीर्घविधेः कर्तव्यत्वे स्थानिवद्भावस्य प्रतिषेधाद्दीर्घे सतीष्टरूपोपपत्तेः । न च ( असिद्धं बहिरङ्गमन्तरङ्गे ) इति परिभाषयाऽन्तरङ्गस्य दीर्घविधे र्विधीयमानत्वेऽल्लोपरूपस्य बहिरङ्गस्याऽसिद्धत्वप्रतिपादनात्प्रागुक्तदोषस्तिष्ठत्येवेति वाच्यम् । ( यथोद्देशं संज्ञापरिभाषमि )त्येतत्परिभाषाबोधिते यथोद्देशपक्षे षष्ठाध्यायस्थसूत्रज्ञापकज्ञापितपरिभाषाया ( असिद्धं बहिरङ्गमन्तरङ्गे ) इत्येतत्स्वरूपाया दृष्ट्या दीर्घविधेस्त्रैपादिकस्याऽसिद्धत्वादन्तरङ्गाऽभावेन प्रतिपाद्याभावात्परिभाषाप्रवृत्तेर्वक्तुमशक्यत्वेनाऽदोषादित्यलम् ॥

योगविभागसामर्थ्यादित्यादि । इत्थमस्याः पंक्तेरभिप्रायः । वृत्रहन्शब्दस्य द्वितीयाबहुवचने शसि शस्येत्वोत्तरम् ( अल्लोपोऽनः ) इत्यल्लोपे हस्य कुत्वे वृत्रघ्न इत्यत्र ( अनन्तरस्य विधि र्वा भवति प्रतिषेधो वे )तिन्यायेन ( अत्पूर्वस्ये )ति सूत्रं ( हन्तेरि )त्येतत्सूत्रस्य बाधकमिति निर्णयोत्तरं ( एकाजुत्तरपदे णः ) इत्येतत्सूत्रप्राप्तस्य णत्वस्याऽव्यावृत्त्याऽनेन णत्वं स्यादेवेति शङ्काग्रन्थस्य समाधानरूपोऽयं ग्रन्थः । तथा च पृथक्योगविधानापेक्षयैकयोगविधाने लाघवसत्त्वात् ( हन्तेरत्पूर्वस्ये) त्येकयोगेनैवेष्टणत्वसिद्धौ योगद्वयविधानस्य वैयर्थ्येन सामर्थ्यादनन्तरस्येतिन्यायबाधपूर्वक–प्रवृत्तियोग्यणत्वविधायकशास्त्रमात्र-

बाधनान्नात्र णत्वं भवतीति। नचाल्लोपे ह्यत्पूर्वत्राऽसत्त्वान्निषेधाभिधानन्नैति सङ्गतिमिति वाच्यम् । (अचः परस्मिन्पूर्वविधावि) ति सूत्रे पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासाङ्गीकारेणाऽल्लोपस्य स्थानिवद्भावेन निषेधाभिधानस्य सङ्गतत्वात्। न च निषेधसिद्ध्यर्थमल्लोपस्य स्थानिवत्त्वेऽपि तेनैवाऽकारेण व्यवधानाद्धकारस्य नकापरकत्वाभावेन कुत्वमेव न स्यादिति वाच्यम् । नकारपरकहकारस्य कुत्वविधानसामर्थ्यादल्लोपस्य स्थानिवद्भावाभावज्ञापनादिति ।

ननु वृत्रघ्न इत्यत्र भसंज्ञोत्तरमल्लोपस्य जायमानत्वेन तस्याल्विधित्वादनल्विधाविति निषेधेन स्थानिवद्भावाऽभावेनोत्तरपदस्यानच्कतया न ( एकाजुत्तरपदे ण ) इति नित्यणत्वविधेः प्राप्तिः किन्तु वैकल्पिकणत्वविधेः ( प्रातिपदिकान्तनुम्विभक्तिषु चे ) त्यस्यैव। तथा च णत्वघटितं णत्वाघटितमितिरूपद्वयमिष्टमेवेति माधवमतं तत्खण्डयितुमुपक्रमते-यत्तु वृत्रघ्न इत्यादौ णत्वं माधवेनोक्तं तद्भाष्यवार्त्तिकविरुद्धमिति । ( कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः ) किम्प्रयोजनं वृत्रघ्नः स्रुघ्नः माघानि ( हन्तेरत्पूर्वस्ये ) त्यत्पूर्वग्रहणं न कर्तव्यं भवतीति भाष्योक्त्या णत्वाभाव एव भाष्यवार्तिकयोस्तात्पर्यावधारणन्नतु णणत्वे, सति चास्मिन् ताभ्यामस्य स्पष्टविरोधादेतन्मतं हेयमेव । नच ( अत्पूर्वस्ये ) ति सूत्रस्य सद्भावे प्रघनाघन इत्यत्र णत्वं सिद्ध्यति वार्त्तिकेन गतार्थत्वात्सूत्राऽसत्त्वे नोक्तस्थले णत्वसिद्धिरिति वाच्यम् । अत्पूर्वग्रहणस्य हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणत्वेन दोषाभावात्। अत एव योगविभागमूलकवार्त्तिकमत्याख्यानेऽपि न कश्चित्फलभेद इत्यास्तां विस्तरः ॥

उगिदचां सर्वनामस्थानेऽधातोः। सूत्रे प्रत्यय इत्या- दिमूलकव्याख्यानादचामित्यञ्चते ग्रहणम्। अकारलोपाकरण- पूर्वकनलोपकरणस्य विवक्षार्थत्वान्नलोपिनो लाभः। नन्वचा- मित्यस्यैतादृशविलक्षणार्थबोधकत्वान्नियमार्थत्वाभिधानमसङ्गतमि- ति चेन्न। भाष्यकृतैव तस्य नियमार्थत्वाभिधानात्। तथा च भाष्यप्रामाण्यादचामित्यस्याऽऽवृत्त्याऽर्थद्वयम्। तत्रैको मूल ए- वोक्तो द्वितीयश्च अञ्चतेश्चेन्नलोपिन एवेत्येतद्रूपः। मानञ्चात्रा- चामिति निर्देश एव। (नपुंसकस्ये) तिसूत्राज्झल्ग्रहणापकर्ष- णादचामित्येतत्साहचर्याद्वा व्याख्यानादत्रोगितो झलन्तस्यैव ग्र- हणम्। तेन शमी शमिनावित्यादौ न नुमोऽतिप्रसङ्गः। स्पष्टञ्चै- तत् (युवोरनाकावि) ति सूत्रे भाष्ये। तत्र हि युवोरनाका- विति चेद्धातुप्रतिषेधः। युत्वा। युतवान्। इत्याशङ्कायामनुना- सिकपरयोर्युवो ग्रहणमिति समाहितम्। ततो यद्यनुनासिकपर- यो ग्रहणन्तदेत्संज्ञा प्राप्नोतीत्याशंक्य प्राह तत्र को दोषः। नु- मागमप्रसङ्गः। तत्प्रतिषेधो वक्तव्यः। अन्यथा नन्दनः कारक इत्यत्र नुम्प्राप्नोति। नुम्विधौ झल्ग्रहणम्। (इदितो नुम् धा- तोरि) त्यतो नुमनुवर्तते तदाह—अधातोरुगित इत्यादि। अधातोरित्यस्याऽधातुभूतपूर्वस्यापि नुमर्थमिति वक्ष्यमाणग्रन्थस्य सङ्गतिः। अञ्चतिग्रहणञ्चात्र नियमार्थम्। नियमाकारश्च, धा- तोश्चेदुगित्कार्यन्तर्ह्यञ्चतेरेवेति। एवञ्च गोमानिवाचरति गोमा- नित्यादौ सम्प्रति धातुत्वेऽपि नुमर्थमधातुग्रहणस्य विध्यर्थत्वम् एतच्च मूल एव स्फुटम्।

ननु औपदेशिकधातोश्चेदुगित्कार्यन्तर्ह्यञ्चतेरेवेत्यञ्चतिग्रहण- स्य व्याख्यानाद्गोमानित्यादौ नुम उपपत्तावधातुग्रहणमकिञ्चि-

त्करमेवेति चेदत्र नव्याः—नुम्मात्रविषयकोऽयमञ्चतिग्रहणकृत-नियमः । धातोश्चेदुगित्कार्यन्तर्ह्यञ्चतेरेवेति । तेन नोखास्रदित्यत्र नुमाद्यतिप्रसङ्गः प्रागुक्तनियमस्याभ्युपगन्तव्यत्वे तु उखास्रदित्यादावतिप्रसङ्गाऽभावेऽपि गोमानित्यादौ ङीपोऽतिप्रसङ्गो दुर्वारः । आचाराक्विबन्तस्यौपदेशिकधातुत्वाऽभावेन नियमेनाऽव्यावृत्तेः । नचेष्टापत्तिरेव गोमानित्यादौ ङीपोऽतिप्रसक्तेरिति वाच्यम् । अधातुग्रहणादेव सूत्रकृन्मये तत्र ङीपोऽनिष्टत्वानुमानात् । ननु ( नलोपिनोऽञ्चतेरेव नुमागमः स्यान्न तु पूजार्थस्य नकारवतोऽञ्चतेरित्येवमर्थम् ) अचामित्यस्य सार्थक्येन सामान्यनियमार्थत्वमस्य न स्यादिति चेन्न । अचामित्यत्र नलोपाविवक्षया तस्य सामान्यनियमार्थत्वाक्षतेरित्यलम् ।

इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं तु न भवति बहुलग्रहणादिति । ननु मघवन्शब्दस्य प्रथमैकवचने सौ ( मघवा बहुलमि )त्यनेन नकारस्थानिके त्रादेशे जाते ( उगिदचां सर्वनामस्थानेऽधातोरि )ति नुमागमे ( हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलि )तिसूत्रेण सुलोपे ( संयोगान्तस्ये )ति सूत्रेण तलोपे मघवन्निति स्थितौ दीर्घविधायकशास्त्रदृष्ट्या संयोगान्तलोपस्याऽसिद्धत्वान्नान्तत्वाऽभावेन दीर्घो न स्यादिति चेन्न । ( मघवा बहुलमि )त्येतत्सूत्रस्थबहुलग्रहणादीर्घस्य कर्तव्यत्वे संयोगान्तलोपस्याऽसिद्धत्वाऽभावज्ञापनेनादोषात् । न च बहुलग्रहणस्यानेकार्थत्वाद्विपरीतनियमस्यापि सम्भवेन मूलोक्तनियम एवेत्यत्र किं विनिगमकमिति वाच्यम् । ( श्वन्नुक्षन्नि )त्यौणादिकसूत्रेण तत्तन्निपातनादिद्वारा रूपद्वयोपपत्तिपूर्वकैतत्सूत्रव्याख्यानस्यैव तत्र विनिगमकत्वात् । तथा हि

( श्वन्नुक्षन्नि )ति सूत्रेण महधातुतः कन्प्रत्ययस्य अवुगागमस्य घकारस्य च निपातनात् मघवा मघवानावित्यादि, धनार्थका-न्मघशब्दान्मतुप्प्रत्यये मकारस्य वकारदेशे ( अत्वसन्तस्य चा-धातोरि )त्यनेन दीर्घे मघवान् मघवन्तावित्यादि च द्विविधरू-पमुपपाद्य सूत्रमिदं ( मघवा बहुलमि )ति प्रत्याख्यातवान् कैय-टः। तथा च दीर्घविधौ संयोगान्तलोपस्यासिद्धत्वाभावे बहुल-ग्रहणस्याऽज्ञापकत्वे मघवन्नित्यारम्भपक्षे, मघवानिति प्रत्याख्या-नपक्षे च रूपस्य जायमानत्वेन फलभेदस्य स्पष्टतया प्रत्याख्या-नमसङ्गतं स्यात्। आरम्भप्रत्याख्यानयोः फलैक्ये सत्येव प्र-त्याख्यानं युक्तम् ( फलैक्ये प्रत्याख्यानं सम्भवति न तु फल-भेदे ) इति भाष्यात्। एवं च फलभेदाभावसाधिकैव बहुलग्र-हणेन कल्पना कर्तव्या। अत एव—

अर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तत्।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्॥

इति श्लोकवार्त्तिकसङ्गतिः। एतेन छान्दसोऽयं मघवन् शब्दो न तु लौकिक इत्यवधेयम्। मूलोक्तायां बहुलग्रहणज्ञापक-कल्पितकल्पनायां कविप्रयोगात्मकं प्रमाणान्तरं दर्शयति—

हविर्यक्षिति निश्शङ्को मखेषु मघवानसौ।

इति। असौ मघवानिन्द्रो मखेषु यज्ञेषु निश्शङ्कः शङ्कार-हितः सन् हविर्होमीयद्रव्यमाज्यादिकं यक्षिति भक्षयतीत्यर्थः।

अन्नन्तानां किम्। मघवतः। मघवतेति। ननु सू-त्रेऽन्नन्तानामित्यस्याभावे मघवत इत्यत्र तान्तस्यापि सम्प्रसार-णापत्तिस्तत्सत्त्वे तु नोक्तापत्तिः। न चात्र नस्य तादेशेऽपि

( एकदेशविकृतमनन्यवदि )तिन्यायेनान्नन्तत्वसत्त्वात्कृतेऽप्यन्नन्तानां ग्रहणे दोषस्य तादवस्थ्यमेवेति वाच्यम् । ( अल्लोपोऽन ) इत्यतोऽन इत्यपकृष्य तत्र नकारं प्रश्लिष्य नान्तान्नन्तानामित्यर्थे श्रूयमाणनकारान्तस्यैव सम्प्रसारणविधानादिहाऽतथात्वेनाऽदोषात् । वार्त्तिककृन्मये च ( श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमि )तिवार्त्तिकेनैवोक्तदोषव्यावृत्तेः । नचोक्तरीत्या सम्प्रसारणापत्तेः परिहारेऽपि तत्राल्लोपस्तु स्यादेवेति वाच्यम् । भाष्यकारेण ( अल्लोपोऽन ) इत्यत्र प्रागुक्तवार्त्तिकमनुवर्त्त्य श्रूयमाणनान्तस्यैवानोऽल्लोपविधानात् । स्पष्टश्चैतत् ( ऋलृक् ) सूत्रे भाष्ये । अत एव बहुधीवरी राजकीयमित्यादौ ( वनो र च ) ( राज्ञः क चे )ति सूत्रद्वयेन कृते आदेशे नान्तत्वाभावादल्लोपाऽभावः ।

परे तु—अन इत्यत्र नकारप्रश्लेषे मानाभावः । न च नकारप्रश्लेषाभावे स्थानिवद्भावेन नान्तत्वाश्रयणादल्लोपो दुर्वारः स्यादिति वाच्यम् । ( अलोऽन्त्यस्ये ) ति परिभाषयाऽनः स्थानित्वाऽभावात् ( स्थानिवत् ) सूत्रेणाऽन्नन्तत्वालाभात् ।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

इत्यनेनापि मघवन्शब्दस्यैव धीवन्शब्दस्यैव च स्थानित्वबोधनादनः स्थानित्वबोधनाभावाच्चाल्लोपाऽप्राप्तेः । न च ( एकदेशविकृतमनन्यवदि )ति न्यायेन तान्तत्वेऽपि नान्तबुद्ध्याऽल्लोपः स्यादिति वाच्यम् । अर्द्धविकारेऽर्द्धाधिकविकारे चैकदेशविकृतन्यायस्य प्रवृत्त्यभ्युपगन्तव्यतया प्रकृतेऽर्द्धविकारे प्रत्य-

भिज्ञाऽभावादुक्तन्यायप्रवृत्तेर्वक्तुमशक्यत्वात् । (१)ध्वनितञ्चैतत् ( श्वयुवमघोनामतद्धिते ) इति सूत्रे भाष्ये इत्याहुः ।

इति यकारस्य नेत्वमिति । ननु ( न सम्प्रसारणे सम्प्रसारणमि )ति सूत्रे ( ह्वः सम्प्रसारणमि )ति सूत्रात्सम्प्रसारणपदानुवर्तनादेव तन्निषेधसिद्धावत्र सूत्रे सम्प्रसारणग्रहणम्व्यर्थमिति चेन्न । तस्य सामर्थ्यात्सम्प्रसारणमात्रनिषेधकत्वेन सार्थक्यात् । तथा च दूरस्थस्यापि ( श्वयुवमघोनामि )त्यस्य ( व्यथो लिटी )त्यस्य चानेन निषेधसिद्धिः । नच ( न सम्प्रसारणे सम्प्रसारणमित्यस्मात्सूत्रात्सम्प्रसारणपदस्य ( व्यथो लिटी )ति सूत्रेऽनुवर्तनेन व्यथिव्यधिप्रभृतिधातुषु चारितार्थ्यात् प्रकृते ( यून ) इत्यत्र प्राक् कृतस्य सवर्णदीर्घरूपैकादेशस्य ( अचः परस्मिन्पूर्वविधावि )त्यनेन स्थानिवद्भावादुकारेण व्यवायात्सम्प्रसारणपरकत्वाभावेन निषेधो न स्यादिति वाच्यम् । व्यथोऽभ्यासस्य सम्प्रसारणं स्यान्न तु यस्येत्यर्थकेन ( व्यथो लिटि न यः ) इति न्यासेनैव निषेधसिद्धौ ( न सम्प्रसारण ) इत्यत्रत्यसम्प्रसारणग्रहणस्य यून इत्यत्र सम्प्रसारणनिषेधकत्वेनैव चरितार्थत्वस्याभिधीयमानत्वाद्व्यवधानेऽप्येतन्निषेधप्रवृत्तेरौचित्यात् । ( यूनस्तिरि )तिनिर्देशाच्च । न च ( कार्यकालं संज्ञापरिभाषमि )ति परिभाषाबोधितकार्यकालपक्षे ( श्वयुवमघोनामतद्धिते ) इति सूत्रे ( इग्यणः सम्प्रसारणमि ) तिसू-

---

(१) तत्र हि ( श्वादीनां सम्प्रसारणे नकारग्रहणमनकारान्तप्रतिषेधार्थमि ) तिवार्तिकप्रत्याख्यानाय ( श्वयुवे )तिसूत्रानन्तरम् ( अल्लोपोऽन ) इत्यत्राल्लोप इति विभज्याऽन इत्युक्तम् । उक्तव्याख्यानस्याऽनादरेऽन इत्यस्योभयशेषत्वेऽपि दोषस्य तादवस्थ्यात्तत्कथनेनैवं व्याख्यानं ध्वनितमिति तदाशयः ।

न्नस्य समुपस्थित्या तेन सहास्य पदैकवाक्यतयाऽन्वयात् भसंज्ञानिमित्तस्य यणाऽन्वयेन यकाराद्यजादिप्रत्ययावधिस्वाद्यसर्वनामस्थानपरकाऽव्यवहितपूर्वत्वविशिष्टस्य यणः सम्प्रसारणमित्यर्थे ( येन नाव्यवधानं तेन व्यवहितेऽपी )ति न्यायेन पूर्वस्य सम्प्रसारणाऽप्राप्त्या व्यर्थमेव सूत्रमिदमिति वाच्यम् । संज्ञाशास्त्राणां कार्यकालपक्षेऽपि वाक्यभेदेनैव सम्बन्धस्याभिधानात्सम्प्रसारणविधायकेषु यणाऽभावान्निमित्तेन सह यणाऽन्वयाऽभावेनाऽदोषात् । एवन्निषेधशास्त्रस्याऽप्युक्तार्थे ज्ञापकत्वमवगन्तव्यमिति भावः ॥

ननु युवन्शब्दस्य द्वितीयाबहुवचने शसि यून इत्यत्र सकृत्प्रवृत्त्यैव यकारवकारोभयस्थाने सम्प्रसारणे जाते सम्प्रसारणस्य निषेधविधायकं सूत्रं व्यर्थम् । किञ्चोकारस्य कृते दीर्घे तस्याल्विधित्वात् ( अनल्विधावि ) तिनिषेधप्रवृत्त्या स्थानिवद्भावाऽभावेन सम्प्रसारणकत्वाऽभावान्निषेधशास्त्रस्य प्राप्तियोग्यतैव नास्ति । किञ्च ( लक्ष्ये लक्षणं सकृदेव प्रवर्तते ) इति न्यायेन वकारस्य सम्प्रसारणविधानाच्चरितार्थस्य ( श्वयुवमघोनामतद्धिते ) इति सूत्रस्य पुनरप्राप्तिबोधनाद्व्यर्थमेव सर्वथा निषेधमिति जायमानं पूर्वपक्षं निराकर्तुमाह—अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणमिति । ( न सम्प्रसारणे सम्प्रसारणमि ) ति निषेधशास्त्रात्मकज्ञापकमहिम्नैव दीर्घस्यापि स्थानिवद्भावेन निषेधसौलभ्यम् । किञ्चैतदारम्भसामर्थ्यात् ( अचः परस्मिन्पूर्वविधावि ) ति स्थानिवद्भावान्न व्यवधानशङ्काऽवसरः । न च ( लक्ष्ये लक्षणं सकृदेव प्रवर्तते ) इति न्यायेन परस्य यणः सम्प्रसारणे जाते पूर्वस्य यणः सम्प्रसारणाऽप्राप्त्या निष्फलत्वमेव निषेधशास्त्रस्येति वाच्यम् । कार्या-

श्रयवर्णभेदेन लक्ष्यभेदेनोक्तन्यायाऽप्रवृत्तेः। अयम्भावः, यं ध-र्ममुद्देश्यतावच्छेदकं बुद्धिस्थं विधाय यत्कार्यं प्रथमम्प्रवृत्तं तद्ध-र्मावच्छिन्ननिमित्तकं तदेव कार्यन्तस्मिन्लक्ष्ये पुन र्न प्रवर्तते इ-त्युक्तन्यायस्यार्थः। तथा च प्रकृते युवन्शब्दावयवत्वं बुद्धिस्थं विधाय सम्प्रसारणे कृते पुनर्यत्वावच्छिन्ननिमित्तकं सम्प्रसारण-म्प्राप्नोत्येव। एतद्व्याख्यानेन कार्याश्रयवर्णभेदेन लक्ष्यभेदाश्रय-णे उदवोढामित्यत्र ( सहिवहोरोदि ) ति सूत्रेणोकारे कृते पुन-( र्लक्ष्ये लक्षणस्ये ) ति न्यायेन वृद्धिवारणपरभाष्यविरोधः। अत्रापि पूर्वमकारस्य पश्चादोकारस्येति वर्णभेदस्य सत्त्वादि-ति निरस्तम्। हलन्तधात्ववयवात्वस्य प्राथमिकवृत्तिनिमित्तता-वच्छेदकतया तद्धर्मावच्छिन्ननिमित्तिका वृद्धिर्नेत्यस्य सुवचत्वादि-ति दिक्॥

अर्वणस्त्रसावनञः। अत्रानुवृत्तम् (अङ्गस्ये) तिपदमर्वणा विशेष्यते, अनञ इत्यनेनापि तदाह—नञा रहितस्यार्वन्नित्य-स्येत्यादि। सूत्रेऽसाविति पर्युदासे सुभिन्न—सुसदृश विभक्तौ परत एव त्रादेशविधानलाभादर्वतीत्यादौ विभक्तेरभावात्त्रा-देशो न स्यादित्याशयेनाह—न तु साविति। नात्र पर्युदासः किन्तु प्रसज्यप्रतिषेध स्तथा च केवलसावेव न त्रादेशोऽन्यस्मि-न् यस्मिन् कस्मिन्नपि परे भवतीति न काप्यनुपपत्तिः। न-चैवम् (१)अर्वप्रिय इत्यादौ त्रादेशापत्तिरिति वाच्यम्। अङ्गे-न स्वनिमित्तस्य प्रत्ययस्याक्षेपेण तस्य लुका लुप्तत्वेन ( न लु-मताऽङ्गस्ये ) तिनिषेधेन प्रत्ययलक्षणाऽभावात्। एतेन ( वाहैरलुप्यत सहस्रदृगर्वगर्व ) इति श्रीहर्षप्रयोगो व्याख्यातः।

---

(१) नात्र वहुव्रीहिः किन्तु षष्ठीतत्पुरुषः। वहुव्रीहिस्वीकारे तु सौ सुतरां त्रादेशाप्राप्त्या दोषदानमसङ्गतं स्यादिति भावः।

ननु ऋधातो विचि गुणे च कृते निष्पन्नादरित्यस्मान्मतुपि अर्वन्तावित्यादेः, ( छन्दसीवनिपौ च )ति सूत्रेण वनिपि वेदेऽर्वेत्यस्य, ( स्नामदिपद्यर्ती )त्यादिसूत्रेण वनिपि लोकेऽप्यर्वेत्यस्य च सिद्धौ ।

वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।

इत्यमरकोशादस्य रूढिशब्दत्वाच्चार्थभेदाभावात्सूत्रमिदं व्यर्थमिति चेन्न । नान्ततान्तयोः सर्वत्र प्रयोगप्राप्तौ सौ परे नञुपपदे च नान्तस्य प्रयोगायान्यत्र तदभावाय चेति व्यवस्थार्थमस्यावश्यकत्वात् । केचित्तु—

अर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥

इतिवार्त्तिकादर्वन्मघवच्छब्दयोरपि भाषायामसाधुत्वमेवेति तन्न- वार्त्तिकस्य वनिवन्तमध्योदात्तपरत्वात् छन्दस्येव च वनिब्विधानात् । अत एव—

बाहैरलुप्यत सहस्रदृगर्वगर्वः ।

इति श्रीहर्षप्रयोगसङ्गतिः ।

आ आदिति प्रश्लेषाच्छुद्धाया एव व्यक्तेर्विधानान्नानुनासिक इति । ननु ( पथिमथ्यृभुक्षामादि ) त्यत्राऽऽदिति निरनुनासिकोच्चारणेऽपि ( तपरस्तत्कालस्ये ) त्यस्याऽणूभिन्न इव विधीयमानेऽपि प्रवृत्तौ नकारस्थानिक आदित्यादेशो ह्यनुनासिकत्वविशिष्टः स्यात् । न च ( तपरस्तत्कालस्ये ) सूत्र ( अणुदित्सवर्णस्य चाऽप्रत्ययः ) इत्यतोऽप्रत्ययग्रहणसम्बन्धादविधीयमान एव प्रवृत्तेरौचित्येन विधीयमाने प्रवृत्त्यभावान्नोक्तदोष सम्भव इति वाच्यम् । तत्र प्रत्ययग्रहणसम्बन्धे प्रामा-

ण्याभावादिति पूर्वपक्षोत्थाने तन्निवर्तकोऽयं मूलग्रन्थः। नचा आदिति प्रश्लिष्टाकारस्य द्वित्वविशिष्टत्वेनाऽनेकाल्त्वात्सर्वादेशः स्यादिति वाच्यम्। द्वयोराकारयोर्विशेष्यविशेषणभावेनान्वयेन सर्वादेशत्वाभावात्। एवञ्च पथिमथ्यृभुक्षामादि) त्यत्र (स्थानिवदादेशोऽनल्विधावि) ति सूत्रादादेशपदमाकृष्य सम्बध्यमानमादेशत्वपर्याप्त्याधिकरणपरम्प्रकृते चादेशत्वपर्याप्तिरेकस्मिन्नेवाऽऽकारेऽपरत्र त्वाकरे आदेशतावच्छेदकत्वमिति न सर्वादेशत्वशङ्कनावसरः। न च नकारस्थाने शुद्धाकारविधानार्थमा आदिति प्रश्लेषेऽपि नकारस्यानुनासिकस्याऽऽन्तरतम्यादनुनासिक एवाकारः स्यात् प्रश्लेषफलं तु सर्वाकार इत्येवेति वाच्यम्। अनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कर्तव्ये तदनुच्चारणाच्छुद्धाकारव्यक्तिविधानस्यैव (१)भाष्यकृतोक्तत्वात्।

केचित्तु–सर्वं ह्येतत् (गुणा भेदका) इति पक्षे बोध्यम्। (वृद्धिरादैच्) सूत्रभाष्यसम्मते सिद्धान्तभूते (गुणा अभेदका) इति पक्षे जातिपक्षे च पक्षद्वयप्राप्तमपि सवर्णग्रहणमप्रत्ययग्रहणेन निषिध्यते गुणानाम्भेदकत्वमितिपक्षाभिप्रायायकत्वादेव तपरस्तत्कालस्येति प्राप्नोतीत्युक्तम्भाष्ये। नचाऽप्रत्य इति वा-

---

(१) तदुक्तमष्टन आविभक्ताविति सूत्रे भाष्ये, अष्टनजनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकः प्राप्नोति। अष्टाभिः। अष्टाभ्यः। जातः जातवान्। पन्थाः। मन्थाः। सिद्धमनण्त्वात्। अण् सवर्णान् गृहणातीत्युच्यते। नचाऽकारोऽण्। उच्चारणसामर्थ्याद्वा। अथ वा शुद्धोच्चारणाद्भविष्यतीति। ततस्तपरस्तत्कालस्येति प्राप्नोतीति शङ्कायामप्युच्चारणसामर्थ्यादित्येवोक्तमिति।

क्येऽणूग्रहणसम्बन्धादणुदित्सूत्रप्राप्तसवर्णग्रहणस्यैव निषेधः स्यादिति वाच्यम् । तत्राणूग्रहणसम्बन्धस्याभावेन सर्वस्यैव प्राप्तसवर्णग्रहणस्य निषेधकत्वात् । अणूग्रहणस्याऽप्रत्ययं इति वाक्येऽसम्बन्धादेव(१)( भाव्यमानेन सवर्णानां ग्रहणं ने ) त्येव पठितं भाष्ये न तु ( भाव्यमानेन अणा सवर्णग्रहणन्नेति )। एतदभिप्रायेणैव परिभाषयानया ( अणुदित्सवर्णस्य चाप्रत्यय ) इत्यत्रत्याप्रत्ययग्रहणस्य वैयर्थ्यमुद्भाव्याऽप्रत्ययग्रहणस्योक्तपरिभाषाज्ञापकत्वमभिहितम् । अप्रत्ययग्रहणस्योक्तपरिभाषायां ज्ञापकत्वोक्त्याऽऽवश्यकत्वं सूचितम् ।

वस्तुतस्तु- अणुदित्सूत्रस्थाऽप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्यैकदेशानुमतिद्वारा परिभाषा बोध्यत इत्यर्थः । ( भाव्यमाने ) ति परिभाषाघटकसवर्णपदेन समानजातीयस्य (२)भिन्नधर्मिणो ग्रहणाज्जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः ।

ननु—

विंशत्याद्याः सदैकत्वे संख्यासंख्येयवाचकाः ।

इत्यनुशासनाद्विंशत्यादिशब्दानामेकवचनत्वस्यैव प्रसिद्ध्या श-

---

(१)(अणुदित्सवर्णस्य चाप्रत्यय) इति सूत्रे प्रत्ययादेशागमेषु प्रकारान्तरेण सवर्णग्रहणाभावमुपपाद्यैवं तर्हि यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयति भवत्येषा परिभाषा । ज्यादादीयस इत्यत्र ज्याद ईयस इत्येवान्तर्याद्दीर्घसिद्धौ ज्यादादिति दीर्घोच्चारणमप्यस्या ज्ञापकम् ।

(२) सूत्रोच्चारितशब्दबोध्यतावच्छेदकसामान्यधर्मस्य व्याप्यो यस्तद्व्यक्तित्वान्यधर्मस्तद्वत इत्यर्थः । सूत्रोच्चारितशब्दबोध्यतावच्छेदकत्वविशेषणाज्जत्वस्य सामान्यधर्मगुणत्वव्याप्यत्वेऽपि न क्षतिः ।

तानीति बहुवचनान्तमनुपपन्नमिति चेन्न। शतं च शतं च शतं चेत्ये-कशेषेऽनेकशतबोधतात्पर्येण शतानीति बहुवचनान्तोपपत्तेः। न च नुमि सति नान्तत्वात्षट्त्वेन (षड्भ्यो लुगि)ति विभक्ते र्लुगापत्तिः स्यादिति वाच्यम्। सर्वनामस्थानसन्निपातेन जायमानस्य नुम-स्तत्सन्निपातविघातकलुगुपपादकत्वेन षट्संज्ञाया अपि सर्वनाम-स्थानसन्निपातविघातकतया (सन्निपातलक्षणो विधिरनिमित्तं त-द्विघातस्ये) तिपरिभाषया तदनिमित्तत्वबोधनेनाऽदोषात्। न-च परम्परासन्निपातविघातके सन्निपातपरिभाषाप्रवृत्तौ किम्प्र-माणमिति वाच्यम्। कुम्भकारेभ्यो नगरकारेभ्य इत्यत्राऽव्ययसंज्ञा-वारणपरभाष्यप्रामाण्येन परम्परासन्निपातविघातकेऽप्युक्तप-रिभाषाप्रवृत्तेरभ्युपगमादित्यभिप्रेत्याह—शतानि सहस्रा-णीति।

अष्टाभ्य औश्। नन्वत्र (अष्टभ्य उश्) इत्येव सूत्र-स्वीकारे ङित्वादन्त्यादेशेऽकारोकारयोरेकादेशे (वृद्धिरेची) ति वृद्धावष्टस्याऽष्टाविति रूपस्योपपत्तौ किमर्थम् (अष्टाभ्य औ-शि) ति सूत्रमिति चेन्न। सकारस्योकारे अष्टा अउ इति स्थि-तौ (इण्ङशीनामादूगुणः सवर्णदीर्घत्वादि )तिन्यायेनान्तरङ्ग-त्वात्सवर्णदीर्घे तत आद्गुणे कृतेऽष्टावितीष्टप्रयोगस्याऽसिद्ध्याप-त्तेः। अयम्भावः, अयजे इन्द्रम्। ग्रामे इह। सर्वे इत्थमित्यादौ यथा पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादाय सवर्णदीर्घम्बा-धित्वा गुणः प्रवर्तते तथाऽत्राप्यकारोकारयोः प्राप्तगुणम्बाधि-त्वाऽन्तरङ्गत्वात्सवर्णदीर्घे पश्चाद्गुणे रूपासिद्धिरिति। यदि च अयजे इ इन्द्रमित्यादिस्थितौ सवर्णदीर्घस्य पदान्तरसम्बन्धिव-र्णापेक्षत्वेन बहिरङ्गत्वम्, गुणस्य तु तत्पदसम्बन्धिवर्णापेक्षत्वे-

नान्तरङ्गत्वमिति तत्र गुणेन दीर्घबाधो युक्तः, प्रकृते तु जश्शसो-रकारसकारस्थानिकोकारस्य य एकादेशः स प्रत्ययमात्रसम्बन्धिवर्णापेक्षत्वादन्तरङ्गः, प्रत्ययावयवप्रकृत्यवयवसम्बन्ध्येकादेश एव तु बहिरङ्ग इतीण्ङ्शीति न्यायवैषम्यमिति विभाव्यते तदाङिति न्यासे मात्रालाघवसत्त्वेऽपि प्रक्रियागौरवरूपदोषास्तिष्ठत्येवेति बोध्यम् । औशः शित्त्वात्सर्वादेशः । ( अनेकाल् शित्सर्वस्य ) इत्यत्र शिद्ग्रहणम्प्रत्याख्यायानेकाल्त्वात्सर्वादेश इत्येव सुवचम् । नचौशः शस्येत्त्वेऽनेकाल्त्वाभावादनेकाल्त्वात्सर्वादेश इत्युक्तिरयुक्तेति वाच्यम् । भूतपूर्वगत्याश्रयणेन तदुपपत्तेः । न च भूतपूर्वगत्याश्रयणादनेकाल्त्वोपपादने ( अर्वणस्त्रसावनञः ) इत्येतद्विहितत्रादेशस्याप्युक्तरीत्याऽनेकाल्त्वस्याक्षततया सर्वादेशता स्यादिति वाच्यम् । ऋकारस्योगित्कार्यार्थत्वेन सर्वादेशतार्थं सामर्थ्योपक्षयात् । नचैवमौशित्यादौ शकारस्य श्रवणार्थत्वमेव स्यादिति वाच्यम् । अनुशतिकादिषु ( ऐह लौकिकमि )ति निर्देशेन शकारस्येत्संज्ञकत्वाऽभ्युपगमादित्यलम् ॥

अष्टभ्य इति वक्तव्य इति । ननु ( रायो हलि ) त्यस्माद्धलीत्यपकर्षेण हलादावात्वविधानादजादौ तदलाभादष्टात्रित्यत्राऽऽत्वं न स्यादिति चेन्न । आत्वस्य लक्षणवशसम्पन्नत्वे वैकल्पिकत्वेन लाघवादृप्रस्वघटितस्यैवोच्चारणीयत्वे कृतात्वानुकरणस्य क्वचिदजादावप्यात्वमित्यत्र ज्ञापकत्वात् । इदञ्चात्वम्वैकल्पिकम् । तच्च ज्ञापकसाध्यम्, तथाहि ( अष्टनो दीर्घादि ) ति सूत्रे दीर्घान्तादेवाष्टनः परस्या असर्वनामस्थानविभक्तेरुदात्तत्वाय दीर्घग्रहणं तिष्ठति आत्वस्य नित्यत्वे हि दीर्घग्रहणासत्त्वेऽपि ह्रस्वान्तादष्टनः परस्या असर्वनामस्थानविभक्तेरुदात्त-

त्वाऽप्राप्त्या दीर्घग्रहणं व्यर्थं सञ्ज्ञापयति वैकल्पिकमिदमात्त्वमिति भावः।

इदमिति। श्रुतमनुमितं चात्त्वमित्यर्थः। तत्र श्रुतं हलादौ, अनुमितं जश्शसोरिति बोध्यम्। अष्टनो दीर्घादिति। अदीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्। अष्टाभिः। दीर्घात्किम्। अष्टभिः। मध्योदात्तमिदम्। (षट्त्रिचतुर्भ्यो हलादिरि)ति बाधित्वा (झल्युपोत्तममि)त्यस्य प्रवृत्तेः। (षट्त्रिचतुर्भ्य) इत्यस्य षट्त्रिचतुर्भ्यो या हलादि विभक्ति स्तदन्ते पदे उपोत्तममुदात्तं स्यादित्यर्थः। एवं स्थितौ ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थं क्रियमाणस्य दीर्घग्रहणस्याऽऽत्वनित्यत्वे वैयर्थ्यं स्यात्। ननु ज्ञापितेऽप्यात्ववैकल्पिकत्वे अष्टाभिरित्यत्र सावकाशस्य (अष्टन) इति सूत्रस्याऽष्टाभिरित्यत्र परत्वाज्झल्युपोत्तममिति सूत्रेण बाधे (सकृद्गतौ यद्बाधितं तद्बाधितमेवे)ति न्यायेन पुनरष्टन इति सूत्रस्याप्रवृत्त्या दीर्घग्रहणं व्यर्थमेवेति चेन्न। दीर्घग्रहणेनैवोक्तन्यायस्यानित्यत्वज्ञापनात्। यद्वाऽत्र यथोद्देशपक्ष एव ज्ञाप्यते। तत्रात्वस्य बहिरङ्गत्वेन प्राक् षट्त्वे जाते नान्तसंख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्याऽल्धर्मत्वाभावेन स्वरादेरनल्विधित्वात्। स्थानिवद्भावेन (एकदेशविकृतन्यायेन वाऽकारान्तस्यापि षट्त्वात्तत्रापि (झल्युपोत्तममि)त्यस्य प्राप्त्याऽष्टनः स्वरस्य तदपवादत्वात्। न च (झल्युपोत्तममि)त्यस्याऽष्टाभिरित्यत्रेवाऽष्टानामित्यत्राप्यप्राप्त्या तत्र (अष्टनो दीर्घादि)ति विभक्त्युदात्तत्वस्य चरितार्थत्वेन सावकाशतया कथमपवादत्वसाङ्गत्यमिति वाच्यम्। तत्रापि (षट्त्रिचतुर्भ्यो हलादिरि)त्य-

स्य प्रवृत्तावष्टन्स्वरस्य निरवकाशत्वेनापवादत्वोक्तेः सङ्गतित्वात् । यथोद्देशपक्षे भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेणैव संज्ञाप्रवृत्तेः कैयटकृता प्रगृह्यसंज्ञाप्रकरणेऽभिहितत्वात् । स्पष्टं चेदं ( षट्संज्ञा ) सूत्रे ( अष्टनो दीर्घादि ) ति सूत्रे च भाष्यकैयटयोः । आकारान्तस्योक्तरीत्या षट्त्वेऽप्यौश्त्वविधिसामर्थ्यादष्टावित्यत्र न विभक्तेर्लुगिति बोध्यम् ।

नचैवमष्टावित्यत्र हलादित्वाऽभावात्षट्स्वरस्याप्राप्त्याऽष्टन्स्वरश्चरितार्थः । नचैकादेशे व्यपवर्गाऽभावः । स्वरात्पूर्वं सन्धिकार्यप्रवृत्तेरित्यत्राऽङ्निमित्तनिघातसिद्ध्यर्थं ( यद्धि तु परमि ) ति सूत्रे भाष्यकृता ध्वनितत्वादिति वाच्यम् । एतद्भाष्यप्रामाण्येनैवाष्टन्शब्दस्य घृतादिपाठादन्तोदात्तत्वेन ( एकादेश उदात्तेनोदात्त ) इत्यनेनैव तत्रान्तोदात्तत्वोपपत्तेः। नचाष्टन्शब्दस्य फिट्स्वरेणैवान्तोदात्तत्वासिद्धौ घृतादिगणे तदर्थं पाठो व्यर्थ इति वाच्यम् । ( न्नः संख्याया ) इति फिट्सूत्रेण नान्तसंख्यावाचकत्वेनाद्युदात्तत्वस्य दुर्वारतयाऽन्तोदात्तत्वाऽप्राप्तेः । ननु षट्स्वरविधायकशास्त्रे विहितविशेषणस्याश्रयणात्समासे गौणे च षट्स्वराऽप्राप्त्या प्रियाष्टाभ्यामित्यादावष्टन्स्वरः सावकाशः । अत एव ( चतुरः शसी ) ति सूत्रे स्त्रियां प्रतिषेधो वाच्यः, चतस्रः पश्य, चतसर्याद्युदात्तनिपातनात्त्तसिद्धम् । तन्निपातनेऽपि चतसृणामिति विभक्तिस्वरः सिद्धः । ( षट्त्री ) ति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वाज्ञापनात् । आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यं नह्यन्यद्धलादिग्रहणं प्रयोजयंति अन्यदतश्चतसृशब्दादिति भाष्योक्तं सङ्गच्छते अन्यथा प्रियाष्टान इत्यादेः सम्भवेन तदसङ्गतिः । अष्टौ परमाष्टात्रि·

स्यादेशस्वरेण सिद्धेः । न च संख्याप्रकारकसंख्येयविशेष्यक-बोधजनकत्वेनोत्तरपदार्थप्रधानसमासे समुदायस्यापि षट्त्वेन क-दष्टावित्यादि व्यावर्त्यम् । ( सर्वादीनि सर्वनामानी )तिसूत्र-भाष्ये स्पष्टश्चेदम् । ततो विहितत्वाच्चेति वाच्यम् । एतद्भाष्य-प्रामाण्येन तदनभिधानादिति चेन्न। एतज्ज्ञापकपरभाष्यप्रामाण्या दष्टन इत्यस्यापि विहितविशेषणाश्रयणेन समासेऽप्रवृत्तेः । प्रि-याष्टादीनामनभिधानस्य षट्संज्ञासूत्रे भष्ये स्पष्टत्वाच्च । ( ति-सृभ्यो जस ) इति सूत्रस्थेनोपसमस्तार्थमेक इति भाष्येण तुल्यन्या यात् षट्स्वरस्यापि तदन्ते प्रवृत्तेरुक्तत्वाच्च । न च ( चतुरः शसी ) तिसूत्रस्थवार्तिकविरोध इति वाच्यम् । तस्य च ( ग्रह-णानर्थक्यमन्यत्राभावादि ) ति ( तिसृभ्यो जस ) इति सूत्रस्थ-वार्तिकवदेव दूषितत्वात् । एक ईति च मुख्यार्थकमिति दिक् ॥

इहपूर्वस्मादपि विधाविति । ननु प्रियाष्टन्शब्दस्य द्वि-तीयाबहुवचने जसि शस्येत्वे लोपे च कृते ( यचि भमि ) तिभ-त्वे ( अल्लोपोऽन ) इत्यल्लोपे प्रियाष्टन असिति स्थितौ टका-रयोगे नस्य ष्टुत्वं दुर्वारमिति चेन्न । ( अचः परस्मिन्नि )तिसू-त्रे पूर्वत्रिधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासा-श्रयणादल्लोपस्य स्थानिवद्भावादकारेण व्यवधानेन ष्टुत्वाप्राप्तेः । न च ( पूर्वत्रासिद्धे न स्थानिवदि )ति स्थानिवद्भावनिषेधेना-कारेण व्यवायाभावात् ष्टुत्वस्य दुर्वारतया तादवस्थ्यमेवोक्तदो-षस्येति वाच्यम् । संयोगादिलोपलत्वणत्वेषु विधिषु कर्तव्येषु ( पूर्वत्रासिद्धे न स्थानिवदि ) ति न प्रवर्तन इत्यर्थकेन ( तस्य-दोषः संयोगादिलोपलत्वणत्वेषु ) इति वार्त्तिकेन णत्वस्य कर्त-व्यत्वे (पूर्वत्रे) तिवचनाऽप्रवृत्त्या दोषाभावात् । न च (तस्य दोषः

संयोगादिलोपलत्वणत्वेष्वि ) तिवार्त्तिके ( लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि ) ति परिभाषया प्रतिपदोक्तणकारस्य ग्रहणाल्लाक्षणिकस्य ष्टुत्वनिष्पन्नस्य तस्याग्रहणेन न दोष इति वाच्यम् । तत्र प्रतिपदोक्तणकारग्रहणे प्रमाणाभावात् । मूर्द्धन्य-पदानुवृत्त्यैव सिद्धौ ( रषाभ्यां नो णः समानपदे ) अत्र णकारस्य भाष्यकारेण प्रत्याख्यानकरणात्प्रतिपदोक्तत्व-स्यैवालाभाच्चेति तदाशयः । ननु ( रषाभ्यां नो णः समानपदे ) इत्येतत्सूत्रारम्भसामर्थ्येन पञ्चमीसमासस्य नित्यत्वाऽभावज्ञाप-नात्तथाविवक्षाया अभावेन ष्टुत्वं दुर्वारमेवेत्याशङ्क्य समाधानान्त-रमाह—कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाच्चे-त्ति । कार्यहेतुकं संज्ञापरिभाषाशास्त्रद्वयस्य विधिशास्त्रप्रदेशे प्रा-पणं यस्मिन्पक्षे स कार्यकालपक्षः । अत्र हि पक्षे विधिशास्त्रेण स्वप्रदेशे कार्यहेतोरपकृष्टायाः परिभाषाया विधिशास्त्रतः पृथगेव वाक्यार्थबोधो जायते न तु विधिशास्त्रेण सहेति विवेकः । तथा च प्रकृते ष्टुत्वविधायकशास्त्रेणान्तरङ्गपरिभाषाऽपकर्षणेन तया तस्यान्तरङ्गत्वबोधनात्तत्र कर्तव्ये तदपेक्षया बहिरङ्गस्याल्लोप-स्याऽसिद्धत्वेन न ष्टुत्वप्रवृत्तिशङ्कालेशोऽपीति दिक् ॥

निरुपपदाद्युजेः क्विन्निति । ( युजेरसमासे ) इति सूत्रेणाऽसमासे एव नुम्विधानलाभात् सोपपदे ( चोः कुरि ) ति कुत्वेनैव तत्सिद्धत्वात्क्विनि क्विपि च नास्ति कश्चिद्विशेष इति भावः ॥

इह सृजियज्योः कुत्वं नेति क्लीवे वक्ष्यत इति । ( सृजिदृशोर्झल्यमकिती )ति सूत्रे ( रज्जुसृड्भ्यामि )ति भाष्य-प्रयोगात् ( क्रमश्चे )तिसूत्रे उपयड्क्राम्यतीति भाष्यप्रयोगाच्च

( क्विन्प्रत्ययस्य कुरि )ति कुत्वं नेति भावः। यद्वा ( व्रश्चादि ) सूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवाद इति वक्ष्यते इत्यर्थः॥

परिमृडिति। परिमार्ष्टीति विग्रहे परिपूर्वकान्मृजेः क्विनि निष्पन्नः। नन्वत्र ( मृजेर्वृद्धिरि )ति वृद्धिः स्यादिति चेन्न। ( धातोरुच्यमानं कार्यं तत्प्रत्यये ) इति परिभाषया धातुविहितप्रत्यये पर एव तेन वृद्धिविधानादत्र च सुविभक्तेः सत्त्वेन तन्निमित्तकवृद्धेरप्राप्तेः। न च क्विन्प्रत्ययस्य धातोर्विहितत्वात्तन्निमित्तकवृद्धेः प्राप्तिः स्यादेवेति वाच्यम्। ( क्ङिति चे )ति निषेधात्क्विन्निमित्तकवृद्धेरप्यप्राप्तेरिति भावः॥

राडितिपदान्तोपलक्षणमिति। ( विश्वस्य वसुराटोः ) अनेन वसुराट्शब्दयोः परत्वे दीर्घविधानादेतदपेक्षया षत्वादेरसिद्धत्वेन राट्शब्दपरत्वाभावाद्विश्वाराडित्यत्र दीर्घो न स्यादिति पूर्वपक्षोत्थितौ समाधानरूपोऽयं ग्रन्थः। राडित्यस्य पदान्तोपलक्षणत्वे पदान्तराजृशब्दे दीर्घविधानस्य फलितत्वान्नोक्तस्थलीयोक्तदोषावकाशः। न च ( विश्वस्ये )ति सूत्रेण वसुशब्दे दीर्घविधानात् ( आदित्यविश्ववसव ) इत्यमरकोशश्लोकेऽपि वसुशब्दपरत्वेन दीर्घापत्तिः स्यादिति वाच्यम्। तत्र दीर्घविधायकशास्त्रे ( नरेः संज्ञायामि )ति सूत्रात्संज्ञापदापकर्षणेन संज्ञायामेव तेन दीर्घविधानान्न तत्र दीर्घापत्तिरूपो दोषः। यद्वा कोशश्लोके आदित्यादिशब्दत्रयस्येतरेतरद्वन्द्वसमासे आदित्यशब्दस्यैव पूर्वपदत्वेन विश्वशब्दस्य तत्त्वाभावान्न दोष इति भावः॥

तदोः सः सौ। ( त्यदादीनाम ) इत्यतस्त्यदादीनामि-

त्यनुवृत्तिस्तदाह--त्यदादीनां तकारदकारयोरिति । तेन आ-तप इत्यादौ नानन्त्यतकारस्य सत्वापत्तिः । अन्यथा ( त्यदा-दीनामननुवृत्तौ सामान्यतोऽनन्त्यतकारदकारयोः सत्वमिति सू-त्रस्यार्थे तत्र सत्वापत्तिर्दुर्वारैवेति । सूत्रे तदोरित्यस्याभावे या इत्यत्र यकारस्यापि सत्वापत्तिः । ननु लाघवात् तदोरित्यस्य स्थाने (१)तोरिति कुतो नोक्तमिति चेन्न। तथा सति अनेषेत्या-दौ नकारस्यापि सत्वापत्तेः । (२)न च नुटो बहिरङ्गत्वेन सत्व-दृष्ट्याऽसिद्धत्वेन्न नोक्तदोषोऽनेषेत्यादाविति वाच्यम् । बहि-र्भूतसुनिमित्तकत्वेना (३)स्यैव बहिरङ्गत्वात् । ध्वनितश्चेदं

---

(१) तोरिति त्विति । अनेष इत्यत्रैतच्छब्दस्य नञा समासे नलो-पे (तस्मान्नुडची) नि नुटि नकारस्यैतच्छब्दावयवत्वेन सस्यापत्तिः।

(२) परादावपि नुटि तस्यासिद्धत्वे न (तदोः सः सावि) त्यपि क्रियमाणे सत्वन्न भविष्यतीति चिन्त्यमेतदिति तद्दूषयितुमुपक्रमते नचेति ।

(३) भाष्य इति। तत्र हि तस्मादित्यस्यासद्भावे नञ एव नुटः प्रा-प्तिमाशङ्क्य एवं तर्हि पूर्वान्तः करिष्यते । तत्रायमप्यर्थः । (तदोः सः सावि ) ति सूत्रे तदोर्ग्रहणन्न कर्तव्यम्भवति । तवर्गनिर्देशे इह प्राप्नोति अनेषः करोति । नचात्र ( निर्दिश्यमान ) परिभाषया न भविष्यतीति वाच्यम् । ( अर्थवत् ) परिभाषैकवाक्यतया (निर्दिश्यमान) परिभाषा-याः प्रवृत्तौ तकारः स्यादिति । तादृशरूपप्रदर्शनपरभाष्यप्रामाण्या-द्वयोरपि परिभाषयोस्त्यागेन यावता पूर्वान्तः एष दोषो न भवति । ततः पूर्वान्तत्वेऽनेष इत्यत्र नलोपमाशङ्क्य नुग्विधानसामर्थ्यात्तम्वार-यित्वा ङमुटः प्राप्तिमुद्भाव्य परादित्वपक्ष एव स्थापितः । नचाजादि-पदसन्निपातेन जातस्य नुकः कथमजादिविघातकङमुटम्प्रति निमित्त-त्वमिति नायन्दोष इति वाच्यम् । नञोऽकचि चित्वादन्तोदात्तत्वे च

( तस्मान्नुडचि )ति सूत्रे (१)भाष्ये । सौ किम् । तौ ।

कृतेऽर्मशब्देन नक शब्दस्य समासेऽकनर्ममित्यत्र ( अमे चावर्णद्व्यच्-त्र्यजि ) तिपूर्वपदाद्युदात्तत्वाभावापत्त्या परादित्वस्यावश्यकत्वात् ॥

(१) अस्यैवेति सत्वस्यैवेत्यर्थः । यद्यपि पूर्वोत्तरपदसापेक्षत्वमस्ति नुटस्तथाप्यङ्गसंज्ञानिमित्तबहिर्भूतसुवनपेक्षत्वेनान्तरङ्गत्वं सत्वस्यतु त-दपेक्षत्वाद्बहिरङ्गत्वमिति भावः । यत्त्वन्तर्भूतसुबपेक्षत्वेन सत्वस्या-न्तरङ्गत्वमिति कश्चित्तन्न सत्यस्य प्रत्ययलक्षणेनैवान्तर्भूतसुबपेक्षाया भवितव्यतया (न लुमताङ्गस्ये)तिनिषेधेन सुप एवाभावात् । वस्तुतस्तु उत्तरपदाधिकारस्थबहिरङ्गस्य परिभाषाया अनित्यत्वेनाऽसिद्धत्वन्ने-त्यवश्यम्वाच्यम् । अत एव आत्मानं श्रियम्मन्यते यत्तत्कुलं श्रीमन्य-मित्यत्र खसि (इच एकाच)इत्यमि (स्वमो र्नपुंसकादि) तिलुक्सिद्धिः । श्रीशब्दस्य नपुंसकवृत्तित्वं तु प्रष्ठादीनां पुंयोगास्त्रियामिव परित्यक्त-लिङ्गस्य श्रीशब्दस्याभ्युपेयते । अत एव तस्य ह्रस्वत्वं सिद्ध्यति युष्म च्छब्दस्य स्वसम्बोध्यतावच्छेदकत्वोपलक्षितचैत्रत्वावच्छिन्ने शक्तिः । स्वं युष्मच्छब्दोच्चारयिता । सम्बोध्यत्वञ्च उच्चारितशब्दजन्य-बोधाश्रयत्वेनेच्छाविषयत्वम् । प्रत्यासत्येच्छापि स्वसम्बन्धिनी वि-वक्षिता । एवञ्चोच्चारणकर्तृसम्बन्धिनी योच्चारितवाक्यजन्यशाब्दबो-धाश्रयत्वप्रकारिकेच्छा तद्विशेष्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने युष्मच्छब्दस्य शक्तिः । अस्मच्छब्दस्य तु स्वोच्चारणकर्तृतावच्छेदक-त्वोपलक्षितधर्मावच्छिन्ने शक्तिः । अत्र स्वपदमस्मच्छब्दपरम् । नचैवं सति देव्युवाच—

गर्ज गर्ज क्षणं मूढ मधु यावत्पिवाम्यहम् !
मया त्वयि हतेत्रैव गर्जिष्यन्त्याशु देवताः

इति वाक्यस्य युष्मदस्मच्छब्दाभ्यां देवीमहिषासुरयो र्बोधो न स्यात्-देव्या एतद्वाक्योच्चारणकर्तृत्वाभावादिति वाच्यम् । वाक्ये-

अत्र कश्चिद्विचारः प्रस्तूयते—सूत्रेऽस्मिन्ननुवर्तमानत्यदादीना-मित्यस्याऽवयवार्थकषष्ठ्या त्यदाद्यवयवतकारदकारयोरित्यर्थः । त्यदतद्शब्दयो बुद्धिविषयचैत्रत्वाद्यवच्छिन्ने शक्तिः । नचात्र बुद्धिविषयत्वं चैत्रत्वस्य तदाश्रयस्य वा विशेषणं वाच्यम् । सत्येवं बुद्धिविषयत्वस्योक्तविशेष्यांशे प्रकारत्वेन शाब्दबोधे भानापत्तिरिति वाच्यम् । त्यदादीनां चैत्रत्वमैत्रत्वावच्छिन्ने शक्त्यभ्युपगमे शक्यतावच्छेदकानां नानात्वेन शक्त्यानन्त्यस्य यदा चैत्रत्वावच्छिन्नविषयको बोधस्तदा मैत्रत्वावच्छिन्नविषयकबोधस्य चापत्तेरभावाय स्वविषयतावच्छेदकत्वसम्बन्धेन बुद्धिविशेषोपलक्षितधर्मावच्छिन्ने शक्तिरभ्युपगम्यते । बुद्धिविशेषस्य चोपलक्षणीभूय शक्यतावच्छेदकत्वादनुगमकत्वेन न तेन रूपेण शक्यतावच्छेदकस्य शाब्दबोधे भानापत्तिः । नचोक्तयुक्त्या नानार्थत्वापत्तिश्च स्यादेवेति वाच्यम् । अनुगतधर्मावच्छिन्नायाः शक्यतावच्छेदकतायाश्चैकत्वान्नानार्थत्वापत्तेरभावात् । तच्छब्दः क्वचित्प्रक्रम्यमाणपरामर्शकः । स देवदत्तो यस्तत्र स्थित इत्यादौ एतस्यैव तत्पदस्य यत्पदेनार्थप्रत्यायननियमेनापेक्षा । यत्पदस्यापि तत्पदसमभिव्याहारज्ञानं विना तादृशानुगमकधर्मग्रहाभावाच्छक्तिग्रहासम्भवेन शाब्दबोधाजनकत्वस्योपपत्तेः । अ-

---

ऽस्मिन् देव्युच्चरितत्वस्य महिषासुरे च सम्बोध्यत्वस्य च भ्रमाच्छ्रोतुर्देव्यादिप्रतीति र्नतु तत्रैतद्वाक्यघटकास्मच्छब्दस्य शक्तिरित्यभ्युपगमात् । यद्वा तादृशानुपूर्वीज्ञानरूपसामान्यलक्षणया देवीवाक्यस्यापि ज्ञाने तस्मिन्देव्युच्चरितत्वं मानसज्ञानेन गृह्यते । एवमस्मच्छब्दार्थघटकोच्चारणांशे स्वातन्त्र्यविशेषणदानेनाऽकरणादिस्थलेऽनुवादकादिबोधो न । स्वातन्त्र्यश्च—स्वार्थतात्पर्यकान्यदीयोच्चारणानधीनत्वमित्यलम् ।

त एव तमानय य इहास्तीति वाक्यस्य वक्तृबुद्धिस्थघटकर्मकानयनबोधकत्वम्। अत्रैव यत्तदो र्नित्यसम्बन्ध इति व्यवहारः। यत्र तु प्रक्रान्तपरामर्शकस्तत्र यत्पदाऽसद्भावेऽपि बोधो भवत्येव। यथा– समृद्धपुरो राजास्तीत्यादिकथनानन्तरं तमभिगच्छेत्युच्यते तत्र यत्पदासद्भावेऽपि भवत्येवार्थबोधः एवं यच्छब्दस्य तत्पदप्रतिपाद्यत्वेन वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिः। अत एव नियमेन तत्पदापेक्षा।

ननु युष्मदस्मच्छब्दयोः प्रथमैकवचने सौ साधुत्वविधायकसकलशास्त्रेषु प्रवृत्तेषु त्वम् अहमिति सिद्धम्। तस्य स्त्रीत्वविवक्षायां स्त्रीशब्दसमभिव्याहारे त्वं स्त्री अहं स्त्री इत्यत्र मपर्यन्तस्य त्वादेशे अहादेशे च कृते लोपेन च दकारे निवृत्ते त्व अम् अह अमिति स्थितौ प्राप्तयोः पूर्वरूपटापो र्मध्ये टाबपेक्षया पूर्वरूपस्य परत्वेऽपि तम्बाधित्वाऽन्तरङ्गत्वाट्टापा भाव्यम्। न च ( अजाद्यतष्टाबि )त्यनेन स्त्रीत्वे द्योत्ये सत्येव टापो विधानेन युष्मदस्मदोश्चालिङ्गत्वात्स्त्रियां विहितस्य टापो न प्राप्तिसम्भव इति वाच्यम्। ( शिशीलुकनुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशाः पूर्वविप्रतिषेधेने )ति वार्त्तिकप्रामाण्यात्तयोर्लिङ्गवत्त्वप्रतीतेरित्यभिप्रेत्याह–ननु त्वं स्त्रीत्यादि– तेनादन्तत्वाभावान्न टाबित्यन्तामिति। शेष इति षष्ठ्यर्थे सप्तमी। तथा च मपर्यन्तात्परस्य शेषस्याऽद इत्यस्य लोप इत्यर्थेऽद इत्यस्य लोपेनाऽदन्तत्वाभावान्न टापः प्राप्तिशङ्केति भावः। न च ( शेषे लोप ) इत्यस्योक्तार्थालाभे किं प्रमाणमिति वाच्यम्। शेषग्रहणस्यैव तत्र प्रमाणत्वात्। तथा हि, सत्यपि शेषग्रहणे यद्युक्तार्थो न स्यात्तदा आत्वयत्वयोरपवादतया तन्निमित्तेतरविभक्ता-

वेव लोपप्राप्तौ शेषग्रहणं व्यर्थं स्यात् । वस्तुतस्तु अन्त्यलोपप- क्ष एव सिद्धान्तसिद्धः । अत एव ( युष्मदस्मदोरनादेशे ) इति सूत्रे (नचादेशो हलादिरस्ती)ति भाष्योक्तिसङ्गतिः । एतदुक्त्या- ऽन्त्यमादेशपक्षस्यैव युक्तत्वं सूचितम् । एवं च टाबापत्तेस्तादव- स्थ्यमेवेति शङ्कोदये समाधानमाह–( असिद्धं बहिरङ्गमन्तरङ्गे ) इति परिभाषया टापः प्रागन्तरङ्गत्वादतो गुणे इत्यस्यैव प्रवृत्त्या टाबभाव इत्यलम् ॥

नागेशास्तु—अन्तरङ्गत्वादिति । परनिमित्तानपेक्षत्वे- नान्तरङ्गत्वमिति तदाशयः । अलिङ्गे इति । सत्येव युष्मद- स्मदोः स्त्रियामवृत्तित्वात्स्त्रियामित्यस्य च प्रकृतिविशेषणतायाः क्लृप्तत्वेन न टाबिति भावः । स्पष्टश्चेदं ( साम आकमि ) ति सूत्रे भाष्ये । यद्वेति । अरुचिसूचकमेतत्पक्षान्तरम् (सदादीनामः) ( साम आकम् ) इति सूत्रद्वयभाष्ये स्पष्टम् । मपर्यन्ताच्छे- षस्येति । इदमुपलक्षणम् । तेन दृष्ट इत्यध्याहृत्य सूत्रार्थः स- म्पाद्यः । ननूपलक्षणत्वे न किञ्चित्प्रमाणमिति चेन्न । शेषग्रह- णस्यैव प्रमाणत्वात् । अन्यथा टिग्रहणस्यैव कर्तव्यतापत्तेः । आदेशविधौ यस्योपयोगस्तदितरभाग एव शेषपदार्थः । ननु यत्र न मपर्यन्तस्यादेशस्तत्र का गतिरिति चेत् । त्वाद्यादेशविधावु- द्देश्यतानवच्छेदिका या आनुपूर्वी तदवच्छिन्नभिन्नत्वस्य विवक्षित- त्वात् । तस्य सत्युपलक्षणत्वे त्वमित्यादौ लोपप्रवृत्तिक्षणे मपर्य- न्ताच्छेषत्वासद्भावेऽपि क्षतिविरहः । नन्वादेशानामदन्तत्वे (वा- र्णादाङ्गं बलीय ) इति परिभाषया पररूपात्पूर्वमेव टिलोपे टाब- भाव उपपादयितुमशक्यः कार्यद्वयेऽप्यकारस्य स्थानित्वेन स- मानस्थानिकत्वमस्तीति चेन्न । कैयटमते हलन्तादेशस्यैव सत्त्वे-

नादोषात् । अन्ये तु शेष इत्येतत्सामर्थ्याद्वाणादाङ्गमित्यस्य ना-
त्र प्रवृत्तिरित्याहु स्तन्न । युष्मभ्यं । युष्मत् । युष्माकमित्यादौ
टाप्निवृत्त्या चारितार्थ्येन सामर्थ्यस्योपक्षीणत्वात् । तस्मादनि-
त्यत्वादुक्तन्यायाप्रवृत्तिरित्येके तदाह—( अतो गुणे कृते-
इति ) (१)अत्र वदन्ति । ( शेषे लोप ) इत्येतत्सूत्रस्य तत्तद्भा-
ष्यप्रामाण्याच्छेषग्रहण—सप्तुट्कनिर्देशाभ्यामावृत्त्याऽर्थद्वये ता-
त्पर्यम् । तच्चार्थद्वयं लक्ष्यानुरोधेन व्यवस्थितम् । तेन भ्यभि
टिलोपे युष्मभ्यमिति न । अत एव ( भ्यसो भ्यमि ) ति सूत्रे
यदि भ्यमादेशः शेषे लोपोऽन्त्यलोप इत्येतत्वं प्राप्नोति । अथा-
भ्यमादेशः शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्रा-
प्नोतीति यथेच्छसि तथास्त्वित्येत्रोक्तं न तु भ्यमादेशे टिलोप-
मादाय फलभेद उक्तः । वस्तुतस्तु टिलोपो व्यर्थः । टिलोपस्य
व्यर्थत्वादेव ( साम आकमि ) ति सूत्रे भाष्ये टिलोपवचना-
नर्थक्यमित्युक्तम् । (२)अत्र लिङ्गाभावादित्युपलक्षणम् । (शिशी-
लुङ्नुम्विधिभ्यो युष्मदस्मदो विंभक्त्यादेशा विप्रतिषेधेने ) ति
( नेतराच्छन्दसी ) तिसूत्रस्थभाष्यवार्त्तिकबलात्सत्यपि लिङ्ग-
वत्त्वे ( सन्निपात ) परिभाषया टाबभावस्योपपदायितुं शक्यत्व-
म् । (३)अत एव ( कृन्मेजन्त ) इति सूत्रे भाष्ये बुद्धावित्यत्र

---

(१) नन्वेवं टिलोपान्त्यलोपयोरन्यतरपक्षस्यैवाश्रयणे युष्मभ्यमि-
त्यादौ टिलोपपक्षे हलन्तस्यैव श्रवणापत्तिरत आह–अत्र वदन्तीति ।

(२) ननु लिङ्गयोगस्य सत्वाल्लिङ्गाभावादित्यनुपपन्नमत आह–अ-
त्र लिङ्गाभावादीति ।

(३) ननु त्यदाद्यकारष्टाब्विधेरित्यनेन टापि कर्तव्ये यथा ( स-
न्निपात ) परिभाषाप्रवृत्तौ भाष्यं विशिष्य साधकन्न तथा प्रकृते साध-

( सन्निपात ) परिभाषया टाबभावः प्रतिपादितः । भाष्ये शेषग्रहणन्तु प्रत्याख्यातमेव । न च शेषग्रहणे प्रत्याख्याते ( टिलोपष्टाबभावार्थं ) इति ( त्यदादीनाम ) इति सूत्रस्थं वार्त्तिकवचनं विरुणद्धीति वाच्यम् । तस्य वार्त्तिकैकदेशिवचनत्वेनादोषात् । निरूपितश्चैतद्भाष्यप्रदीपोद्योते । ( भ्यसोऽभ्यमि ) ति सूत्रे यथेच्छसि तथास्त्विति प्रौढोक्त्या भ्यमिति छेदस्य प्रौढिवादत्वं भगवतैव सूचितं यथेच्छसि तथास्तु तत्र दोषोद्धारो मया सुकर इति तच्चात्पर्यात् । अभ्यमित्येव तु छेदो न्याय्यः अत एव ( युष्मदस्मदोरनादेश ) इति सूत्रे न चादेशो हलादिरस्तीति भाष्योक्तिसङ्गतिरित्यलम् ॥

ननु ( मपर्यन्तस्ये ) त्यधिकारसूत्रमन्तरापि युष्मदस्मच्छब्दयोः—प्रथमाद्वितीयाविभक्त्यो र्द्विवचने औ तत्स्थाने (ङे प्रथमयोरमि) त्यनेनाऽमादेशे (युवावौ द्विवचने) इति युष्मदस्मदोर्युवावा देशयोर्विधानेन युवाम् आवामिति सिद्धत्येव अधिकारसूत्रमकिञ्चित्करमेवेति तात्पर्येणपूर्वपक्षो जायते—मपर्यन्तस्येति किमिति । समाधानमाह—साकच्कस्य मा भूदिति । अयम्भावः, उक्ताधिकारसूत्रासद्भावे साकच्कयोरपि युष्मदस्मच्छब्दयो र्युवावादेशयो र्विधानात् युवकाम् आवकामिति सिध्येदिति । न तु त्वयका मयकेत्यादिसिद्ध्यर्थं ( ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्य टेः प्रागित्यस्य कथयिष्यमाणत्वात्प्रकृतेऽकचः पूर्वमादेशे जाते ततः सुबन्तस्य टेः प्रागकचि युवकाम् आवकामिति प्रयोगसिद्धेर्निराबाधान्नोक्तप्रयोगद्व-

---

कमित्यत आह—अत एवेति । टापि कर्तव्येऽपि क्वचित्सन्निपातपरिभाषायाः प्रवृत्तिस्वीकारादेवेत्यर्थः ॥

यासिद्धिरूपमधिकारसूत्रप्रयोजनं युक्तियुक्तमित्यरुचिमभिप्रेत्य प्रत्युदाहरणं दर्शयति—त्वया मयेति मा भूदिति । असत्यधिकारसूत्रे समुदाययोर्युष्मदस्मदोस्त्वामादेशे जाते ( योऽची ) ति सूत्रेणाकारस्य यत्वे च सञ्जाते त्वया मयेति नोपपद्येतेति सफलमधिकारसूत्रमिति तदाशयः । ननु ( योऽची ) तिसूत्रस्थाने ( अच्ये ) इत्येव न्यासोऽस्तु अजादौ विभक्तावकारस्यैत्वमिति तदर्थकरणेन दकारविशिष्टयोर्युष्मदस्मदोस्त्वामादेशेऽप्यकारस्यैत्वे तस्य ( एचोऽयवायावः ) इत्यनेनायादेशे कृते त्वया मयेत्यस्याधिकारसूत्रमन्तराप्युपपत्तौ व्यर्थमेव तदित्यरुचिं सूचयितुं प्रत्युदाहरणं दर्शयति—युवकाभ्याम्—आवकाभ्यामिति । अत्रौकारसकारभकारादाविति वार्त्तिकानुरोधादन्तरङ्गत्वात्सर्वनाम्नष्टेः पूर्वमकचो जायमानत्वेन तदुत्तरममादेशे साकच्कस्य युवाकभ्याम् आवकाभ्यामिति रूपद्वयस्य न सिद्धिरिति कर्तव्यमेवाधिकारसूत्रमिति भावः ।

अत्र नागेशाः—मपर्यन्तस्य किमिति । अधिकारसूत्रं किमर्थमिति प्रश्नः । नन्वकृतेऽधिकारसूत्रे समुदाययोर्युष्मदोऽस्मदोश्चादेशापत्त्या युवकाम् आवकामनयोरसिद्धिः स्यादिति चेन्न । (१)समुदायादेशत्वेऽप्योकारसकारभकारादौ सुपि सर्वनाम्नष्टेः

(१) अस्यायम्भावः, अङ्गाधिकारपठितेष्वधिकारवशादङ्गस्य लाभात् युष्मदस्मदोरित्यस्याप्यनुवृत्त्यैव लाभादनयोर्मध्ये को विशेष इति जिज्ञासोदये समाधानं दर्शयति—अवान्तरवाक्यार्थबोधस्य महावाक्यार्थबोधजन्यस्य हि प्रसिद्धत्वेन प्रकृते युष्मदस्मदोरित्यारभ्यावान्तरवाक्यार्थबोधस्य युष्मदस्मदोरित्येतत्पदार्थोपस्थितिजन्यस्य क्लृप्तत्वात् युवावावित्येतद्घटकपदादस्य नियताकांक्षया युष्मदस्मदोरित्येत-

प्रागकजन्यत्र तु सुबन्तस्य टेः प्रागित्यस्य युष्मदस्मद्विषये त्वय-
केत्यादिसिद्धये वक्ष्यमाणत्वेनान्तरङ्गत्वाद्युवामित्यस्य सिद्ध्युत्त-
रमकचि युवकामित्यत्रादोषादत आह—त्वयेति । न-
न्वत्राप्यचये इति न्यासेनैकारादेशे च सिद्धेराह—युवकाभ्या-
मिति । अत्र भकारादिविभक्तिपरत्वात्प्रागेवाकचि जाते मपर्यन्त-
स्येत्यस्याभावे समुदायस्य युवावादेशेऽकचः श्रवणं न स्यात् ।
कृतेऽकाचि ( तन्मध्यपतित ) न्यायेन स्थानिबुद्ध्यैव स्थानिव-
द्भाव इव समुदायस्यादेशापत्तिः । एतादृशे विषयेऽकज्घटिते
निर्दिश्यमानभिन्नत्वबुद्ध्यसम्भवेन ( निर्दिश्यमान ) परिभाषया
युवकाभ्यामित्यस्य न सिद्धिरिति नाशङ्कनीयमिति भावः । आ
देशानां हलन्तत्वपक्षे तु अधिकाराभावे समुदायस्य त्वादेशोऽच्ये
इति न्यासकरणेऽपि वकारस्यान्त्यस्यैकारादेशे वश्रवणं न स्या-
त् । नच ( अच्येगि ) ति न्यासे कृते हलन्तादेशेऽप्यागमविधा-
नादिष्टसिद्धिः स्यादेवेति वाच्यम् । वक्ष्यमाणस्य अतियुष्मया
अत्यस्मयेत्यस्यासिद्ध्यापत्तेः । एवमादेशस्य सर्वादेशत्वं न स्या-
दिति बोध्यम् ॥

नन्वेवमपि मपर्यन्तस्येत्यस्य स्थाने मान्तस्येत्येवास्तु सूत्रं
परिग्रहणञ्च मास्त्विति चेन्न । युष्मयत्यादेः क्विपि सुप्यादेशा-
भावार्थं तस्याऽऽवश्यकत्वात् कृते च परिग्रहणे पर्यन्तशब्देन

---

च्छीघ्रोपस्थितिकत्वेनापेक्षा । अङ्गस्येत्यस्य तु पश्चादपेक्षेत्यभिप्रेत्य
गृह्यमाणयुष्मदस्मदोरित्युक्तमिति गृहाण । अवान्तरवाक्यार्थबो-
धस्य यत्पदार्थमन्तरा न निराकांक्षत्वं तस्मिन्पदार्थे गृह्यमाणत्वव्य-
वहारः । अधिकारस्य तु मपर्यन्तस्येत्यस्याऽभावेऽपि युवकाम् आव-
कामित्यस्य सिद्धिरिति ॥

मान्तापेक्षया शेषस्य लाभात् । कटिपर्यन्तं वास इत्युक्तेऽग्रे किञ्चिदस्तीति नियमेन प्रतीतेः । एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशाः । अत एव भाष्येऽवधिद्योतनार्थं परिग्रहणं कर्तव्यम्, मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः क्व च मान्ते युष्मयतेरस्मयतेश्चाऽप्रत्यये इत्युक्तम् । अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः । पर्यन्तशब्दस्य लोके तथैव प्रयोगात् । अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च । तत्रैवेत्यस्याऽनिष्ट एवेत्यर्थः । परिग्रहणाभावे तु यतः पूर्वोऽस्ति परश्च नास्ति सोऽन्त्य इति भाष्योक्ते मान्तपदस्य मुख्यार्थत्वलाभायाऽत्रैव स्यात् । अत एव भाष्ये प्रयोगदर्शनं न कृतम् ।

यत्तु—असति परिग्रहणे यत्र मान्ते युष्मदस्मदी (१)तत्रैव स्यात् सामानाधिकरण्येनान्वयस्यौचित्यात्सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदो यौ मपर्यन्ताविति व्याख्यानात् । नच दान्ते कथं युष्मदस्मच्छब्दत्वव्यवाहार इति वाच्यम् । व्यपदेशिवद्भावेन तत्र तदुपपत्तेः । युष्मयत्यादेः क्विपि च तदुपपत्तेः । नच कटिपर्यन्तं वास इति प्रागभिहितार्थस्य सद्भावात्कथं युष्मयत्यादेः क्विपि चेत्युक्तमिति वाच्यम् । मस्तकप्रभृति पादाङ्गुष्ठपर्यन्तम्पटेनाच्छादितेयमित्यादावङ्गुष्ठात्परस्य भागस्याभावेऽपि तादृशव्यवहारदर्शनेन कटिपर्यन्तमिति नियमाभावात् । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाश्च प्रत्ययाविधिविषयत्वात् तत्र परिग्रहणस्य वैयधिकरण्येनान्वये मणिमन्त्रादिन्यायेन

(१) नचैतन्मतेऽभिव्यक्तेति न्यायस्य प्रातिपदिककार्येऽपि प्रवृत्तौ कथमेतदिति वाच्यम् । सूत्रारम्भसामर्थ्येन तन्न्यायाप्रवृत्तेः ।

नियामकत्वकल्पनापेक्षया युष्मयत्यादेरित्युक्तस्यैव न्याय्यत्वात् यद्यग्रिमभागाऽभावेऽपि पर्यन्तशब्दस्य प्रयोगस्तदा परिशब्दसत्त्वेऽपि ( सम्भवति सामानाधिकरण्ये वैयधिकरणस्यान्याय्यत्वात् ) सामानाधिकरण्येनान्वयः स्यात् तत्प्रतिबन्धाय मणिमन्त्रन्यायवलम्बनमेव तैः कर्तव्यम् । किञ्च कटिपर्यन्तं वास इत्युक्ते योऽर्थः प्रतीयते स एवार्थः पादाङ्गुष्ठपर्यन्तं वास इत्यत्र न प्रतीयतेऽपितु ततो विलक्षण इति पर्यन्तशब्दस्य स्वावधिकपरभावसत्त्वाविशिष्टाऽवधिवाचकत्वं वक्तव्यम् । अङ्गुष्ठपर्यन्तमित्यत्रत्वङ्गुष्ठान्तमिस्रतो विलक्षणार्थाप्रतीत्या पर्यन्तशब्दस्य लाक्षणिकत्वं वाच्यमिति मणिमन्त्रादिन्याय एव पर्यवसानम् ॥

तत्र (१)सामानाधिकरण्यान्वयस्याऽसम्भवेन वैयधिकरण्यसम्बन्धेनान्वय इति त्वन्यत् ।

किञ्चास्मिन्व्याख्यानेऽवधिद्योतनार्थमिति भाष्याक्षरास्वारस्यम् । प्रपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति आहुः ॥

इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्त इति (शेषे लोप) इत्येतत्सूत्रविहितलोपे टिलोपान्त्यलोपेत्युभयपक्षस्य सत्त्वात्तत्रान्त्यलोपपक्षे जसः स्थानेऽमि तस्य ( स्थानिवत् ) सूत्रेण जस्त्वात् ( जसः शी ) ति सूत्रेण श्यादेशः स्यादिति समापन्नं पूर्वपक्षं निराकर्तुमाह-(२)अङ्गकार्ये कृते पुन-

(१) वाच्यत्वसम्बन्धेन सामानाधिकरण्यान्वयस्यासम्भवेनेत्यर्थः।

(२) अत्राऽङ्गस्य कार्यमिति न षष्ठी तत्पुरुषः । अतिरिच्छत्रमित्यत्र ह्रस्वत्वे कृते तुगनापत्तेः । किन्तु अङ्गाधिकारपरोऽत्राङ्गशब्दः । सस-

र्नाङ्गकार्यमिति न भवतीति। (अङ्गवृत्ते पुनर्वृत्तावविधिः)। इति हि परिभाषाकारः। अङ्गाधिकारीयकार्ये जाते पुनरन्यमङ्गाधिकारीयं कार्यं न भवतीत्यर्थः। एवञ्च जस्स्थानिकाम् रूपेऽङ्गाधिकारीये कार्ये जाते सति पुनरन्यमङ्गाधिकारीयं कार्यं शयादेशरूपं न स्यादिति नोक्तापत्तिलेशसम्भव इति तदाशयः। कथमेषा परिभाषा ज्ञापितेति जिज्ञासोदये ज्ञापनप्रकारं दर्शयितुमुपक्रमते—एषा हि परिभाषा (ज्यादादीयस) इत्याद्विधानेन ज्ञापितास्ति। तथा हि ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादित्याद्विधानं व्यर्थीभूतं परिभाषां ज्ञापयति। ननु ( द्वयोरेकस्य निर्द्धारणे डतरच् ) इत्यादिसूत्रनिर्देशादुक्तपरिभाषाऽनित्यत्वज्ञापनम्। किञ्चैकस्मिन्नङ्गोद्देश्यके कार्ये जाते न पुनरन्यमङ्गोद्देश्यकं कार्यमिति तदर्थकरणेन परिभाषाऽप्रवृत्तिः। किञ्च नेयं भाष्ये लक्ष्यसिद्धये क्वाप्याश्रितेति त्रितयहेतुभिरुक्तापत्तिवारणं परिभाषयाऽशक्यमिति शयादेशो दुर्वार एवेत्यभिमेत्य समाधानान्तरम्प्रदर्शयति—ङे प्रथमयोरामिति। नचात्र मकारान्तरप्रश्लेषे संयोगान्तलोपे झल्ग्रहणानुवर्तनात्। संयोगान्तझल एव लोपविधानेन मकारस्य झल्त्वाभावाल्लोपाप्राप्त्या तस्यश्रवणापत्तिर्दुर्वारेति वाच्यम्। ( ङेप्रथमयोरम्—शसो ने ) ति संहितापाठे सति तत्र मकारान्तरस्य प्रश्लेषेण लोपोपपत्तेः। नच प्रश्लेषस्यापि भाष्येऽदृष्टत्वात्पूर्वोक्तशयादेशापत्तिरूपदोषस्य तादवस्थ्यमेवेति वाच्यम्। सत्येवं ( सन्निपात ) परिभाषयैवोक्तापत्तिनिराकरणेनादोषादिति॥

---

स्यन्तेन सुप्सुपेति समासस्तथाच अङ्गाधिकारस्थे कार्ये कृते न पुनरङ्गाधिकारस्थं कार्यं भवतीत्यर्थः फलितः।

(१) अत्र भाष्यतत्त्वविदः—शेषविभक्तिभूतस्याऽमादे र्युष्मदादेश्च यः सन्निपातस्तेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः । नच ( सन्निपात ) परिभाषास्वीकारे सुटोऽपि सन्निपातविघातकत्वेन तथा स न स्यादिति वाच्यम् । सुटस्त्वाकमवयवत्वात्तेन सान्निपातविघाताऽभावेन साम इति सकारनिर्देशोपपत्तेः । आगमस्यागमिसम्बन्धिसन्निपातविघातकत्वाभावादेव ( ङ्मेजन्त ) इति सूत्रे ह्रस्वत्वं तुग्विधे ग्रामणिकुलमिति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे यदा ह्रस्वमात्रस्य तुगागमो न तदन्तस्य तदिदं प्रयोजनमिति कैयटेन व्याख्यातम् । मूलोक्तं तु न युक्तम् भाष्यानुक्तेः । अत एव ( नेतराच्छन्दसी ) ति सूत्रे ( नपुंसकादेशेभ्यो युष्मदस्मदो विंभक्त्यादेशा विप्रतिषेधेने ) ति वार्तिकं व्याख्याय तेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति सकृद्गतिन्यायादित्युक्तम् । भवन्नये तु पुनः प्रसङ्गस्यैवाभावाद्भाष्यप्रसङ्गतं स्पष्टमेव स्यात् । सन्निपातपरिभाषया श्यादेशप्रतिबन्धादेव तत्र युष्मदादेर्विंभक्त्यादेशस्य यूयं ब्राह्मणा इत्याद्य-

---

(१) ननु संहितापाठे ( त्यदादीनाम ) इति सूत्रस्थभाष्यमेव मानम् । तत्र—

टिलोपष्टावभावार्थः शेषे लोप इति स्मृतः ।
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥

इत्यत्र टाबभावस्यैव टिलोपफलत्वमुक्तन्नतु श्यादेशाभावस्य । लुप्तशिष्ट इत्यस्य लुप्ते सति यः शिष्टस्तस्मिन् सति कार्यस्य टावभावस्यसिद्धिरित्यर्थः । तत्र सन्निपातपरिभाषया टावभावोपपादने तु प्रकृतेऽपि संन्निपातपरिभाषयैव टावभावसम्भव इत्यभिप्रेत्याह–अत्रेति ।

वकाशप्रदर्शनं कृतम् । अन्यथा ( सन्निपात परिभाषया इत्यादेशप्रतिबन्धाभावे ) यूयं ब्राह्मणा इत्यादावपि जसः शीभावस्याऽत्र-काशप्रदर्शनस्य स्पष्टैवासङ्गतिः स्यात् । यूयमित्यादिप्रयोगकरणेन च भाष्यकृताऽत्र ( सन्निपात ) परिभाषाविषयत्वं सूचितम् । ( अङ्गवृत्त ) परिभाषयाऽपि वारणमसङ्गतम् । तस्या अङ्गसम्बन्धिकार्यविषयत्वेन ज्ञापकसाजात्यादङ्गाधिकारीये कार्ये कृते पुनरङ्गाधिकारीयाङ्गसम्बन्धिकार्यान्तराविधिरिति तदर्थात् । सूत्र-भाष्यस्वरसोऽप्येवम् । वस्तुतो नेयं परिभाषा लक्ष्यसंस्कारोपयोगिनि । तथा सति द्वयोरित्यादिनिर्देशासङ्गतेः । ( अङ्गवृत्त ) परिभाषया अनन्यथासिद्धप्रयोजनसाधकत्वाभावादेव भाष्ये किमेतस्या ज्ञापने प्रयोजनमिति प्रश्ने ( पित्रे गुणप्रतिषेधो वक्तव्य ) इत्येव प्रयोजनमुक्तन्न तु प्रयोगसिद्धिरूपप्रयोजनमुक्तमित्याहुः ।

आद्ये ( शेषे लोपः ) अन्त्यलोप एव । तत्राङ्गवृत्त-परिभाषयैत्वं न । अभ्यं तु पक्षद्वयेऽपि साधुरिति । ( भ्यसो भ्यमि ) ति सूत्रभाष्ये भ्यमादेशाऽभ्यमादेशयोर्मध्ये क इति सन्दिह्य यद्यत्र भ्यमादेशस्तदा ( शेषे लोप ) इत्यन्तलोपे एत्वं प्राप्नोति, अथाऽभ्यमादेशः शेषे लोपष्टिलोप इत्यन्तोदात्तनिवृत्तिस्वरः प्राप्नोतीत्युक्त्वा, यथेच्छसि तथास्त्वित्युक्तमित्यभिप्रेत्यैव प्रागुक्तो मूलग्रन्थः । ननु भ्यमादेशे अन्त्यलोपपक्षे ( शेषे लोप ) इति सूत्रेण दकारलोपे युष्माभ्यमित्यादौ ( बहुवचने झल्येदि ) त्यनेनैत्वं दुर्वारमिति चेन्न । ( अङ्गवृत्ते पुनर्वृत्तावविधिरि ) ति परिभाषया तदप्राप्तेः । नचाङ्गवृत्तपरिभाषाया ( द्वयोरि ) त्यादिनिर्देशादनित्यत्वादुक्तस्थलीयोक्तापत्तेस्तादवस्थ्यमेवेति वाच्यम् । सत्येवं ( सन्निपात ) परिभाषयैव तद्वारणात् । अभ्य-

मादेशस्तूभयपक्षे साधु नात्रादेशे कस्मिंश्चिदपि पक्षे एत्वप्राप्तिः । नचाभ्यमादेशेऽन्त्यलोपपक्षेऽकारोच्चारणसामर्थ्येन बाधिते पररूपे सवर्णदीर्घो दुर्वार इति वाच्यम् । एत्वनिवृत्त्यर्थमकारोच्चारणे चरितार्थे तस्य क्षीणसामर्थ्यात्पररूपं बाधितुमशक्यतया सवर्णदीर्घात्प्राक् पररूपस्यैव प्राप्तेः । पररूपेण सवर्णदीर्घबाधनद्वाराऽभ्यमित्यत्राकारोच्चारणापेक्षया ( अङ्गवृत्त ) परिभाषयैव सवर्णदीर्घव्यावृत्तेरौचित्यादकारोच्चारणं व्यर्थमेवेति वाच्यम् । अकारोच्चारणस्याङ्गवृत्तपरिभाषाऽनित्यत्वज्ञापनेन सार्थक्यात् । नचोभयपक्षमध्येऽन्त्यलोपपक्षे युष्यभ्यमित्यत्र युष्मोत्तराऽकारस्य ( एकादेश उदात्तेनोदात्त ) इत्यनेनोदात्तत्वं प्राप्नोति । टिलोपपक्षे चाभ्यमोऽनुदात्तत्वाद्युष्मोत्तराऽकारस्यानुदात्तत्वमिति फलभेदादुभयपक्षेऽभ्यादेशस्य साधुत्वाऽभिधानमसङ्गतमिति वाच्यम् । यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थक-( अनुदात्तस्य च यत्रोदात्तलोप ) इति सूत्रेण युष्मोत्तराऽकारस्योदात्तत्वस्यैव विधानात्फलभेदाभावेन तस्य साधुत्वाऽभिधानसङ्गतेरिति दिक् ॥

ननु आकमादेशात्प्राक् विभक्तेरनादेशत्वात् ( योऽची ) ति यत्वप्राप्तौ लोपस्य यत्वनिमित्तविभक्तीतरविभक्तिनिमित्तापेक्षितत्वादन्त्यलोपेऽप्राप्तेऽवर्णान्तत्वाऽभावेन सुडागमाप्रसक्त्या साम इति ससुटकनिर्देशो व्यर्थः सूत्रश्चासङ्गतमिति सन्देहं निराकर्तुं समाधानमाह—भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देश इति । भाविन इत्यस्य आकामादेशे कृते ( शेषे लोप ) इत्यनेनान्त्यदकारे लुप्ते सत्यकारान्तत्वेन प्राप्तस्येत्यर्थः । ( अस्तेर्भूरि ) त्यनेनाऽऽर्द्धधातुकविषये भुवः प्रयोगोऽस्तेश्चाप्रयोगो बो-

ध्यते यथा तथा सामः प्रसङ्गे आकमित्यनेन सुडामोरत्यन्तमप्रयोगो बाध्यते। न च युष्मद् आम् अस्मद् आमित्यवस्थायां साम इति स्थानिनोऽभावादाकमादेशाऽप्राप्तौ यत्वे कृतेऽन्त्यलोपाप्रसङ्गे सुटोऽसम्भवात्साम इतिस्थानिस्वरूपस्य सर्वथाऽसिद्धिरिति वाच्यम्। भाविनः सुटो निवृत्तये ससुट्कनिर्देशसामर्थ्यादाम्येव साम्त्वारोपादुक्तस्थानिस्वरूपस्य सिद्धेः। एवञ्च तत्राऽऽकमादेशप्रवृत्तौ स्थानिवद्भावेन साम्त्वस्यैवानयनं नत्वाम्त्वस्यैवेति न सुडागमापत्तिसम्भवः।

केचित्तु। आमोऽपि तन्त्रेण सामि सत्त्वेन प्रागाकमादेशे तदुत्तरमन्त्यलोपे सुडागमे तत्स्थानिकाऽऽकमादेशे च न पूर्वोक्तकाचिदनुपपत्तिरित्याहुस्तदसङ्गतम्। गौरवभिया तन्त्रस्याऽनाश्रितत्वात्। ( आम आकमि ) येतावता सूत्रेणैव प्रयोगोपपत्तौ साम इति सकारोच्चारणमकिञ्चित्करमिति शङ्कां निराकर्तुमाह— भाविनः सुटो निवृत्त्यर्थं ससुट्कानिर्देश इति। आकमि स्थानिवद्भावेनाऽऽम्त्वात्प्राप्तस्य सुटो निवृत्तये ससुट्कानिर्देश इति सामः स्थानिकाऽऽकमादेशे तु स्थानिवद्भावेन साम्त्वमेव नाम्त्वमित्यदोषः।

वस्तुतस्तु—( आमो डाकमि ) तिन्यासे आम्स्थानिकडाकम्विधानेन डित्वविधानसामर्थ्येन टिलोपेनेष्टसिद्धौ प्रयासोऽयं व्यर्थः। न च आकमि दीर्घोच्चारणं व्यर्थमाकारोच्चारणेनैव सिद्धेरिति वाच्यम्। अकारोच्चारणे पररूपापत्तेः। न च कमित्येव सिद्धावकारोच्चारणसामर्थ्यात्पररूपं न स्यादिति वाच्यम्। एत्वनिवृत्त्यर्थमकारोच्चारणस्य चारितार्थ्येन सामर्थ्योपक्षीणत्वात्पररूपबाधाऽसम्भवेन तदापत्तेर्दुर्वारत्वादिति दिक्॥

ननु ( युवावौ द्विवचने ) ( त्वमावेकवचने ) इति सूत्रद्वयस्थयोर्द्विवचनैकवचनशब्दयोरर्थपरत्वे फलन्दर्शयितुमाह—

(१) समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि ॥ १ ॥

इत्यादि । कारिकास्थस्य द्व्येकत्ववाचिनीत्यस्य द्वित्वैकत्वविशिष्टवाचिनीत्यर्थः । समासार्थ इत्यस्य मुख्यविशेष्यमित्यर्थः । अन्यसंख्यायुक्तश्चेदित्यस्य युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः ।

ननु पदात्परयोः षष्ठ्यादिविभक्तिविशिष्टयो र्युष्मदस्मदोः स्थाने वान्नावित्यादेशौ भवत इत्यर्थेनैव प्रयोगोपपत्तौ ( युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावावि ) त्यत्राऽपदादावित्यधिकारः किमर्थ इत्याशङ्कते—अपदादौ किमिति । समाधानमाह—

वेदैरशेषैः सम्बेद्योऽस्मान्कृष्णः सर्वदाऽवतु ।

इति । अयम्भावः, सूत्रेऽपदादावित्यस्याऽसद्भावे एकादेशस्य पूर्वान्तवद्भावद्वारा पूर्वपदत्वेन ( एकदेशविकृतमनन्यवदि ) ति न्यायेन स्मानित्यस्य द्वितीयान्ताऽस्मच्छब्दत्वसत्वेनाऽऽदेशो दुर्वारः स्यादत उक्ताधिकारोऽत्राऽऽवश्यकः । सति च तस्मिन् अस्मानित्यस्याऽपदादावविद्यमानत्वेन नादेशापत्ति दोषः सम्भवति ।

केचित्तु—अस्मानित्यस्य स्थाने नसादेशे जाते नः कृष्णः

---

(१) द्व्येकत्ववाचिनी युष्मदस्मदी समस्यमाने सति समासार्थः अन्यसंख्यश्चेत्तदा युवावौ त्वमावपि स्त इति कारिकान्वयः ।

सर्वदाऽवत्विति पदादित्वापत्तावुपजीव्यविरोधेन नादेश इति । स्मानित्यस्याऽपदादौ विद्यमानत्वेनादेशः, सति चादेशेऽपदादित्वस्य विघातः पादादित्वस्य चापत्तिरित्युपजीव्यविरोधः स्पष्ट एवेत्यलम् ।

ननूक्तसूत्रेण प्राक्दर्शितयुक्त्या षष्ठीचतुर्थीद्वितीयान्तानामेवादेशाः प्राप्ताः स्थग्रहणं च सूत्रेऽकिञ्चित्करमेवेति शङ्कां दूरीकर्तुमाह-स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेवेति । अत्राऽहानौ स्थशब्द इति भावः । नचाहानौ स्थशब्दसद्भावे किम्मानमिति वाच्यम् । वक्ष्यमाणवाल्मीकीयरामायणश्लोकस्यैव तत्र मानत्वात् । तथाहि—

> समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ।
> नायं संकुचितः पन्था येन वाली हतो गतः ॥

इति । अत्र श्लोके स्थाधातोरहानौ विद्यमानत्वात्पूर्वसन्दर्भसङ्गतिः । समये तिष्ठेत्यस्य समयं मा हासीरित्यर्थः ।

उक्तसूत्रस्थस्थग्रहणस्य फलं दर्शयितुमाह-नेह युष्मत्पुत्रो ब्रवीतीति । युवयो र्युष्माकं वा पुत्र इत्यर्थः । वृत्तौ संख्याया विशेषाप्रतीतेर्भाष्ये स्पष्टत्वेऽपि सम्बोध्यत्वेनैवानेकव्यक्त्यवगत्या द्वित्वादेरेकत्वस्य चाऽभानान्न त्वमावादेशौ । विग्रहे तु बहुत्वव्याप्यतावच्छेदकधर्मावच्छिन्नवाचकतत्तच्छब्दसत्त्वेन संख्याविशेषभानाद्भवत्येव द्विवचनादि । तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वमित्यवधेयम् । अस्यायमभिप्रायः, उच्चारितः शब्दः प्रत्यायक इति रीत्या यत्र विशेषधर्मावच्छिन्नवाचकविभक्तिश्रवणन्तत्र तत्तद्धर्मावच्छिन्नविषयकशाब्दबोधो भवति । यथा सरासिजमित्यादौ । तत्र रूढिस्वीकारादेतद्घटकसरःपदादिशः

क्यार्थस्य भाने तु तत्तद्विभक्त्यर्थसंख्याभानेऽपीष्टापत्तिः । पदान्तरार्थाभानस्यानुभवसिद्धत्वे तु विभक्त्यर्थस्याप्यभानात् स्तोकान्मुक्त इत्यादौ विभक्त्यर्थस्य भानं बोध्यम् । यत्र तु विभक्तेरश्रवणान्न तत्र संख्याविशेषस्य भानम्भवति किन्तु अभेदैकत्वसंख्याया एव भानम् । अजहत्स्वार्था वृत्तिरिति पक्षेऽपि पूर्वपदस्य संख्याविशेषबोधकत्वे यत्र विनिगमकसद्भावस्तत्र संख्याया अपि प्रतीतिः । यथा द्विपुत्रो, मौद्रिको, मासजातः, तावकीन इत्यादौ । प्रथमे द्विशब्द एव बोधकः । द्वितीये एकेन मुद्रेन क्रयणाभावाद्बहुत्वावगति र्न तु तद्व्याप्यसंख्यायाः । तृतीये कालविशेषबोधनाय मासपदप्रयोगादस्यैव संख्याविशेषभानम् । चतुर्थे तवकादेशकरणादेकत्वावगतिः । युष्मत्पुत्र इत्यत्र तु तादृशगमकाभावान्न द्वित्वस्य नाप्येकत्वस्य भानमिति । न च विग्रहवाक्यजन्यशाब्दबोधे यदि संख्या विशेषभानं तादृशविग्रहसम्बन्धिवृत्तौ च तदभानं तदा वृत्तिविग्रहयोः समानार्थत्वभङ्ग इति वाच्यम् । विग्रहवाक्यजन्यशाब्दबोधीया या विभक्त्यर्थसंख्यावृत्तिविषयताभिन्ना प्रकारता तदवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपिता या तादृशविशेष्यतावच्छेदकावच्छिन्नविशेष्यता तच्छालिशाब्दबोधजनकत्वमेव वृत्तिविग्रहयोः समानार्थत्वमिति स्वीकारात् । विग्रहवाक्यजन्यशाब्दबोधे संख्याविशेषभानादेव वध्वोरगारं बध्वगारमिति प्रगृह्यसंज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय त्वत्पुत्र इति न प्रत्युदाहृतम् । प्रतीकस्थं प्रत्युदाहरणं सङ्गमयति युष्मत्पुत्रो ब्रवीतीत्यत्र विभक्त्यश्रवणादादेशो न भवति । न च प्रत्ययलक्षणेन विभक्तिसत्त्वादादेशो दुर्वार इति वाच्यम् । न लुमताङ्गस्येति निषेधात् । किञ्च प्रत्यय-

लक्षणेन विभक्तिबुद्धावपि वस्तुतस्तदसत्त्वाच्च । सति तु स्थग्रहणे सामर्थ्याद्वस्तुतो विभक्तिसद्भाव एत्वादेशविधानादित्यलम् ।

ननु शब्दशास्त्रे किम्वाक्यलक्षणमित्याह—एकतिङ्वाक्यमिति । तिङः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तिङन्तग्रहणम् । तथा चैकं तिङ् ( तिङन्तं ) यस्येति बहुव्रीहिः । अर्थादेकतिङन्तघटितं वाक्यमित्यर्थः । अत एव पचतीत्येतन्मात्रस्य न वाक्यत्वम् । नचैकतिङन्तघटितस्यैव वाक्यत्वेन पश्य मृगो धावतीत्यस्य तिङन्तद्वयघटितत्वादेकतिङन्ताघटितत्वेनैकवाक्यत्वं न स्यादिति वाच्यम् । मूलोक्तलक्षणस्य स्वशास्त्रकार्योपयोग्येकवाक्यत्वलक्षणत्वेन तत्रादोषात् । वस्तुतः एकतिङन्तार्थनिष्ठमुख्यविशेष्यताकबोधजनकं वाक्यमिति लक्षणम् । तथा च पश्य मगो धावतीत्यादौ नाव्याप्तिप्रसङ्गः । मूलोक्तलक्षणस्य स्वशास्त्रकार्योपयोगित्वादेव ( तिङ्ङतिङः ) इति सूत्रेऽतिङिति प्रत्याख्यातम्भाष्ये । लौकिकवाक्यत्वञ्च—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।

इत्यमरकोशोक्तम्बोध्यम् । अत्र वाशब्दश्चेदर्थे कारकान्विताक्रिया चेद्बोध्येतिशेषः । तेन दश दाडिमानि षडपूपा इत्यादिनिरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङ् च सुप्तिङन्तं सुब्विशिष्टं तिङन्तं सुप्तिङन्तं तेषामेकशेषः । तेन कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानान्त्रयाणामपि वाक्यत्वसिद्धिः । तत्र सुबन्तचयो देवदत्तेन शयितव्यम् । द्वितीयं पचति भवतीत्यादि । तृतीयं चैत्रः पचतीत्यादि । ओदनं पचेत्यादि च । नात्र समर्थपरिभाषाप्रवृत्तिः तस्या एकार्थीभावविषय एव प्रवृत्तेरभ्युपगमात् ।

ननु यथा ( तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यामि ) दं सूत्रं तृतीयया निर्दिष्टं तथैव ( नचवाहाहैवयुक्तैरि ) ति तृतीयानिर्देशादेव सिद्धे युक्तग्रहणमन्यार्थमित्यभिप्रेत्याह—युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासम्बन्धे तु आदेशः स्यादेवेति । साक्षाद्योग इत्यस्य युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । परम्परासम्बन्धे इत्यस्य स्वार्थाश्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः । चादयो यत्र युष्मदस्मदर्थगतान् समुच्चयादीन् द्योतयन्ति तत्र युष्मदस्मदोश्चादिभिः सहार्थद्वारा साक्षाद्योगस्य सत्वान्निषेधः । यत्र नैतादृशो योगो नायं निषेधस्तत्रेति बोध्यम् ।

ननु ( न चवाहाहैवयुक्ते ) इति सूत्रे युक्तग्रहणसद्भावात्तेन सामर्थ्यात्साक्षाद्योग एव निषेधोऽयन्न तु परम्परासम्बन्धेऽपीति ज्ञापनात्तत्रैव भवति निषेधः । पश्यार्थैश्चानालोचने ) इत्यत्र तु युक्तग्रहणाऽभावादुक्तज्ञापनासम्भवेन परम्परासम्बन्धेऽपि निषेध इत्याह—परम्परासम्बन्धेऽप्ययं निषेध इति ।

इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च नेति । अग्ने तव देवाऽस्मान्पाहीत्यादौ सम्बोधनपदस्यामन्त्रितसंज्ञाविधानादविद्यमानवद्भावे जाते पदात्परत्वाभावान्न युष्मदस्मदोरादेशः । एवमग्ने नयेत्यादौ तिङ्ङतिङ इति तिङन्तनिघातो न, अग्ने इन्द्र अग्ने वरुणेत्यादौ च न ( आमन्त्रितस्य चे ) त्यामन्त्रितनिघात इति बोध्यम् ॥

सर्वदा रक्ष देव न इत्यत्र त्विति । नन्वत्र देवेति संबोधनपदस्य ( सामन्त्रितम् ) इत्यनेनामन्त्रितसंज्ञाविधानेन ( आ-

मन्त्रितं पूर्वमविद्यमानवदि ) ति सूत्रेणाऽविद्यमानवद्भावात्पदात् परत्वाऽभावेनाऽस्मदः स्थाने नसादेशो न स्यादिति चेन्न । देवे-त्यस्याऽविद्यमानवद्भावेऽपि रक्षशब्दाश्रयणेनादेशोपपत्तेः । एव-मेव ( इमं मे गङ्गे यमुने ) इति मन्त्रे सम्बोधनंपदेष्वविद्यमानव-द्भाववत्स्वादेशाऽप्राप्तौ मेशब्दमाश्रित्यादेशो जात इति भावः ।

अच इति लोपविषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते ( अकृतव्यूह ) परिभाषयेति । ननु प्रत्यञ्चशब्दस्य द्विती-याबहुवचने शसि प्रति अच असिति स्थितौ प्रतिघटकेकारस्य ( इको यणची ) ति यणि प्राप्ते, अचोऽकारस्य ( अच ) इत्य-नेन लोपे च प्राप्ते सति लोपस्य बहिर्भूतनिमित्तकतया बहिरङ्ग-त्वात्तदपेक्षया यणोऽन्तर्भूतनिमित्तकत्वादन्तरङ्गत्वेन लोपं बाधि-त्वा यणादेशः स्यादिति चेन्न । अन्तरङ्गशास्त्रप्रवृत्त्युत्तरमन्तरङ्ग-शास्त्रनिमित्तस्य बहिरङ्गशास्त्रेण विनाशे पश्चाद्भविष्यति सति प्राङ्नान्तरङ्गशास्त्रं प्रवर्तते इत्यर्थिकया ( अकृतव्यूहाः पाणिनी-याः ) इति परिभाषयाऽन्तरङ्गस्य यणोऽप्राप्तौ लोपे दीर्घे च सं-तीष्टरूपसिद्धेः । न च भाष्ये (अकृतव्यूह) परिभाषाया अदृष्ट-त्वादनयोक्तकार्यं कर्तुमशक्यत्वेन प्राक्प्रदर्शितदोषो दुर्वार एवेति वाच्यम् । एतत्परिभाषाऽभावे लुप्ताऽकारनकारेऽञ्चतौ परेऽन्तर-ङ्गशास्त्रस्य न प्रवृत्तिरित्यर्थकेन ( चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः ) इति भाष्यवार्त्तिकेनैवोक्तदोषपरिहारा दिति भावः ॥

आन्तरतम्यादुभ्रस्वस्य उः दीर्घस्य च ऊ इति ।(अदसो-ऽसेर्दादुदो मः) इति सूत्रे उपदे ह्रस्वदीर्घयोः समाहारद्वन्द्वे ह्यन्तत्वे न ह्रस्वस्य पूर्वनिपाते सवर्णदीर्घे च जाते नपुंसकह्रस्वत्वम् । तेन ह्रस्वदीर्घयोरुभयोर्ग्रहणमिति प्राञ्चः । वस्तुतस्तु उस ऊसित्यनयो

द्वन्द्वे सोर्लोपे घ्यन्तत्वेन ह्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वे सवर्णदीर्घे च प्राप्ते दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वात् तं बाधित्वा नित्येऽ परनिमित्तकत्वेनान्तरङ्गे च ह्रस्वे पूर्वं कृते ततः सवर्णदीर्घे उ इतिरूपासिद्धेः । अत एव ( ऊकालोऽज्झ्रस्वदीर्घप्लुतः ) इति सूत्रे उकाल इति न कृतम् । तथा च ( भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती ) ति परिभाषयोपपत्तिः । ज्ञापिता चेयं परिभाषा ( दिव उत् ) ( ऋत उदि ) त्युभयत्र तपरकरणेनेति बोध्यम् ॥

ननु ( ष्यङः सम्प्रसारणं पुत्रपत्योरि ) ति सूत्रे भाष्ये ( अनन्त्यविकारेऽन्त्यसदेशस्ये ) ति परिभाषा पठिता । अन्त्यसदेशाऽन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैव भवति कार्यमिति तदर्थः। अनन्त्यविकार इति हि तत्र लिङ्गन्तामार्थतः पठति—अन्त्यबाधे इति । अन्त्यस्य बाधे कार्याप्राप्तावर्थादनेकान्त्यस्य प्राप्तावित्यर्थः । उक्तसूत्रभाष्ये पठितायाः परिभाषाया अन्त्यसदेशाऽनन्त्यसदेशयोरित्यर्थीकरणे अनन्त्यस्य विकारो येन शास्त्रेण तत्रान्त्यसदेशस्येत्युपतिष्ठते इत्येव परिभाषार्थस्य जायमानत्वेन ( णो नः ) ( धात्वादेः षः सः ) इति सूत्रद्वयेऽन्त्यसदेशस्येत्यस्योपस्थित्या ( णो न ) इतिसूत्रेण नेतेत्यादिष्वेव नादेशः स्यान्न तु नमतीत्यादावपि । तथा ( धात्वादेः षः सः ) इतिसूत्रेण सत्वं सोतेत्यादावेव स्यान्नतु सिञ्चतीत्यादावपि । न चेष्टापत्तिरिति वाच्यम् । ( नेर्गदनदे ) ति सूत्रे नदेत्यस्य ( उपसर्गात्सुनोती ) ति सूत्रे स्तौतिसेधेति निर्देशस्यानुपपत्तिप्रसङ्गादतोऽन्त्यसदेसाऽनन्त्यसदेशयोरिति प्रागुक्तोऽर्थोऽवश्यमभ्युपगन्तव्य इति स्पष्टम्भाष्ये । ( अल्लोपोऽनः ) ( अचः ) ( सान्तमहतः संयोगस्ये ) त्यादावनेकक्लिष्टकल्पनापेक्षया

न्याय्येयं परिभाषा। किञ्चाकडारीयभपदसंज्ञाविषये तु यथोद्देशपक्षस्यैव सत्त्वेन कार्यकालपक्षस्यासत्त्वादतो भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम्। परत्वेन पदसंज्ञाबाधकत्वानुपपत्तेः। राज्ञ इत्यादौ नलोपस्याऽसिद्धत्वेन प्राक् ( अल्लोपोऽन ) इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च। तस्मादाकडारस्थसंज्ञासु यथोद्देशपक्षस्यैवाश्रयणमावश्यकम्। तथा च न तत्र यजादिस्वादिपरो योऽनिरित्यर्थस्य लाभः। नचैवं ( प्यङः सम्प्रसारणमि )तिसूत्रस्थभाष्येण ( कार्यकालं संज्ञापरिभाषं ) भस्येत्युपस्थितमिदं भवति, यचि भमिति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः। अनाकारमित्येतेन विरोधः स्यादिति वाच्यम्। तस्य भाष्यस्यैकदेशयुक्तित्वेनादोषात्। अङ्गांशे यजादिप्रत्ययस्योत्थिताकांक्षत्वेन तेनाऽनो विशेषणायोगश्च। भाष्यकृतोऽभिमतैव परिभाषा नतु तस्याः प्रत्याख्यानमभिमतम्। अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्येति भाष्ये उपसंहृतमिति भावः। केचित्तु—कार्यकालपक्षे नलोपैकवाक्यतापन्नपदत्वस्य भत्वेन बाधो न स्यादिति युक्तम्। आकडारादेकेत्येव सिद्धे संज्ञापादनेन सम्यक्ज्ञायमानेत्यर्थेन कार्यार्थम्प्रधानदेशे गमनेऽप्युपदेशीयत्वव्यवहारन्न त्यजतीत्यर्थो विवक्षितः। तथा च भसञ्ज्ञया पदसञ्ज्ञाबाधः सुघट एवेत्याहुस्तन्न, उपदेशदेशीयत्वव्यवहारत्यागेऽपि समानकालिकप्राप्तयो र्भत्वपदत्वयो र्बाध्यबाधकभावो युक्तः। यत्रादौ भसञ्ज्ञायां तत्प्रयुक्तकार्ये च कृते पश्चात्पदसञ्ज्ञा प्राप्ता सा पूर्वजातभसञ्ज्ञया बाधयितुन्न शक्यते भसञ्ज्ञायाः पूर्वजातत्वात्। तथा च प्रकृते नलोपापादनं युक्तमेव। किञ्च

सञ्ज्ञायाः कार्यार्थत्वेन यत्र प्रसञ्ज्ञायाः स्त्रीयं किञ्चिच्छास्त्रीयं कार्यं न साधनीयमस्ति तत्र तस्याः प्रवृत्ति र्न स्यात् । एवञ्च ( स्वादिष्वि )ति सूत्रेण विधीयमानायाः पदसञ्ज्ञायाः प्रवृत्तिः स्यादेव । सत्येवं श्वलिहा, गोदुहा, वाचेत्यादौ ढत्वघत्व–कुत्वादिकार्याणामापत्तिः स्यादेवेति दिक् ॥

अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः । तत्वञ्च, अन्त्यवर्णतद्वर्णयोरितराऽव्यवधाने भवति । चलीक्लृप्यत इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशसम्भव इति न तत्रैतस्याः परिभाषायाः प्रवृत्तिः । न च चलीक्लृप्यत इत्यत्रैवान्त्यसमानदेशत्वस्य प्रदर्शनमयुक्तम्—हंमशिरांसित्यत्राप्यन्त्यवर्णः सकारस्तद्वर्णो रेफस्तयो र्नकारो व्यवधायकोऽस्तीति व्यवधानाभावघटितायाः परिभाषाया अप्रवृत्त्यापत्तौ हंसाकारस्यापि दीर्घत्वं स्यादिति वाच्यम् । तत्तत्कार्यविधायकशास्त्रोद्देश्यघटको योऽन्त्यवर्णो यश्च तत्समानदेशत्वेनाभिप्रेतो वर्णस्तदितरस्याच्त्वपर्याप्त्यधिकरणाविषयस्य विवक्षितत्वात् । तथा च नकारस्याच्त्वपर्याप्त्यधिकरणाविषयत्वेन तादृशो यो वर्णोऽकारादिस्तदव्यवधानस्य प्रकृते सत्त्वान्न काचिदनुपपत्तिः । अन्त्यसदेशलक्षणे इतराऽव्यवधाननिवेशादेव ( न सम्प्रसारणे सम्प्रसारणमि ) त्येतत्सूत्रोदाहरणीभूतस्य विद्ध इत्यादिप्रयोगाणां नानया परिभाषया सिद्धिः । उक्तसूत्रोदाहरणस्यानयाऽसिद्धेरेव ( न सम्प्रसारणमि ) ति सूत्रस्य सार्थक्यम् । नचैवमुक्तभाष्यविरोध इति वाच्यम् । नैतस्याः परिभाषायाः प्रयोजनानीति तत्सूत्रस्थभाष्यस्य, एतत्सूत्रसाध्यानि नास्याः परिभाषाया भवन्ति अन्त्यसदेशत्वाऽभावादि-

त्यर्थकरणेन विरोधपरिहारादिति भावः ।

ननु ( अदसोऽसे र्दादुदो मः ) इत्यत्रासेरिति पदस्य, थकारस्य यस्य स्थाने अः सोऽसिस्तस्याऽसेरिति व्याख्यानकरणेन यत्र त्यदाद्यत्वन्तत्रैव मुत्वमित्यभिप्रायेणाह—इति पक्षे तु अदद्र्यङिति । न च ( सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती ) ति न्यायेनाऽसेरित्यस्य सकृदुच्चरितत्वादर्थद्वयं न स्यादिति वाच्यम् । सूत्रस्य तन्त्रेणार्थद्वये तात्पर्यावधारणात् । तत्र लक्ष्यानुरोधेन व्यवस्था बोध्या । प्रमाणञ्चात्रोपन्यस्यति ।

उक्तञ्च—

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

इति । कारिकायां लत्ववदिति दृष्टान्तस्य ( कृपो रो लः ) इति सूत्रेण चलीक्लृप्यत इत्यत्र यथा रीगृकारोभयरेफस्य लत्वं भवति तथेत्यर्थः । अदद्र्यङ्शब्देऽदमुयङिति रूपवादिमतं न्याय्यम् । लत्वे उक्तरीत्यैतन्न्यायप्रवृत्तावप्यत्र तदप्रवृत्तौ मानाऽभावात् । अत एव भाष्ये ( अदसो नोऽस्तेरि ) ति वार्त्तिकमत्याख्यानायाऽथवाऽसेरिति पदमुक्त्वा यद्येवममुमुयङिति न सिध्यति, अदद्र्यङिति प्राप्नोति, अदमुयङिति भवितव्यम्, अनन्त्यविकारेऽन्त्यसदेशस्येत्युक्तम् । अत्रेति प्राप्नोतीत्युक्त्या च अदद्र्यङिति मुत्वाघटितरूपेऽसम्मतिरुक्ता । इति भवितव्यमित्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्याहुरिति दिक् ॥

विष्वग्देवयोः किमिति । ननु ( विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ) इतिसूत्रे विष्वग्देवयोरग्रहणेऽपि सूत्रस्थचशब्दस्य समुच्चयार्थकत्वात्तेन सर्वनाम्न उपस्थित्या सर्वनाम्न एव

टेरद्र्यादेशे तदन्यशब्दटेस्तदप्राप्त्या मूलोक्तप्रत्युदाहरणमयुक्तमिति चेन्न। सूत्रस्थचशब्दस्याऽन्यस्याप्युपलक्षणत्वात्सर्वनामव्यतिरिक्तशब्दस्यापि टेरद्र्यादेशप्राप्तौ मूलोक्तप्रत्युदाहरणस्य युक्तत्वादित्यभिप्रेत्य प्रत्युदाहरणमाह–अश्वाचीति॥

नन्वत्रोत्तरपदाधिकारादञ्चुरूपे उत्तरपदे विष्वग्देवशब्दयोष्टेरद्र्यादेश इत्यर्थे विष्वगञ्चनमित्यादौ दोषाऽभावात्सूत्रेऽप्रत्ययग्रहणमकिञ्चित्करमित्यभिप्रेत्य पूर्वपक्षमाविर्भवति–अप्रत्यये किमिति। तमुत्तरयति–विष्वगञ्चनमिति। अप्रत्ययग्रहणमुक्तरीत्या व्यर्थीभूय ज्ञापयति धातुग्रहणे तदादिविधिरिति। तथा चाऽञ्चादावुत्तरपदेऽद्र्यादेश इत्यर्थे विष्वगञ्चनमित्यत्र प्राप्ताया अद्र्यादेशापत्तेर्वारणार्थमप्रत्ययग्रहणस्यावश्यकत्वेन स्वांशे चारितार्थ्यं जातम्। उक्तार्थज्ञापनस्य फलन्तु (अतः कृकमी) ति सूत्रे तदादिविधौ करोत्यादावुत्तरपदे सत्वसिद्धिरूपमत आह–तेनायस्कार इत्यादि। ज्ञाप्यवचनस्याऽभावे तु (अतः कृकमी) तिसूत्रे (नित्यं समासेऽनुत्तरपदस्थस्य) तिसूत्रात्समासग्रहणानुवर्तनात्तेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तावयस्कृदित्यादावेव सत्वं स्यान्नत्वयस्कार इत्यादाविति भावः॥

समः समि। नन्वत्र (समो मिङि) त्येव लाघवात्सूत्रमस्तु। ङित्वात् (ङिच्च) तिसूत्रेणान्त्यस्य मकारस्य स्थाने म्यादेशे सतीष्टसिद्धेरिति चेन्न। परिभाषासूत्रज्ञानकृतगौरवापत्तेः। न च लाघवात् (सम इगि) त्येव सूत्रमस्तु (आद्यन्तौ टकितावि) त्यनेन कित्वादन्त्यस्यागमे सतीष्टोपपत्तेरिति वाच्यम्। पूर्ववदत्रापि परिभाषाज्ञानकृतगौरवापत्तेः। न च (स-

मः समिरि ) तिमूलोक्तन्यासेऽपि ( अनेकाल्शित्सर्वस्ये ) ति-परिभाषाज्ञानस्यापेक्षासत्त्वात्साम्यमेव गौरवापत्तेरिति वाच्यम्। ( मिङि ) तिन्यासे इत्संज्ञायाः ङिच्चेत्यस्य चापेक्षया ( इगि ) तिन्यासे च ( आद्यन्तावि ) त्यस्य चापेक्षया गौरवसत्त्वेन मूलोक्तन्यासे तु केवलमनेकालित्यस्यैवापेक्षया लाघवात्। न च ( अव्ययसर्वनाम्नामि ) ति समोऽकचि कृते सम्यादेशपक्षे ककाराश्रवणम्भवति, मिङादेश इगागमपक्षे वा ककारस्य श्रव-णमिति रूपेऽपि विशेषस्य स्पष्टत्वात्कथं परिभाषाज्ञानकृतगौर-वस्यैवाऽभिधानमिति वाच्यम्। प्रकृतसूत्रभाष्येऽकचि कृतेऽपि समिरिति समुदायरूपादेशस्य ककाराश्रवणरूपफलत्वेन न्यून-तापरिहाराय यत्र कुत्साविवक्षा तत्रापि प्रथममुत्तरपदनिमित्त-कादेशस्ततोऽकजिति स्वीकारात्। अथत्रोत्तरपदार्थे समशब्द-समभिव्याहारेण प्रकर्षप्रतीत्यैतादृशविषये कुत्सादिविवक्षैव नेति दिक्॥

नतु तिर्यञ्चशब्दस्य द्वितीयाबहुवचने शसि नलोपेऽल्लोपे च जाते तिरस् च ई इति स्थितौ श्चुत्वे कर्तव्येऽल्लोपस्य स्थानि-वद्भावेनानयनादकारेण व्यवधानात् श्चुत्वाप्रसक्तौ रूपमिष्टन्न स्यादिति चेन्न। ( पूर्वत्राऽसिद्धीये न स्थानिवदि ) त्यनेन स्थानिवद्भावनिषेधेनेष्टरूपसिद्धेरित्याह-तिरश्च इति॥

अत्वसन्तस्य चाधातोः। त्वर्थेऽत्र च शब्दः। अतु इति लुप्तषष्ठीकं पृथक्पदम्। तुशब्दसामर्थ्यादधातोरित्यसन्तस्यैव विशेषणन्तदाह-धातुभिन्नेति। धातोरित्यस्यासन्तविशेषणत्वा-देव ( उगिदचां सर्वनामस्थाने चाधातोरि ) ति सूत्रे गोमन्तमि-च्छति गोमत्यति ततोऽप्रत्ययो गोमानिति भाष्यप्रयोग उपपद्यते।

ननु सूत्रेऽतुशब्दस्य पृथक्पदत्वेऽपि तस्याङ्गविशेषणतया यथाऽत्वन्तस्येत्यर्थलाभस्तथाऽसन्तस्येत्यस्याऽपि लाभ सौत्रमन्तग्रहणं व्यर्थमिति चेन्न । अन्तग्रहणस्याऽङ्गविशेषणत्वेनार्थसिद्धतदन्तविधेरेवानुवादकत्वेन सार्थक्यात् । इदमत्रावधेयम् । भवतु-क्तवतु-मतुप्-वतुप्-डवतु-डमतुपामवयवानां-सामान्येनानुकरणम् । अत एव भवान्-कृतवान्-घटवान्-तावान्-कुमुद्वानित्यादिसिद्धिः । ननु अत्वन्तत्वमङ्गप्रत्यययोर्मध्ये कस्य विशेषणम् अङ्गस्य प्रत्ययस्य वा । तत्र नाद्यः, तस्य दीर्घप्रवृत्तिकालेऽत्वन्तत्वाऽभावात् । भवानित्यत्रापि सर्वादिपठितभवतुशब्दावयवोकारस्य (उपदेशेऽजनुनासिक इदि)इति सूत्रेणेत्संज्ञायान्तस्य लोपेऽनुबन्धरहितस्यैव सत्त्वात् । (सर्वेष्वपि साऽनुबन्धकनिर्देशेषु रूपमाश्रीयते रूपनिर्ग्रहश्च नान्तरेण लौकिकं प्रयोगं तस्मिंश्च सति साऽनुबन्धकानाम्प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते कोऽसावुपदेशो नाम)ेति घसंज्ञासूत्रीयभाष्योक्तरीत्योपदेशे योऽत्वन्तः तस्य ग्रहणमिति विज्ञास्यत इति चेत् । एवं सति सर्वादिपठिताव्युत्पन्नभवतुशब्दस्य भवानिति यद्यपि सिध्यति तथापि (भाते डवतुरि )ति व्युत्पन्नस्योपदेशाऽभावाद्दीर्घो नस्यात् व्युत्पत्तिपक्षेऽवयवावयवस्य समुदायावयवत्त्वादत्र सिध्यत्येवेति चेत् । एवमपि मतुप्वतुबन्तेन सिध्यति । अत एव न द्वितीयः । प्रत्ययस्याऽप्रकृतत्वाच्च । शब्दस्वरूपस्याध्याहारेण वाक्यार्थबोधसम्भवेऽप्युपदेशेऽत्वाभावाद्दोष एवेति चेत् । अत्राहुः वार्त्तिककाराः । (अत्वन्तस्य दीर्घत्वे पित उपसंख्यानमि) ति । तत्तर्हि उपसंख्यानं कर्तव्यं न कर्तव्यम् । पकारलोपे कृते नातुबन्तमेतद्भवति किन्तु अत्वन्तम् । यथैव तर्हि पकारलोपे कृते नातुवन्तमेवमुकारलोपे नात्व-

न्तम् । ननु च भूतपूर्वगत्याऽत्वन्तम् । सूत्रेऽत्वन्तस्योपादाना-त्तदंशे भूतपूर्वगतिः । अतुबन्तस्य त्वपादान्न तदंशे भूतपूर्वगति-रिति भावः । तत उक्तविधया व्यवस्थापिता खलु भूतपूर्वग-तिः । न चात्र सूत्रेऽतुशब्देन (तदनुबन्धकग्रहणे नातदनुबन्ध-कग्रहणमि)तिपरिभाषया क्तवत्वन्तानां ग्रहणं न स्यादिति वा-च्यम् । उकारपकारयोः समुदायानुबन्धत्वेन तस्याः परिभाषा-या अत्राविषयात् । उक्तव्याख्यानेन सूत्रेऽन्तग्रहणसद्भावेऽतो-ऽन्तोऽत्वन्त इति समासं विधाय तस्यात्वन्तशब्दस्याङ्गविशेषणत्वेना त्वन्तान्तं यदङ्गमित्यर्थस्यावश्यकतया मतुबन्ते मुख्यस्य तस्य स-त्त्वेन भवतुशब्दे च व्यपदेशिवद्भावेन तत्सद्भावमुपपाद्य सौत्र-स्यान्तशब्दस्य सार्थक्योपपादनम्प्रत्युक्तम् ॥

परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घ इति । ननु (विप्रतिषेधे परं कार्यमि)ति सूत्रेण पूर्वशा-स्त्रतः परशास्त्रस्य बलवत्त्वबोधनम् । परशास्त्रतोऽपि नित्यशा-स्त्रस्य कृताऽकृतप्रसाङ्गित्वाद्बलवत्त्वम् । एवञ्चोक्तयुक्त्या परनि-त्यशास्त्रयोर्बलवत्त्वज्ञानस्य जायमानत्वात् धीमच्छब्दस्य प्रथमै-कवचने सौ धीमत् स्वित्यत्र (उगिदचामि)ति नुमि (अत्वसन्त-स्ये)ति दीर्घे च प्राप्ते दीर्घापेक्षया नुमः परत्वनित्यत्वोभयस-त्त्वाद्दीर्घं बाधित्वा नुमि जाते पश्चान्मकाराऽकारस्योपधात्वा-ऽभावाद्दीर्घाऽप्राप्त्या धीमानिति न स्यादिति चेन्न । वाक्या-र्थबोधकालेऽविरोधादुपधासम्बन्धे कृते वचनसामर्थ्यान्नुमः प्रा-कृदीर्घप्रवृत्तेरेव कल्पनेनोक्तप्रयोगसिद्धेरिति भावः ॥

पुनरत्रैव पूर्वपक्षान्तरम्—( अत्वसन्तस्य चाधातोरि ) ति सूत्रेऽतुशब्देन ( एकानुबन्धकग्रहणे न द्व्यनुबन्धकग्रहणमि ) ति

परिभाषया मतुपऽग्रहणेन धीमानित्यादावुक्तसूत्रेण दीर्घो-न स्यात् । न च सूत्रारम्भसामर्थ्येण दीर्घः स्यादिति वाच्यम् । सूत्रस्याऽतुनासिकोकारविशिष्टे सर्वादिगणपठितभवतुशब्दे च-रितार्थत्वात्तेन दीर्घं कल्पयितुमशक्यत्वात्पुनरपि धीमानिति प्र-योगासिद्धेस्तादवस्थ्यमेवेति वाच्यम् । मतुपः पकारस्य मतुबि-तिसमुदायानुबन्धतया तद्घटकस्याऽतुमात्रस्य ह्यनुबन्धत्वाऽभा-वात्परिभाषाऽप्रवृत्त्या सूत्रस्थेनाऽतुना मतुप्घटकस्यातोरपि ग्र-ग्रहणाद्दीर्घे धीमानित्यस्य सिद्धेरिति भावः ॥

धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गो-मानिवाचरतीति वा क्यजन्तात् आचारक्विबन्ताद्वा कर्तरि क्विप् । अस्यायम्भावः ( अत्वसन्तस्य चाधातोरि )ति सूत्रेण धातुभिन्नासन्तस्योपधाया इव धातुभिन्नात्वन्तस्योपधाया अपि दीर्घविधाने इच्छाक्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विपि निष्पन्नगोमच्छब्दस्य धातुत्वादीर्घाप्राप्त्या गोमानित्युक्तविश्ववि-ग्रहनिष्पन्नगोमच्छब्दस्य प्रयोगो नोपपद्यते इति पूर्वपक्षः । सूत्रेऽतु इति लुप्तषष्ठीकं पृथक्पदम् नत्वसन्तेन सह समस्तम् । अधातोरिति च नात्वन्तविशेषणं किन्त्वसन्तविशेषणमेव, तथा च धातुभिन्नो योऽस् तदन्तस्योपधाया दीर्घ इति सूत्रार्थे सम्पन्ने न पूर्वोक्ताऽनुपपत्तिः । अतुशब्देन मतुपोऽग्रहणशङ्का-समाधानं च पूर्वपङ्क्तिव्याख्यातरीत्याऽत्रधेयमिति सर्वं निर-वद्यमिति ॥

उगिदचामिति सूत्रेऽज्ग्रहणं नियमार्थं (धातोश्चे-दुगित्कार्यं तर्ह्यञ्चेरेवे)ति तेन स्रत् ध्वदित्यादौ ने-ति । (उगिदचां सर्वनामस्थानेऽधातोरि)ति सूत्रेऽधातोरित्यस्य

सङ्घावादनेन सूत्रेण धातो र्नुमोऽप्राप्त्या क्यजन्तादिगोमच्छ-न्दस्य धातुत्वेन नुम् न स्यादिति सन्देहोत्थितौ समाधानरूपो-ऽयं ग्रन्थः । अस्यायम्भावः, अञ्चेरुगित्वादेव नुम्सिद्धौ तद-र्थं कृतमञ्ग्रहणं व्यर्थं सञ्ज्ञापयति धातोश्चेदुगित्कार्यमित्यादि । एवञ्चाञ्चतिव्यतिरिक्तधातो र्नुमोऽप्राप्त्या तद्वारणाय कृतं सूत्रे-धातुग्रहणं व्यर्थीभूय कल्पयति (अधातुभूतपूर्वस्यापि नुम्भवती)ति । तथा च सम्प्रतिगोमच्छब्दस्य धातुत्वसङ्घावेऽपि भूतपूर्वाऽ-धातुत्वमादाय नुम् सिध्यति । ननु पूजार्थकस्य नुम्न नेति नि-यमोपपत्त्यर्थमञ्चतेश्चेन्नलोपिन एवेति कल्पनाविधानार्थमञ्ग्रहण-स्य सार्थक्येन. वैयर्थ्याभावात्तेनोक्तकल्पनां कर्तुमशक्यतयाऽधा-तुग्रहणकृतकल्पनाया अप्यसम्भवादिति चेन्न । सूत्रेऽचापिति नलोपस्याविवक्षया निर्देशात्तेन सामान्यापेक्षज्ञापनस्यैव समु-चितत्वात् । प्रथमनियमफलन्तु उखास्रद्ब्राह्मणीत्यादौ नुम्ङी-पोरभावरूपं बोध्यम् । न च धातोश्चेदुगित्कार्यमिति नियमस्यौ-पदेशिकधातुविषयकत्वाभ्युपगमे गोमच्छब्दस्यौपदेशिकधातुत्वा-ऽभावेन नियमानाक्रान्ततया नुमि बाधकाभावादधातुग्रहणकृत-नियमप्रयासो व्यर्थ इति वाच्यम् । अञ्ग्रहणस्यौपदेशिकत्वान्त-र्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात् । सामान्यापेक्षनियम-ज्ञापनफलं पर्णध्वादित्यादाविव गोमानित्यादिनामधातौ (उगि-तश्चे)ति सूत्रप्राप्तस्य ङीपोऽभावरूपमिति दिक् ॥

उभे अभ्यस्तम् । लक्ष्यानुसारेण (गर्गदण्डन) न्यायादेव (गर्गाः शतं दण्डयन्तामि)त्यत्रेव समुदाये वाक्यपरिसमाप्तिरि-त्याह–उभे समुदिते इति । अयम्भावः, (गर्गदण्डन) न्यायाना-श्रयणे (ब्राह्मणभोजन) न्यायेन प्रत्येकमभ्यस्तसंज्ञापत्तिः। यश्चोद-

श्यताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मस्यैव विधेयताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वं तत्र गर्गदण्डनन्यायप्रवृत्तिः। यत्र तादृशावच्छेदकधर्मद्वयस्य भेदस्तत्र ब्राह्मणभोजनन्यायप्रवृत्तिरिति भेदः। प्रकृते चोद्देश्यता प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकस्य द्वित्वस्यैव विधेयताप्रतियोगिकपर्याप्त्यनुवच्छेदकत्वात् ( गर्गदण्डन ) न्यायप्रवृत्तिरिति । नच गर्गदण्डनन्यायप्रवृत्तौ तादृशावच्छेदकधर्मद्वयस्यैक्यनिर्णयस्तदैक्यनिर्णये चोक्तन्यायप्रवृत्तिरित्यन्योन्याश्रय इति वाच्यम्। यत्र तादृशावच्छेदकधर्मद्वयैक्यस्येष्टिस्तत्रोक्तन्यायेनेष्टसिद्धेर्विधेयत्वात् ।

नन्वत्रसूत्रे (एकाचो द्वे प्रथमस्ये) तिसूत्राद्द्वे इत्यस्यानुवर्तनादेवसिद्धे उभेग्रहणं व्यर्थमिति वाच्यम् । तस्य स्पष्टार्थत्वेन सार्थक्यात् । नच (एकाच) इतिसूत्रे द्वे इत्यस्य विधेयसमर्पकत्वेनात्रानुवाद्यसमर्पकत्वं न स्यादिति वाच्यम् । तत्र तस्य तथात्वेऽपि (पूर्वोऽभ्यास) इत्यत्र विधेयसमर्पकत्वत्यागस्य क्लृप्तत्वेनाऽत्रानुवाद्यसमर्पकत्वे वाधकाऽभावात् । केचित्तु--उभेग्रहणं सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकम् । (उभेग्रहणसामर्थ्यात्प्रकृते द्वित्वस्य पर्याप्तिसम्बन्धेनाऽभ्यस्तसंज्ञोद्देश्यतावच्छेदकत्वं विवक्षितम् । अन्यथा ( एकाचो द्वे ) इति सूत्रे द्वित्वाश्रयस्य द्वितीयोच्चारणविषयस्य विधेयत्ववत् आश्रयतया तस्योद्देश्यतावच्छेदकत्वं स्यात् ) तेन समुदित इत्यर्थलाभ इत्याहुस्तन्न । अशब्दार्थत्वात् । शब्दाधिक्यापेक्षयाऽर्थाधिक्यस्य भाष्यकृता बहुश उपहासितत्वाच्च । ध्वनितश्चेदं ( असति प्रयोजने उभे ग्रहणं सहार्थं विज्ञास्यते ) इति ग्रन्थेन भाष्ये । लक्ष्यानुसारि गर्गदण्डनन्यायेनैव पर्याप्तिसम्बन्धस्योद्देश्यतावच्छेदकतावच्छेदकत्वलाभे तदर्थमधिकोपादानं

गौरवग्रस्तमिति। अत एवैतत्सूत्रशेषे भाष्ये (गर्गदण्डन) न्यायेनैतदर्थस्य सिद्धिमाश्रित्य (सहग्रहणं कर्तव्यमि) ति वार्त्तिकं प्रत्याख्यातन्तुल्यन्यायात्। तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति विभावयन्तु सुधियः। नच वार्त्तिककृदुक्तस्य सहग्रहणस्य प्रत्याख्यानात्पराभिमेतस्योभेग्रहणस्यापि प्रत्याख्यानमयुक्तम्, ऐत्संन्नित्यत्राऽभ्यासलोपोत्तरं प्राप्तस्य जुसोऽभवाय ईत्संन्नित्यत्र (नाभ्यस्तादि) ति प्राप्तनुम्निषेधाभावाय चोभेग्रहणस्यावश्यकत्वादिति वाच्यम्। तत्र द्व्यादिशब्दानामेकाऽपायेऽप्रवृत्तेरैत्संन्नित्यादावभ्यासलोपे कार्यकालपक्षे संज्ञाऽभावेन जुसोऽप्राप्तेः। नच शपा सहैकादेशेऽपि उभयत आश्रयणान्न जुसः प्राप्तिरिति वाच्यम्। सनकारशवकारयोरेकादेशात्प्राक् आयन्नादिषु उपदेशिवद्वचनेनाऽन्तरङ्गत्वादन्तादेशेऽपि (सर्वे सर्वपदादेशा) इति न्यायेन स्थानिवद्भावेन झिस्त्वाज्जुसापत्ते र्दुर्वारत्वात्। नच प्रकृते स्थानिवद्भावोपयोगाभावान्नोक्तदोष इति वाच्यम्। एकादेशे जुसोऽपवादविषयस्य जायमानत्वेन (प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते) इति न्यायेन पूर्वमन्तिभावाऽप्रवृत्तावेकादेशे जुसापत्तेस्तादवस्थ्यात्। न च कार्यकालपक्षवद्यथोद्देशपक्षेऽप्युक्तापत्तिः स्यादिति वाच्यम्। यथोद्देशपक्षे प्राक् प्रवृत्तसंज्ञायाः स्थानिवद्भावेऽभ्यासलोपसद्भावेऽपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्त्वेन जुसोऽप्रवृत्तेः। पञ्चमीसमासाश्रयणादेव प्रत्यैषिषन्नित्यादौ न दोष इति भावः॥

कुत्वस्याऽसिद्धत्वादूव्रश्चेति ष इति। तमिव पश्यतीति विग्रहे तच्छब्दोपपदोद्दृशेः क्विनि (आसर्वनाम्न) इत्या-

त्वे प्रातिपदिकसंज्ञोत्तरं जातस्य सोर्लोपे तादृश इति स्थितौ (व्रश्चेति) षत्वविधायकशास्त्रस्य निशादिशब्दे (क्विन्प्रत्ययस्ये)ति कुत्वविधायकशास्त्रस्य ऋत्विगादिशब्दे च चरितार्थत्वेन परस्परलब्धावकाशयोरनयोः परत्वात्कुत्वे प्राप्ते (पूर्वत्राऽसिद्धमि) त्यनेन कुत्वस्य षत्वदृष्ट्याऽसिद्धत्वबोधनात्कुत्वात्प्राक् षत्वमेवेति ग्रन्थाशयः ।

षत्वापवादत्वात्कुत्वेनेति । (क्विन्प्रत्ययस्य कुरि) सूत्रस्य स्थाने (कुः क्विन्यत) इत्येव न्यासोऽस्तु । तत्र दृष्टपदमध्याहृत्य यतो यस्मात्क्विन् दृष्टस्तस्य कुः कवर्गोऽन्तादेश इत्यर्थे बहुव्रीहिसमासफले सिद्धे बहुव्रीह्यर्थं कृतं प्रत्ययग्रहणं व्यर्थं सज्ज्ञापयति अत्रान्यपदार्थांशे वीप्सागर्भबहुव्रीहिः । तथा च यस्माद्यस्मात्क्विन्दृष्टस्तस्य तस्य कवर्गोऽन्तादेश इत्यर्थे जाते प्रतिलक्ष्यं लक्षणोपप्लवेन तादृशादिक्विन्नन्तविषयस्य कुत्वविधायकलक्षणस्य वैयर्थ्यात्षत्वापवादतया कुत्वमेवेति भावः । खकार इति । अघोषमहाप्राणोभयप्रयत्नसाम्यादिति भावः । कैयट इति । (क्विन्प्रत्ययस्य कुरि) तिसूत्रस्थकैयट इति तदर्थः । जश्त्वं प्रति कुत्वस्याऽसिद्धत्वादिति । ननु कुत्वस्य जश्त्वापवादत्वाज्जश्त्वम्प्रति कुत्वाऽसिद्धत्वप्रतिपादनम्मूलोक्तमयुक्तमिति चेन्न । कुत्वस्य शस्थानिकजश्त्वस्यैवापवादत्वेन खकारस्थानिकजश्त्वापवादत्वाऽभावेनाऽदोषात् । वस्तुतश्चिन्त्यमिदम् । प्रत्ययग्रहणस्य (१)भाष्ये बहुव्रीहिमात्रफलकत्वेनैवोक्तत्वा-

---

(१) (क्विन्प्रत्ययस्य कुरि) ति सूत्रस्थभाष्य इत्यर्थः । तत्र हि प्रत्ययग्रहणं किमर्थं, न क्विनः कुरित्येवोच्येत । क्विनः कुरितीयत्युच्यमाने वकारस्यैव कुत्वं प्रसज्येत । ननु च लोपे कृते न भविष्यति ।

त्। एवं हि ऋत्विगादिशब्दे चरितार्थं हि कुत्वं न जश्त्वस्य बाधकं युक्तमिति तन्मत इति वदता सूचितम् ॥

प्रत्येकमितिव्याख्यानादनेकव्यवधाने षत्वं न निंस्व निंम्से इति। ( नुम्विसर्जनीये )ति सूत्रं नुम्शरप्रभृति व्यवहितसकारस्थानिकं षत्वं विदधाति तथा च निंस्से निंस्वेत्यत्र नुमा शरा च व्यवहितस्य प्रत्ययसकारस्य षत्वं प्राप्नोति तद्वारणाय वार्त्तिककारेण ( निंसेः प्रतिषेधो वक्तव्यः ) इति वार्त्तिकमारब्धम्। तच्च वार्त्तिकं भाष्यकारेण योगं विभज्य प्रत्याख्यातम्। तथा हि ( नुम्व्यवाये–शरव्यवाये इति ) स तर्हि योगविभागः कर्तव्यः व्यवायशब्दः प्रत्येकं समाप्नोतीति प्रत्येकव्य-

---

अनवकाशकुत्वं लोपं बाधेत। सावकाशं कुत्वम्। कोऽवकाशः। अनन्त्यः। अनन्त्य इति। क्विन्प्रत्ययापेक्षया अनन्त्यः। कथम्पुनः सत्यन्त्येऽनन्त्यस्य कुत्वं स्यात्। सत्यपि सम्भवे बाधनं भवतीति न्यायेन लोपम्बाधित्वा कुत्वं स्यादिति भावः। आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य कुत्वम्भवति। यदयं क्विनः कुरिति कवर्गनिर्देशं करोति। इतरथा हि तद्गुणमेवायं निर्दिशेत्। ( तद्गुणं–षकारगुणम् )इदन्तर्हि प्रयोजनम्। येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्। मानो अस्राक्। मानो अद्राक् इति। सृजिदृशिभ्यां माङि लुङ्। तिप्सिच्। ( बहुलं छन्दसी ) ति इडभावः। ( हल्ङ्यादि ) लोपः। ( सृजिदृशोरि ) त्यमागमः। ( वदव्रजे ) ति वृद्धिः। ( बहुलं छन्दस्यामाङि ) त्यत्र बहुलग्रहणादडागमः। संयोगान्तलोपः। ( व्रश्चे ) तिषत्वे प्राप्ते कुत्वम्। जस्य गः। शस्य खः। ( वावसाने ) इति चर्त्वम्। अत्र सृजे विशेषविहितेन षत्वेन पदान्ते रज्जुसृड्भ्यामित्यत्रैव कुत्वम्प्राप्तम्बाध्येतेति कैयटेनोक्तम्। प्रत्ययग्रहणसामर्थ्यात्कुत्वस्य ( पूर्वत्राऽसिद्धमि ) त्यनेनासिद्धत्वन्नास्तीति।

वाय एव षत्वं यथा स्यान्नत्वनेकव्यवधाने इति एवञ्च निंस्से-निंस्वेत्यत्र न षत्वापत्तिदोषसम्भव इति भावः ।

नुम्ग्रहणं नुम्स्थानिकनुस्वारोपलक्षणार्थमिति । सर्पींषीत्यादौ ( नुम्विसर्जनीये ) ति सूत्रेण षत्वप्राप्तिक्षणे नुमोऽसद्भावेन षत्वं न स्यात् । तदर्थं नुम्ग्रहणमनुस्वारोपलक्षणार्थमित्यवश्यमभ्युपगन्तव्यम् । ननु अनुस्वारस्य शर्प्रत्याहारे पठितत्वात्तेनैवाऽनुस्वारव्यवधानेऽपि षत्वसिद्धिरिति नुम्ग्रहणं व्यर्थमिति चेन्न । यद्यनुस्वारव्यवाये षत्वं तर्हि नुम्स्थानिकाऽनुस्वारव्यवाय एवेति नियमसम्पादनाय तस्य सार्थक्यात् । नचोक्तनियमो व्यावर्त्याऽभावाद्विफल इति वाच्यम् । पुंस्वित्यादौ मस्थानिकाऽनुस्वारव्यवाये षत्वानापत्तिरूपस्यैव व्यावर्त्यत्वादिति भावः ।

वसोः सम्प्रसारणम् । ( प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि ) ति परिभाषया वसोः प्रत्ययत्वात्तदन्तग्रहणाद्भस्येत्यधिकाराच्चाह—वस्वन्तस्य भस्येति । ननु विदेः शतो र्वसोरेकानुबन्धकत्वात्तस्यैवात्र ग्रहणं स्यान्न तु लिडादेशक्वसोरिति चेन्न । वसुसादेशेन तस्यापि द्व्यनुबन्धत्वात् । नचैवमपि वसु स्तम्भ इति धातोरेवैकानुबन्धकत्वात्ग्रहणं स्यादिति वाच्यम् । सामान्यग्रहणार्थेन वसुसादेशस्य सकारेणैन ( वामदेवाड्ड्यड्ड्यावि ) त्येतत्सूत्रज्ञापितायाः परिभाषाया अत्राप्रवृत्तेः । किञ्च शत्रादेशवसोः स्थानिवद्भावेनैकानुबन्धत्वलाभे वस्वादेशे उकारोच्चारणं ( तदनुबन्धकग्रहणे नातदनुबन्धकस्ये ) ति परिभाषाऽप्रवृत्त्यर्थमिति क्वसो ग्रहणसिद्धिः । तर्हि धातोरपि ग्रहणं स्यादिति चेत् । वसुसादेशे सकारोच्चारणेन द्व्यनुब-

न्धयोर्ग्रहणमित्याशयात् ।

अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते इति । ननु पदसंस्कारपक्षे सेदिवस्शब्दस्य द्वितीयाबहुवचने शसि सेद्वस् असिति स्थितौ अन्तरङ्गत्वादिटो निमित्तस्य पूर्वमुपस्थितत्वादिटि सति सम्प्रसारणं न प्राप्नोतीति चेन्न । वलादिस्वरूपस्येटो निमित्तस्य सम्प्रसारणेन विनाशभावितया (अकृतव्यूह) परिभाषया सम्प्रसारणात्पूर्वमिटोऽप्राप्त्या सम्प्रसारणस्य सिद्धेरिति प्राञ्चः । परे तु-पदसंज्ञाप्रयोजकविभक्तिपर्यन्तविभागेन प्रकृतिप्रत्यययोः स्थापनं विधायाऽन्वाख्यानरूपे पदावधिकान्वाख्यानपक्षे सेद्वस् असिति स्थितौ इटः सम्प्रसारणस्य च प्राप्तौः प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्प्राक् सम्प्रसारणे जाते वलादित्वाभावेनेटोऽप्राप्त्या सेदुष इत्यादिसिद्धौ (अकृतव्यूहाः पाणिनीयाः) इति परिभाषा निष्फलैव । अत्र च लक्ष्यानुरोधात् पदावधिकान्वाख्यानपक्ष एव समाश्रयणीय इति प्राहुः । न च (वस्वेकाजाद्घसामि) ति सूत्रेऽपि वसोरित्यस्योच्चारणादिटोऽपि प्रतिपदविधित्वं समानमिति वाच्यम् । उक्तसूत्रजन्यवाक्यार्थबोधस्यैकाजाद्यर्थापेक्षत्वेन तदपेक्षया (वसोरि तिसूत्रजन्यवाक्यार्थबोधस्य प्राक् सम्भवात् । वस्तुतस्तु-प्रतिपदविधित्वेनेत्यत्र पदशब्दस्य पदसंज्ञायोग्यपरत्वेन शक्तपरत्वाऽभावात् "पदसंज्ञाप्रयोजकविभक्तिप्रकृतिबोधकशब्दविशेषमुच्चार्य तदुद्देशेन विहितत्वम्प्रतिपदोक्तत्वमि"ति प्रतिपदविधित्वलक्षणम्पर्यवसितम् । यथा स्वाम्पीत्यत्र नित्यात्परादपि नुमःप्राक् प्रतिपदोक्तत्वेन (अप्तृन्नि) ति दीर्घो भवति । न च सेदुषः पपुष इत्यादौ विभक्तौ न प्रकृतिभगस्य पदसंज्ञा भसंज्ञया बाधादिति वा-

च्यम् । तथात्वेऽपि प्रकृतेः पदत्वयोग्यत्वस्याक्षततया योग्यता-प्रयोजकत्वस्यैव विवक्षितत्वात् । एवञ्च ( वस्वेकाजादि ) ति सूत्रस्य वसोः परवलाद्यार्द्धधातुकस्येड्विधायकत्वन्न तु विभ-क्तिप्रकृतिबोधकशब्दाविशेषोद्देश्यकविधित्वमिति नैतस्यैतादृशप्र-तिपदविधित्वम् । ( वसोरि ) ति सूत्रस्थवसुशब्दस्तु आत्मा-न्तस्य संज्ञेति तादृशविभक्तिप्रकृतिबोधकत्वमस्त्येवेति प्रतिप-दविधित्वेन सम्प्रसारणस्य पूर्वम्प्रवृत्तियुक्तैव । न च पूर्वं सम्प्र-सारणेऽपि जातस्य सम्प्रसारणस्यासिद्धत्वादिट् स्यादि-ति वाच्यम् । तस्याः परिभाषाया अनित्यत्वेन लक्ष्या-नुरोधादप्रवृत्तिस्वीकारेऽपि लक्ष्यसिद्धिसम्भवात् । न चा-कृतव्यूहपरिभाषाया निष्फलोक्ति र्न युक्ता तदनभ्युपग-मे तस्थावित्यादौ पूर्वप्रवृत्तष्टुत्वस्यानिवृत्तौ रूपासिद्धिरि-ति वाच्यम् । स्तौति–स्तोभतीत्यादिनिर्देशात्सपादसप्ता-ध्यायीस्थकार्यप्रवृत्तियोग्यविषये प्रागप्रवृत्तेर्ध्वननात् । पदावधि-कान्वाख्यानपक्षे परिभाषामन्तरा सिद्धावपि क्रमेणान्वाख्या-नपक्षे परिभाषाऽभ्युपगन्तव्यैवेति लक्ष्यानुरोधादित्यस्याभि-प्रायः ॥

ननु महान्तमात्मानमिच्छति महत्यति ततः कर्तरि क्विपि महत् अस्य च महतो धातुत्वसम्भवात्कथम्महच्छब्दसाहचर्या-त्सान्तसंयोगस्यापि प्रातिपदिकस्यैव गृह्यत इति मूलोक्तसङ्ग-तिरिति वाच्यम् । क्विबन्तस्य महतो धातुत्वसत्त्वेऽप्यौपदेशिक धातुत्वाभावेन साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रह-णादित्यभिप्रेत्याह–सान्तमहत इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते न तु धातो र्महच्छब्दसाहच-र्यादिति ॥

पुंसोऽसुङ् । अत्र ( इतोऽत्सर्वनामस्थाने ) इत्यतोऽनुवृत्ते सर्वनामस्थानपदे विषयसप्तमी न तु परसप्तमीत्यत आह——विवक्षित इति । तेन परमपुमानित्यत्र परत्वात्कृतेऽसुङि समासान्तोदात्तस्वरोऽसुङोऽकारस्यैव भवति । परसप्तम्याः स्वीकारे तूक्तस्वरोऽसुङोऽकारस्य न सिद्ध्यति, सर्वनामस्थानोत्पत्तेः पूर्वमेव पुंशब्दोकारस्योदात्तत्वे जाते स्रंसनधर्मिणो हलः स्थाने तद्धर्मिणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । न चाकृतव्यूहपरिभाषयोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यतेऽसुङश्चान्त्यत्वात्करिष्यते इति वाच्यम् । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वादिति भावः । कैयटहरदत्ताद्यनुरोधेनेदम् ।

वस्तुतस्तु । परसप्तमीस्वीकारेऽपि न कश्चिद्दोषः (अकृतव्यूह) परिभाषाया अन्तरङ्गपरिभाषाऽपवादत्वादिति ध्येयम् । न चाकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषाबाधकत्वेऽसमासेऽप्यसुङि कृते प्रातिपदिकस्वरेण प्रत्ययस्वरस्य बाधापत्तावसुङ् उदात्तत्वं स्यादिष्यते तूकारस्य, पुमान् पुमांसं परिपात्वित्यादावुदात्तस्यैवोकारस्य पाठादिति वाच्यम् । हरदत्तमते डुम्सुनो नित्करणसामर्थ्येन प्रातिपदिकस्वराऽप्राप्तेः । न च प्रकृतिप्रत्ययविभागशून्येष्वेव ( फिषोऽन्त उदात्त ) इत्यस्य प्रवृत्त्या नित्करणसामर्थ्याश्रयणमयुक्तमिति वाच्यम् । एतन्नित्करणसामर्थ्याश्रयणलिङ्गेनोक्तस्वरविधायकसूत्रस्य क्वचित्सखण्डेष्वपि प्रवृत्ते र्ज्ञापनात् । न च डुमसुन्नित्यत्र नित्करणाभावेऽपि ( असिद्धं बहिरङ्गमन्तरङ्गे ) इतिपरिभाषयैव नित्करणप्रयोजनसिद्धौ व्यर्थमेव तदिति वाच्यम् । एतन्नित्करणेनोक्तपरिभाषाया अप्यनित्यत्वज्ञापनादिति दिक् ॥

अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः । एतच्च वाचनिकम् । प्राञ्चस्तु (अनङ् सावि)त्यस्य स्थाने ( सोर्डे ) त्येवास्तु न्यासः । सो :स्थाने डाविधानेन डित्वसामर्थ्याद्भस्यापि टेरस्भागस्य लोपे उशनेत्यादिप्रयोगासिद्धावनङ्विधानं व्यर्थं सञ्ज्ञापयति ( क्वचिदन्यतोऽप्यनङ् भवती ) ति । न च सोर्डेतिन्यासे टेर्लोपे (सर्वनामस्थाने चाऽसम्बुद्धावि)ति दीर्घे उशानेत्यनिष्टापत्तिरिति ज्ञापकत्वमसङ्गतमिति वाच्यम् । ( अङ्गवृत्त) परिभाषया दीर्घाऽप्राप्त्या ज्ञापकत्वस्य सङ्गतेः । तदेतत्फलितमिति प्राहुः । वस्तुतः ( सोर्डे ) ति न्यासे पुरुदंसेत्यत्रोक्तरीत्या ( सान्तमहत ) इति दीर्घापत्तिः । न च ( संज्ञापूर्वकविधेरनित्यत्वादङ्गवृत्तपरिभाषासत्त्वाच्च न तत्र दीर्घापत्तिरिति वाच्यम् । उक्तोभयपरिभाषामध्ये कस्या अपि भाष्येऽसत्त्वात् । तथा च पुरुदंसेत्यत्रापत्तिस्थैर्यात्सोर्डेति न्यासेऽनभिमतेऽनङ्सावितिज्ञापितवचनाऽभावादपूर्वमिदमिति भावः ॥

अदस औ सुलोपश्च । अदस इति षष्ठ्यन्तम् । अलोऽन्त्यपरिभाषोपस्थितस्यान्त्यस्य विशेषणम् । ( तदोः सः सावि ) त्यतः सावित्यनुवर्तते । तथा च अदसोऽवयवस्यान्त्यस्योकारः स्यात्सुलोपश्चेति सूत्रार्थे जाते ( येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती ) ति न्यायेनौत्वस्य त्यदाद्यत्वबाधकत्वं बोध्यम् । ननु सोर्डेत्येवास्तु सूत्रमिति चेन्न । तथा सत्यसावित्यत्र टिलोपोत्तरं नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वेऽसावित्यस्यासिद्ध्यापत्तेः । न च त्यदादीनामितिसङ्ग्राहकशब्दाददस इत्यस्य पृथक्त्वेन कल्पनायां अदसो दः स इत्यंशो न चरितार्थ इति तत्सामर्थ्यादिदमेव वाक्यं त्यदाद्यत्वस्य बाधकं भविष्यती-

ति वाच्यम् । अस्य साकचूके चारितार्थ्यात् । ननु ( सत्यपि सम्भवे बाधनं भवती ) तिन्यायेन डावादेशस्य त्यदाद्यत्वापवादत्वात्प्राक् डावादेशे कृते परत्वाच्छब्दान्तरात् प्राप्तमनित्यं टिलोपं बाधित्वा सत्त्वे पुनः प्रसङ्गविज्ञानन्यायेन टिलोपेऽसाविति सिद्धम् । न च ( सकृद्गति ) न्यायाङ्गीकारे कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाट्टिलोपप्रवृत्तेः स्वीकारेऽपि वा दोष एवेति वाच्यम् । प्रकृतसूत्रेऽदस इति योगविभागे तदोः स इत्यनुवर्त्य अदस एव दकारस्येति नियमेनानन्त्यग्रहणप्रत्याख्यानरीत्याऽधुनापि विभक्तस्यादस इत्यस्यारम्भसामर्थ्यात्त्यदाद्यत्वबाधकत्वेनेष्टसिद्धेरिति चेन्न । अनन्त्यग्रहणप्रत्याख्यानरीत्या दोषाऽभावेऽपि योगविभागादिक्लेशेन प्रत्याख्याने गौरवादनन्त्यग्रहणस्यान्त्यव्यावर्तकत्वमावश्यकमिति सूत्रकृन्नये टिलोपोत्तरं पूर्वोक्तरीत्या पूर्वं प्रवृत्तेऽन्त्यत्वात्सत्वाऽप्राप्तौ रूपासिद्धिप्रसङ्गादिति दिक् ॥

न मुने । ने इत्यस्य विषयसप्तम्यन्तत्वादाह—ना भावे कर्तव्ये इति । विषयसप्तम्या अस्वीकारे को दोष इति चेन्न । विषयसप्तम्यनभ्युपगमे सतिसप्तमीस्वीकारान्नाभावे सति मुभावो नाऽसिद्ध इत्यर्थे ( आङो नाऽस्त्रियामि ) त्येतद्दृष्ट्या मुत्वस्यासिद्धत्वेनाङो घेः परत्वाभावेन नाभावानापत्तेः। ननु नाभावे कर्तव्य इत्यर्थेऽपि कृते नाभावे ( सुपि चे ) ति दीर्घः स्यात् दीर्घमति मुत्वस्यासिद्धत्वादत आह—कृते चेति । एतच्चार्थद्वयं नेपदावृत्त्या लभ्यते । एकत्र विषयसप्तम्या अपरत्र सत्सप्तम्याश्चाश्रयणात् । वस्तुतः कृते चेति व्याख्यानं व्यर्थमेव । न चाकृते कृते चेति व्याख्याने ( सुपि च ) ति दीर्घोपत्तिर्दुर्वारेति

वाच्यम् । ( सान्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) ति परिभाषया दीर्घस्य वारणादिति भावः । इदमत्रावधेयम् ।

ननु अधुनेतिवत् अमुनेति निपातनादेव सिद्धौ ( न मुने ) इति व्यर्थमिति चेन्न । तस्य योगविभागार्थत्वेन सार्थक्यात् । न च प्रयोजनाभावाद्योगविभागोऽपि व्यर्थ इति वाच्यम् । रामो रामेभ्य इत्यादिसिद्धेरेव प्रयोजनत्वात् । तथा हि असति योगविभागे रोरसिद्धत्वादुकारस्येत्संज्ञालोपाऽप्राप्तावुक्तप्रयोगाऽसिद्धिरापद्येत । न चाऽनुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रति रोरसिद्धत्वाभावान्नोक्तप्रयोगासिद्धिरूपो दोष इति वाच्यम् । तरु मूलमित्यादौ ( हशि च ) त्यस्य व्यावृत्त्यर्थम् ( अतो रोरप्लुतादप्लुते ) इत्यत्रानुनासिकनिर्देशस्य चारितार्थ्येन वैयर्थ्याभावात्तेनेत्संज्ञालोपौ प्रति रोरसिद्धत्वाभावकल्पनां कर्तुमशक्यत्वेन दोषस्य तादवस्थ्यात् । न च ( अतो रोरप्लुतादप्लुते ) इत्यत्र माऽस्त्वनुनासिकनिर्देशस्तत्र प्रतिपदोक्तग्रहणेनैव सिद्धेरिति वाच्यम् । तत्र तथा निर्वाहेऽपि देवरुहीत्यत्र रुधातो दुर्वारत्वात् । रामो रामेभ्य इत्यादावप्यनुनासिकस्य रोः श्रवणस्याऽऽपाद्यमानत्वेन चारितार्थ्यस्य सुवचत्वाच्च । तथा च स्थानिवत्सूत्रस्याऽपि प्रवृत्तौ पदत्वाद्विसर्गस्यापि लाभः । ( प्रत्ययः ) ( परश्च ) त्यादिनिर्देशानां यत्वविधावशूग्रहणस्य चात्र प्रामाण्यमित्यलम् ॥

इति हलन्तपुंल्लिङ्गप्रकरणम् ॥



## अथ हलन्तस्त्रीलिङ्गप्रकरणम्।

दलोपषत्वे इति। पूर्वपदान्तस्य लोपो धातोः सस्य षत्वमिति बोध्यम्। (आदेशप्रत्ययोरि) त्यनेन तु न षत्वम्। तत्र पदादादिरिति पक्षे (सात्पदाद्योरि) ति निषेधात्।

हस्य घ इति। कैयटादिमते षत्वस्येव दत्वस्यापि कुत्वेन बाधादिति भावः। उष्णिगञ्चिवति निर्देशेन जश्त्वे कर्तव्ये कुत्वस्य नाऽसिद्धत्वम्। स्वमतेन तु ठडगका इति बोध्यम्॥

द्यौरिति। दिवूशब्दस्य प्रथमैकवचने सौ (दिव औदि) ति सूत्रेण वकारस्यौत्वे (इको यणची) ति यणादेशे च सिद्ध्यति। ननु (असिद्धं बहिरङ्गमन्तरङ्गे) इति परिभाषयाऽन्तरङ्गयणादेशस्य कर्तव्यत्वे बहिरङ्गौत्वस्याऽसिद्धत्वादच्परत्वाऽभावेन न यणादेशप्राप्तिरिति चेन्न। (नाऽजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरि) ति परिभाषयोक्तपरिभाषानिषेधेनाऽप्रवृत्ताबदोषात्। तथा च यण्विधायकशास्त्रदृष्ट्या नौत्वविधायकशास्त्रमसिद्धमिति न दोष इति तदाशयः। उक्तपरिभाषार्थस्तु—अज्निष्ठाऽन्याऽऽनन्तर्यनिमित्तककार्यस्य कर्तव्यत्वे न बहिरङ्गत्वप्रयुक्तासिद्धिरिति। अत्र च (षत्वतुकोरसिद्ध) इति सूत्रे तुग्ग्रहणं लिङ्गम् तत्प्रकारश्चेत्थम्। परिभाषाया अभावे अधीत्य प्रेत्येत्यादौ समासे सति ल्यबुत्पत्तिरिति समासस्य प्राक् जायमानत्वेन समासे च संहिताया नित्यत्वात् ल्यबुत्पत्तिं यावदसंहितया स्थितिर्न सम्भवतीति सत्येकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वादसिद्धत्वेन तुकि सिद्धे सूत्रे तुग्ग्रहणं व्यर्थीभूय ज्ञापयत्युक्तपरिभाषामिति दिक्॥

ननु चतुरशब्दाज्जसि ( चतुरनडुहोरामुदात्त ) इत्यनेनाऽऽमो दुर्वारतया चत्वार इत्येव प्राप्नोति न तु चतस्र इति चेन्न। ( विप्रतिषेधे परं कार्यमि ) ति सूत्रेण चतस्रादेशस्याऽऽमोऽपेक्षया परत्वबोधनेनाऽदोषात् । न च चतस्रादेशे कृते पुनरामः प्राप्त्या कुतो नासाविति वाच्यम् । ( सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे ) ति परिभाषयाऽऽमश्चतस्रादेशेन बाधे पुनरामोऽप्रसङ्गादित्यभिप्रेत्याह—चतस्र इति ।

ननु ( सर्वनाम्नो वृत्तिमात्रे पुम्वद्भाव ) इति वार्त्तिकेन पुम्वद्भावे सति सर्ववदित्यस्यैव युक्तत्वात्सर्वावदिति मूलोक्तमयुक्तमिति चेन्न । सर्वावदित्यस्य सर्वाशब्दवदित्यर्थे शब्दपरस्य सर्वनामत्वाभावादुक्तवार्त्तिकेन पुम्वद्भावाऽप्रसङ्गादित्यत आह—सर्वावदिति ।

अमूभिरिति । नन्वत्र ( एत ईद्बहुवचने ) इत्यनेनेदादेशेऽमीभिरिति प्राप्नोतीति चेन्न । अदन्तत्वाभावेनैत्वाऽप्रसक्तावीत्वाप्राप्तेरिति भावः ॥

इति हलन्तस्त्रीलिङ्गप्रकरणम् ॥



## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।



ननु ( वसुस्रंसुध्वंस्वनडुहां दः ) इति सूत्रे केवलस्याऽनडुहशब्दस्यैवोपादानेन तस्यैव च दत्वविधानात्स्वनडुहशब्दस्याग्रहणादत्वं न स्यादेवञ्च दत्वमिति मूलोक्तिरसङ्गतिमापद्येतेति

चेन्न। दत्वविधायकशास्त्रस्य पदाधिकारस्थत्वेनानडुहशब्दान्तेऽपि प्रवृत्तेर्निराबाधादित्यत आह-दत्वमिति । उक्तरीत्याऽत्रा-ऽऽमोऽपि सिद्धिरिति बोध्यम् ॥

ननु राजपुरुष इत्यत्र ( प्रत्ययलोपे प्रत्ययलक्षणमिं ) ति सूत्रेण प्रत्ययलक्षणविधानात्पूर्वपदस्य राजन्नित्यस्य पदत्वेन नलोपादिकार्यवत् प्रकृते विमलादिवीत्यत्राऽपि प्रत्ययलक्षणे-नान्तर्वर्त्तिनीम्विभक्तिमाश्रित्योत्तरपदस्य दिवः पदत्वात ( दिव उदि ) ति सूत्रेण प्राप्तमुत्वं स्यादित्याशयेन पूर्वपक्षमाह-अन्त-र्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्या-ऽपि पदसंज्ञायाम्प्राप्तायामिति । तन्निराकर्तुमाह-उत्तरप-दत्वे चेति । अत्र च वार्त्तिकोंऽशद्वयम् । तत्रोत्तरपदत्वे चेत्ये-कोंऽशः । अपदादाविति द्वितीयोंऽशः । प्रकृते चाद्यांशेनैव प्र-योजनम् । वार्त्तिकस्वरूपं तु ( उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः ) इति । अत्र च वार्त्तिके उत्तरशब्देनोत्त-रपदं लक्ष्यते उत्तरपदशब्दश्च समासचरमावयवे रूढः । ( प्रकृ-तिजन्यबोधे प्रकारीभूतो भाव ) इति नियमात्पदत्वे इत्यस्य पदसंज्ञायामित्यर्थः । तथा च उत्तरपदस्य पदत्वे तत्प्रयुक्ते कार्ये कर्तव्ये लुमता लुप्ते प्रत्ययलक्षणं नेति प्रथमांशस्यार्थः तेन विम-लदिवीत्यत्रोत्वं परमवाचेत्यादौ कुत्वं सुधियावित्यादौ शाकल-ह्रस्वत्वञ्च न भवति । उक्तनिषेधो नाऽविशेषणेत्याह-अपदा-दिविधाविति । पदस्यादिः पदादिस्तस्य विधिः पदादिविधिः न पदादिविधिरपदादिविधिस्तस्मिन् । पदादिविधावुक्तनिषेधो न प्रवर्तते इति द्वितीयांशार्थः । अत्र पदादिविधिश्च सात्पदाद्यो-रित्येव । तेन दधिसेचाविसादौ (सात्पदाद्योरि)तिषत्वनिषेधसि-

द्धिः । इदमेवाह—मूले अपदादिविधौ किम् । दधिसेचावित्यादिना । पदादिविधिश्च सात्पदाद्योरित्येवेति प्रागुक्तन्तत्फलं तु परमवुधावित्यादौ भष्भावाऽभावरूपम्बोध्यम् । नचोत्तरपदत्व इत्यनेनोत्तरपदस्य पदत्वप्रयुक्तकार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेधात् । न च शुक्लकर्णः—शङ्कुकर्ण इत्यादौ ( कर्णो वर्णलक्षणादि ) ति सूत्रेण वर्णलक्षणवाचकात्परो यः कर्णशब्द उत्तरपदभूतः स आद्युदात्त इत्यर्थकेनाऽऽद्युदात्तत्वं न स्यादिति वाच्यम् । [ उत्तरपदादिः कर्णो वर्णलक्षणादि ] त्यादावुत्तरपदशब्दस्य समासचरमावयवमात्रे रूढेरदोषात् । अयञ्च निषेधः उत्तरपदस्य कार्यित्व एवेति [ ङमो ह्रस्वादचि ङमुणनित्यमि ] ति सूत्रे भाष्ये उक्तम् । तेन माषकुम्भवापेनेत्यत्र ( पदव्यवायेऽपी ) ति सूत्रेण णत्वनिषेधसिद्धिः । कार्यित्वाऽनिवेशे तु षष्ठीतत्पुरुषसमासे कुम्भेत्युत्तरपदस्य पदत्वप्रयुक्तकार्ये कर्तव्ये प्रत्ययलक्षणनिषेधादपदत्वेनोक्तसूत्रेण णत्वनिषेधो न स्यात् । न च कार्यित्वनिवेशे वहुचूपूर्वके वहुवाचौ वहुसेचावित्यादौ कुत्वापत्तिः स्यादेवेति वाच्यम् । ( बहुचपूर्वस्य च पदादिविधावेव प्रत्ययलक्षणमि ) ति वचनान्तरेणोक्तापत्तेर्वारणात् । न च कार्यित्वनिवेशे पूर्वदण्डिप्रिय इत्यत्र त्रिपदे वहुव्रीहाववान्तरतत्पुरुषे दण्डिशब्दस्योत्तरपदत्वेन प्रत्ययलक्षणप्रतिषेधात्पदत्वाभावेन नलोपो न स्यादिति वाच्यम् । (१)व्याख्यानादुत्तरपदशब्देन

---

(१) व्याख्यानादिति । वार्त्तिकप्रत्याख्याननये ( असर्वनामस्थाने यची ) त्यत्र सुवित्यनुवर्त्य यकारादावजादौ सर्वनामस्थाने पूर्वम्पदन्न मध्ये चेत्तत्परकं सुवन्तमस्ति तदपि पदन्नेति रीत्या व्याख्याने ( तस्मिन्निति निर्दिष्टे पूर्वस्ये ) ति परिभाषयाऽव्यवहितसुवन्तस्यैव-

मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणेन दण्डिनो मध्यमपदत्वाक्रान्ततया निषेधाऽप्रवृत्तेरदोषादित्यलम् ॥

( अन्वादेशे नपुंसके वा एनद्वक्तव्यः ) । अयमेनदादेशो द्वितीयैकवचनेऽम्येवेति व्याख्यातारः । नन्वेनादेशवदेनदादेशस्यापि विभक्तिपरत्व एव विधानादमश्च क्लीवे लुक्त्वादम्येवेति व्याख्यातृणामुक्तिरयुक्तेति वाच्यम् । तस्य लुका लुप्तत्वेऽपि वचनसामर्थ्यात्प्रत्ययलक्षणेन विभक्तिपरत्वसत्त्वात् । नन्वौट्शसादिषु कथमेनदादेशः स्यादिति वाच्यम् । तत्र ( द्वितीयाटौस्स्वेन इति सूत्रेणैनादेशेनैव निर्वाहात् वस्तुतस्तु सूत्रे एवैनद्वक्तव्यः । अर्थात् ( द्वितीयाटौस्स्वेन इति सूत्रेणैनादेशम्परित्यज्यैनदादेश एव विधेय इत्यर्थः । न च सूत्रेणैनदादेशविधाने पुंसि एनम् एनावित्यादेः कथं सिद्धिरिति वाच्यम् । तस्य च त्यदाद्यत्वेनैव सिद्धेः । न च ( येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती ) ति न्यायेनैनदस्त्यदाद्यत्वापवादत्वेन तत्र कृते कथं त्यदाद्यत्वमिति वाच्यम् । ( त्यदाद्यत्वेन सिद्धमि )ति भाष्यासङ्गतिभिया तस्य तदपवादत्वेऽपि त्यदाद्यत्वेनोपपत्तेरभ्युपगमात् । नचैनदादेशस्योपसर्जने चारितार्थ्येनापवादत्वाभिधानमसङ्गतमिति वाच्यम् । ( एतदस्त्रतसोरि ) ति साहचर्यादेनदादेशस्याप्युपसर्जनेऽप्रवृत्तेः । नचैवमप्येनदादेशस्य क्लीवेऽमि चारितार्थ्यम् द्वितीयादिग्रहणस्यैवम-

---

लाभेन तदेकवाक्यतया वार्त्तिकारम्भनयेऽपि तथैव युक्तमित्यभिप्रायकाद्व्याख्यानादित्यर्थः । तथा च तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासान्तिमपदाव्यवहितपूर्वत्वानाक्रान्तस्य पदत्वव्यपदेशे कर्तव्ये तस्य कार्यित्वे च प्रत्ययलक्षणप्रतिषेध इति बोध्यम् ।

भ्यचारितार्थ्यादिति वाच्यम् । ( आर्द्धधातुके ) इति साहचर्यादस्यापि द्वितीयादिविषये प्रागेव प्रवृत्तेः । ध्वनितमिदं सर्वं भाष्ये ( यद्येनत् क्रियते ) इत्याद्येकदेशयुक्त्येति बोध्यम् । एकदेशिभाष्यस्वरूपं तु ( यद्येनत् क्रियते एनो न वक्तव्यः कथमेनदित्यादि त्यदाद्यत्वेन सिद्धमि ) ति ।

वस्तुतस्तु—नेदं भाष्यमेकदेश्युक्तिः । तक्रन्यायमूलकयेनत्वाप्राप्तिन्यायस्य त्यदाद्यत्वविषयेऽप्रवृत्त्या, ( आर्धधातुके ) इत्यत्रेव ( द्वितीयाटौस्स्वेन ) इत्यत्रापि विषयसप्तम्याः समाश्रित्या वा सत्यप्येनदादेशे त्यदाद्यत्वेन सिद्धेरेनादेशो न कर्तव्य इति भाष्यस्याशयात् । तक्रन्यायस्य त्यदाद्यत्वविषयेऽप्रवृत्तेरेव तच्छब्दस्य प्रथमैकवचने स इत्यत्र [ तदोः सः सावनन्त्ययो- रि ) ति सत्वे त्यदाद्यत्वप्रवृत्तिः । न च यदिघटितत्वादस्य भाष्यस्यैकदेश्युक्तित्वं स्यादिति वाच्यम् । एकदेश्युक्तेर्यदिघटितत्वनियमाऽभावादुक्तपूर्वपक्षस्योत्तराप्रदानेन भाष्यान्तरविरोधाभावेन चोक्तभाष्यस्य सिद्धान्त्युक्तित्वस्यैव सिद्धत्वादिति दिक् ॥

इह अहः अहोभ्यामित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्त इति । ननु अह इत्यत्र ( रोऽसुपी ) त्यस्यानवकाशत्वादपवादत्वेन नलोपस्य बाधान्मूलोक्तमयुक्तमिति चेन्न । उक्तसूत्रद्वयस्य नलोपोत्तरं सावकाशत्वेनाऽपवादत्वाऽभावात् । असम्भवे सत्येवाऽपवादत्वस्य भाष्योक्तेः । न च नलोपेऽकारस्य रौ रे वाऽविशेषादन्यतरविधानेनैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम् । सम्बुद्धौ नलोपनिषेधादहर्गच्छेत्यादावुत्वाऽभावेन दीर्घाहो निदाघेत्यादावुत्वसम्पादनद्वारा-

चरितार्थत्वात् । न च नकारोच्चारणसामर्थ्यलब्धेन नान्तानुकरणेन नान्तस्याऽहन्शब्दस्य रुरिति व्याख्यानकरणान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या श्यामादौ व्यावृत्त्या च नकारस्य चरितार्थत्वात्तेन नलोपबाधेऽप्रामाण्यात् । तथा च नलोपदृष्ट्या रत्वरुत्वयोरसिद्धत्वान्नलोपो दुर्वार एवेति शङ्काग्रन्थाशयः ।

तं समाधत्ते—अहन्नित्यावर्त्यैकेनेति । (अहन्नि) ति सूत्रमावृत्त्या सूत्रद्वयं जातं तत्रैकेन रुत्वविधानमपरेण नलोपबाध इति भावः । आवृत्तौ च रूपरात्रिरथन्तरेषु रुत्वं वाच्यमि) ति वार्त्तिकमेव प्रामाण्येनोपन्यस्तम् । अन्यथा (आवृत्त्यभावे) नलोपोत्तरमकारस्य रेफादेशेनैव सिद्धे वार्त्तिकस्य स्पष्टेनैव वैयर्थ्यं स्यात् । न च आगच्छाहो रूपं दर्शयिष्याम—आगच्छाहो रात्रिरेषा गतेत्यादौ रुत्वकृतविशेषस्य स्पष्टत्वात्तत्र वार्त्तिकस्य चरितार्थत्वेन ज्ञापकत्वमसम्भवीति वाच्यम् । वार्त्तिकस्य ज्ञापकतापरभाष्यप्रमाण्यात्तस्य सम्बुद्धावप्रवृत्तेः । नचोक्तभाष्यप्रामाण्यान्नात्र नलोप इत्येवास्तु कल्पनमिति वाच्यम् । वार्त्तिकसिद्धवचनकल्पनापेक्षयाऽऽवृत्तेरेव लघीयस्त्वादिति भावः । आवृत्तस्य पदान्तेऽहन्निति निपात्यते इत्यर्थः । इदमसम्भव एवाऽपवादत्वमिति वार्त्तिकनये नलोपेऽहन्नित्यस्य चारितार्थ्याऽभिप्रायेण बोध्यम् । वस्तुतस्तु (सत्यपि सम्भवे बाधनं भवती) ति भाष्यसिद्धान्ताद्रुत्वरत्वे नलोपापवादभूत एव । न च सम्बुद्धौ नलोपाऽप्राप्तिविषये रत्वरुत्वयोश्चरितार्थत्वात्कथं येन नाप्राप्तिन्यायप्रवृत्तिरिति वाच्यम् । निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायाविषयसत्वान्निषेधेनाऽपि तस्य बाधात् । एतेन सम्बुद्धौ चारितार्थ्यमित्यपा-

स्तम्। ध्वनितश्चेदम् ( अपवादो रु र्न बाधिष्यते ) इत्यर्थकभाष्येण। एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्कातत्समाधानादि वार्त्तिकानुसारिणोरिति दिक् ॥

तदन्तस्यापि रुत्वरत्वे इति। (अहन्) इत्यत्र पदाधिकाराधिकृतं पदमिति विशेष्यम् अहन्शब्दश्च विशेषणमिति ( येन विधिस्तदन्तस्ये ) तिसूत्रेण तदन्तविधिः। एवञ्च अहन्शब्दान्तस्यापि रुरिति सूत्रार्थे सम्पन्ने तदन्ते दीर्घाहनशब्देऽपि रुत्वसिद्धिरिति ग्रन्थाशयः। न च ( प्रत्ययलोपे प्रत्ययलक्षणमि ) ति सूत्रेण समासकालिकमन्तर्वर्तिविभक्तेराश्रयणात्समासैकदेशस्याप्यहन्शब्दस्य पदत्वाद्रुत्वे सिद्धे तदन्तविधिसाधनप्रयासो व्यर्थ इति वाच्यम्। ( उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेध ) इतिप्रतिषेधेन प्रत्ययलक्षणस्याऽप्रवृत्तेः। न च ( ग्रहणवता प्रातिपदिकेन तदन्तविधि र्नास्ति ) इति परिभाषया तदन्तविधिनिषेधात्कथमत्र तदन्तविधिरिति वाच्यम्। प्रत्ययविधिविषय एवोक्तपरिभाषाप्रवृत्तेः ( असमासे निष्कादिभ्य ) इति सूत्रे भाष्यकैयटयोः स्पष्टत्वात्। परिभाषा चेयं (सपूर्वाच्चे) ति सूत्रेण ज्ञापिताऽस्ति। तथा हि–पूर्वादिनिरित्यत्र तदन्तविधौ पूर्वशब्दान्तादिनिरित्यर्थे सपूर्वादपि पूर्वशब्दादिनिप्रत्ययसिद्धौ ( सपूर्वाच्चे ) ति पृथग्भूतं व्यर्थीभूय परिभाषाज्ञापकम्। परिभाषायां ज्ञापितायां सत्यामनया तदन्तविधेर्निषेधेन (पूर्वादिनिरि ) ति सूत्रेण सपूर्वात्पूर्वशब्दात्प्रत्ययाऽसिद्ध्या तदर्थं ( सपूर्वाच्चे )ति सूत्रं पृथगावश्यकमिति तस्य स्वांशे चारितार्थ्यं जातमित्यलम्।

इह हल्ङ्यादिलोपे प्रत्ययलक्षणेनाऽसुपीति निषे-

धाद्रुत्वाऽभावे रुरिति । अयम्भावः, ( हल्ङ्यादि ) सूत्रेण दीर्घनिमित्तीभूतस्य सोः पश्चाद्विनाशे सम्भाविते ( अकृतव्यूहाः पाणिनीयाः ) इति परिभाषया दीर्घात्प्राक् हल्ङ्यादिलोपस्यै-वौचित्यमिति । वस्तुतः सत्यपि सो लोपे प्रत्ययलक्षणन्यायेन सुबुद्ध्या दीर्घनिमित्तस्य सोरविनाशात् ( अकृतव्यूह ) परिभा-षाया अप्रवृत्तिः । अस्याश्चाऽनित्यत्वादसद्भावाच्च प्रकृते परत्वा-द्दीर्घ एव युक्तः । अत एव ( परत्वादुपधादीर्घ ) इति हलन्त-पुल्लिङ्गग्रन्थ उपपद्यत इति दिक् ।

तस्याऽसिद्धत्वान्नान्तलक्षण उपधादीर्घ इति । ननु रुत्वदीर्घयोः प्राप्तयोः परत्वाद्रुत्वं प्रबाध्य दीर्घे जाते मूलोक्त-ग्रन्थोऽसङ्गतः स्यादिति चेन्न । ( अकृतव्यूहाः पाणिनीयाः ) इतिपरिभाषया दीर्घोत्तरं रुत्वेन दीर्घनिमित्तस्य नान्तलक्षणस्य विनाशसम्भवात्प्राक् दीर्घाऽप्रवृत्तेः । एतत्परिभाषाऽसत्त्वे तूक्त-रीत्या रुत्वात्प्राक्दीर्घप्रवृत्तावेतद्ग्रन्थाऽसङ्गतिस्तिष्ठत्येवेति भावः ।

असृजः पदान्ते कुत्वमिति । पदान्तविषयेऽसृज्शब्द-स्य कुत्वं भवतीति तदर्थः । न च नञ्पूर्वात्सृजः क्विपो विधा-त्क्विनोऽविधानेन कथं कुत्वमितिवाच्यम् । ( क्विन्प्रत्ययस्य कु-रि ) ति सूत्रे ( क्विन्यतः कुरि ) त्येव वक्तव्ये प्रत्ययग्रहणसाम-र्थ्यादिह वीप्सागर्भबहुव्रीहिलाभेन यस्माद्यस्मात्क्विन् दृष्टस्तस्य तस्य कुत्वमिति फलितार्थे जाते स्रगित्यत्र सृजः क्विन्विधानाद-सृगित्यत्र क्विप्यपि कुत्वप्राप्तेः । नचोक्तरीत्या क्विप्यपि कुत्वे विश्व सृडित्यत्रापि कुत्वं प्राप्नोतीति वाच्यम् । (सृजिदृशो र्झल्यमकि-ती)ति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगप्रामाण्यादनव्ययपूर्वपदे कुत्वाभावज्ञापनेनादोषात् । अव्ययपूर्वपदे च कुत्वस्य बोधनाच्च ।

ननु षत्वविधायके ( व्रश्चादि ) सूत्रे विशेषरूपेण सृजमृजयजां ग्रहणेन षत्वस्य कुत्वबाधकतया षत्वमेव प्राप्नोति न कुत्वमित्यरुचिं मनसि निधाय प्राह—यद्वा व्रश्चेति सूत्र इति । इदं हि सूत्रं पदान्तविषये षत्वविधायकम् । षत्वस्य च कुत्वबाधकता । अतः क्विबन्तस्याऽसृजः षत्वमेव समुचितम् । नचैवं स्रगिति कथं सिध्येदिति वाच्यम् । ( ऋत्विग् ) सूत्रेण निपातनात्तत्सिद्धेः । तथा हि अन्यादृशप्रयोगप्राप्तावन्यादृशप्रयोगकरणमेव निपातनम् । निपातनेन त्वनयोरपवादाऽप्रवृत्तिमात्रबोधनं, कुत्वं तु शास्त्रेणैव भवति । एतेनोक्तव्याख्यानेन निपातनादपदान्तेऽपि कुत्वं भवतीति प्रत्युक्तम् । नचैवमसृगिति प्रसिद्धप्रयोगस्य कुत्वघटितस्य कथं सिद्धिरिति वाच्यम् । अस्यतेः औणादिकऋच्प्रत्ययेन तत्सिद्धेरिति भावः ॥

शावल्लोपस्य स्थानिवत्त्वेनाऽझलन्तत्वान्न नुमिति । ननु यङन्ताद्बेभिद्यतेः क्विप्प्रत्ययेऽल्लोप—यलोपोत्तरं सिद्धस्य बेभिच्छब्दस्य प्रथमाबहुवचने जसि तत्स्थाने शौ तस्य ( शि सर्वनामस्थानमि ) त्यनेन सर्वनामस्थानत्वात्तस्मिन्झलन्तलक्षणनुमः प्राप्त्या बेभिदीति रूपं न सिध्यतीति चेन्न । अल्लोपस्य स्थानिवद्भावाज्झलन्तत्वाऽभावेन नुमोऽप्राप्तेः । नचोक्तरीत्या झलन्तलक्षणनुमोऽप्राप्तावप्यजन्तलक्षणनुमश्च प्राप्तिः स्यादेवेति वाच्यम् । अजन्तलक्षणनुमः कर्तव्यत्वे स्थानिवत्त्वाप्राप्त्या नुमः सुतरामप्राप्तेः । स्वविधौ स्थानिवद्भावाभावस्य भाष्यानुक्तेः । न च ( क्वौ लुप्तं न स्थानिवदि )त्यनेन स्थानिवद्भावनिषेधेन झलन्तलक्षणनुमः प्राप्तिर्दुर्वारैवेति वाच्यम् । तस्याऽसार्वत्रिकत्वेनात्राऽप्रवृत्तेः । ( क्वौ विधिं प्रति न स्थानिवदि ) त्यस्यैव सार्वत्रिकत्वादिति भावः ॥

ननु—

जायन्ते नव सौ तथाऽपि च नव भ्यांभिस्भ्यसां सङ्गमे ।
षट् संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि त-
ज्जानन्ति प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥

इति प्राचीनस्य शुष्कप्राक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरयति—

गवाक् शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपै र्नवाधिकशतं मतम् ॥ १ ॥

स्वम् सुप्सु नव षड् भादौ षट्के स्यु स्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥

इति ।

इह शब्दपरत्वात्पूजार्थकत्वाऽभावेनाऽञ्चते र्नलोपः । भेदत इत्यस्य भेदेनेत्यर्थः । आद्यादित्वात्तसिः । नवेत्यस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः । ननु द्वन्द्वान्ते श्रूयमाणस्य द्वन्द्वघटितसमासघटकस्य प्रत्येकं सम्बन्धस्यान्यत्र दृष्टत्वेनाऽस्यातथात्वात्कथं प्रत्येकं सम्बन्धोपादानमिति चेन्न । ( द्वन्द्वान्ते द्वन्द्वमध्ये द्वन्द्वादौ वा श्रूयमाणपदं प्रत्येकमभिसम्बध्यत ) इत्यस्याऽपूर्ववचनत्वाभावेन साहित्यविशिष्टानान्द्वन्द्वविधानात् एकधर्मावच्छिन्नान्वयित्वरूपत्वेनान्वयितावच्छेदकावच्छिन्नस्य साहित्यस्य च समासाघटकपदोपस्थापितस्यापि धवखदिरौ छिन्धीत्यादिवाक्यजन्यशाब्दबोधे भानेन तद्वदिहाऽपि विभक्तिव्यवधानेऽपि नवपदार्थेऽन्वयोपपत्तेः ।

न चेह चयो द्वितीया इति पक्षे ककारस्य खका-

रेण षण्णामाधिक्यं शङ्क्यम् । चर्त्वस्याऽसिद्धत्वादिति । अयम्भावः, गवाक्शब्दस्य सप्तमीबहुवचने सुपि ( खरि च )ति सूत्रेण चर्त्वेन ककारे तस्य ( चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ) इति वार्त्तिकेन खकारे कृते षड्रूपाणीति नाशंकनीयम् । चर्त्वस्याऽसिद्धत्वेनोक्तवार्त्तिकस्याऽप्रवृत्तेरिति । कुक्पक्षे तु कुक्को जश्त्वदृष्ट्याऽसिद्धत्वेनाऽप्रवृत्तावुक्तवार्त्तिकेन द्वितीयादेशे त्रयाणां रूपाणां वृद्धिर्भवत्येवेति दिक् ॥

नित्यत्वात्परादपि नुमः प्राक् अप्तृन्निति दीर्घः स्वाम्पि । निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव स्वम्पीति । अयम्भावः, सुष्ठु आपो यस्मिन् सरसीति विग्रहनिष्पन्नस्य स्वप्शब्दस्य प्रथमाबहुवचने जसि नुम्दीर्घयोः प्राप्तौ दीर्घापेक्षया नुमः परत्वनित्यत्वयोः सत्वान्नुमः प्राप्तावपि प्रतिपदोक्तत्वात्तम्बाधित्वा दीर्घ एव प्रवर्तते इति । प्रतिपदोक्तस्य निरवकाशत्वे सत्येव बाधप्रयोजकत्वमिति भाष्यमते दीर्घस्य निरवकाशत्वरूपप्रतिपदोक्तत्वाऽभावान्नुमेवेति बोध्यम् ।

नागेशास्तु—निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वेन प्रकृते तदभावादबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि सति स्वाम्पीत्येवेत्याहुः ॥

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

## अथाऽव्ययप्रकरणम् ।

स्वरादिनिपातमव्ययम् । स्वरादयश्च निपाताश्चैषां समाहारद्वन्द्वः । ननु स्वरादिशब्दानामपि चादिष्वेव पाठं विधाय प्रकृतसूत्रं च विहाय ( तद्धितश्चाऽसर्वविभक्तिरि ) तिसूत्रचतुष्टयस्यापि ( चादयोऽसत्त्वे ) इत्यत ऊर्ध्वं पाठं कृत्वा निपातशब्देनैवाव्ययशब्दानामपि व्यवहारोऽस्तु किमव्ययशब्दव्यवहारेणेति चेन्न । असत्ववाचिचादीनां निपातसंज्ञाविधानेन सत्त्ववाचिनां तेषान्तदविधानात् स्वस्ति वाचयति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्ववाचकतया तेषां निपातसंज्ञाऽनापत्तेः । सत्वासत्वोभयवाचिस्वरादीनां चाव्ययसंज्ञैवेति व्यवस्थानापत्तेश्चेति यथोक्तमेव न्याय्यमिति बोध्यम् ।

स्वरिति—स्वर्गे परलोके च वर्तते । अन्तरिति—मध्ये । प्रातरिति—प्रत्यूषे । पुनरिति—अप्रथमे विशेषे च । सनुतरिति—अन्तर्धाने । इमे स्वराद्याः पञ्च रेफान्ताः ।

उच्चैस—महति । नीचैस—अल्पे । शनैस—क्रियामान्द्ये । ऋधक्—सत्ये । वियोगशीघ्रसामीप्यलाघवेषु च । ऋते—वर्जने । आरादिति—दूरसमीपयो र्वाचकः । पृथगिति—भिन्नार्थकः । ह्यसिति—अतीतेऽन्हि वर्तते । श्व इति—अनागतेऽन्हि विद्यते । दिवेति—दिवसबोधकः । रात्राविति—निशि वर्तते । सायमिति—निशामुखबोधकः । चिरमिति शब्दः—बहुकाले वर्तते । मनाक्—ईषच्छब्दौ—अल्पेऽर्थे स्तः । जोषमित्यव्ययं—सुखे पाने च विद्यते । तूष्णीमिति—मौनार्थकम् । बहिस्—अवस् शब्दौ बाह्यार्थकौ ।

समयेति—समीपमध्ययो र्वाचकः । निकषाशब्दः—अन्तिकार्थबोधकः । स्वयमित्यात्मनेत्यर्थे वर्त्तते । वृथेति—व्यर्थेऽस्ति । नक्तंशब्दो रात्र्यर्थकः । हेताविति—निमित्तार्थकः । ऋद्धेति प्राकाश्ये वर्तते । स्फुटावधारणयोरद्धाशब्दः । तत्त्वेऽतिशये चोक्तशब्द इति केचित् । सामेतिशब्दोऽर्थजुगुप्सितयोर्बोधकः । वच्छब्द स्तेन तुल्यमित्यर्थे वर्तते । सना सनत् सनाद इमे त्रयो नित्यार्थकाः । उपधा शब्दो भेदार्थकः । तिरस् अन्तर्द्धौ वर्तते । तिर्यक्परिभवयोश्च वाचकः । अन्तरा शब्दो मध्यार्थको विनार्थकश्च । अन्तरेणेति—वर्जने वर्तते । ज्योक् शब्दः । कालभूयस्त्व-प्रश्न-शीघ्र-सम्प्रत्ययार्थकः । कमिति शब्दो—वारि-मूर्ध-निन्दा-सुखार्थकः । शमिति-सुखार्थकः । सहसेति—आकस्मिक-विमर्शयो र्वर्तते । विना शब्दः—वर्जनार्थकः । नानेति—अनेक-विनार्थार्थकः । स्वस्ति शब्दो—मङ्गलवाचकः । स्वधाशब्दः पितृदाने वर्तते । अलं शब्दः—भूषण-पर्याप्तिशक्ति-वारण-निषेधार्थकः । वषट्-वौषट्-श्रौषट् इमे—हविर्दाने सन्ति । अन्यच्छब्दः—अन्यार्थकः । अस्तिशब्दः सत्तायां विद्यते । उपांशु शब्दः—प्रकाशोच्चारण-रहस्यार्थकः । क्षमाशब्दः—क्षान्त्यर्थः । विहायसेति-वियदर्थे वर्तते । दोषाशब्दः—रात्रिबोधकः । मृषामिथ्याशब्दौ—वितथार्थकौ । मुधाशब्दो—व्यर्थार्थकः । पुरेत्येव्ययं—अविरत-चिरातीत भविष्यद् आसन्नार्थकम् । मिथो—मिथश्शब्दौ-रहः—सहार्थार्थकौ । प्रायमित्यव्ययं बाहुल्यार्थकम् । मुहुरिति-पुनरर्थे वर्तते । प्रबाहुकमिति—समानकले-ऊर्ध्वार्थे च वर्तते । ( अत्र प्रवाहिकेति पाठान्तरम् ) आर्यहलमिति—बलात्कारार्थकम् । अत्र शाकटायनस्तु—आर्येति—प्रतिबन्धार्थकम् । हलमिति—प्रतिषेध

विवादार्थकम् । इति प्राह । आभीक्ष्ण्यमित्यव्ययं पौनः पुन्ये-ऽर्थेवर्तते । साकं सार्धं इमौ-सहार्थे स्तः । मनश्शब्दः-नत्य-र्थकः । हिरुक्शब्दो वर्जनार्थकः । धिक्शब्दो-निन्दा-भर्त्सन वाचकः । अम्शब्दो हि-शैघ्र्याल्पयो र्बोधकः । आम् शब्दो-ऽङ्गीकारार्थकः । प्रताम्शब्दो-ग्लानिवाचकः । प्रशाम् शब्दः समानार्थकः । प्रतान्शब्दो विस्तारे । मा माङ् शब्दौ-शङ्का-निषेधयो र्वर्तेते । इति ॥

प्रतामादिशब्दत्रये विचारः प्रस्तूयते-प्रताम् प्रशाम् शब्दयो र्मकारस्य नत्वन्नाशङ्कनीयम् । प्रतानितिनकारान्ताऽव्ययस्य पृथक्पाठसामर्थ्यान्मकारस्याऽपदान्तत्वाच्च नत्वाऽप्राप्तेः । प्रशानिति नान्तपाठो न साम्प्रदायिकः । नचास्य सान्तानुकरण-त्वेन नत्वविधानात्साम्प्रदायिकत्वमस्त्विति वाच्यम् । स्वरादि-शब्दे स्वरादेरिव नत्वस्याऽप्राप्तेः । अत्र च ( कृन्मेजन्त ) इति सूत्रस्थभाष्यस्वरसोऽप्येवमेव । नचोक्तसूत्र एव भाष्ये यदयं प्रशान्शब्दं स्वरादिषु पठतीत्युक्तन्तद्विरोध इति वाच्यम् । तस्य भाष्यस्यान्यथोपपत्तेः । तथा हि कृदन्तं यन्मकारान्तमिति प्रतामौ प्रताम इत्यत्राव्ययसंज्ञाया अतिप्रसङ्गमुद्भाव्य, आचा-र्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाऽव्ययसंज्ञा भवति, यदयं प्रशान्शब्दं स्वरादिषु पठतीत्युक्तम् । अत्र प्रशामौ प्रशाम इति शान्तिमद्वाचकस्य रूपे । गणे तु शान्त्यर्थकस्य लिङ्गाद्यनन्वयि-र्थकस्य पाठः तत्र यथा स्वरादीनाम्प्रयोग एव विसर्गो नतु गौणे तथाऽस्यापि प्रयोगे नत्वम् । यद्यप्यत्र (मो नो धातोरि) ति नत्वस्याऽसिद्धत्वात्सिद्धमव्ययत्वमिति कैयटेन व्याख्या-तं तथापि स्वरादिसम्वादेन गणे विकाराऽभावकल्पनेऽक्लृप्त-

कल्पना नेति ।

आकृतिगणोऽयमिति । आकृत्याऽऽकारेण गण्यतेऽसा-वाकृतिगणः । अयमव्ययशब्द आकृतिगणः । तेनाऽन्येऽपि शब्दा बोध्याः । तथा हि–काममिति स्वाच्छन्द्यवाचकः । प्रकाममित्यतिशयार्थकः । भूय इति पुनरर्थकः । साम्प्रत-मिति न्याय्यार्थकः । परमिति–किन्त्वर्थे । साक्षाच्छब्दः–प्रत्यक्षबोधकः । साचिशब्दः–तिर्यगर्थे वर्तते । सममित्यङ्गी-कारे । मङ्क्षु–आशु–एतौ शैघ्र्यबोधकौ । सम्वच्छब्दो–वर्षे । अवश्यं शब्दो निश्चयार्थकः । सपदि शब्दः शैघ्र्यार्थकः । बलवदित्यतिशयार्थकः । प्रादुस् आविस्शब्दौ प्रकाशार्थकौ । अनिशं–नित्यं–नित्यदा–अजस्रं–सन्ततम्–इमे सातत्यार्थ-काः । ओमिति–अङ्गीकारब्रह्मणो र्वाचकः । भूरिति पृथिवी-वाचकः । भुव इत्यन्तरिक्षे । झटिति–झगिति–तरसेति त्रयः शैघ्र्यार्थबोधकाः । सुष्ठुशब्दः प्रशंसार्थकः दुष्ठुशब्दोऽति-कष्टार्थकः । सुशब्दः पूजायामस्ति । अहशब्दः-आश्चर्यबोधकः । कुशब्दः–कुत्सितेषदर्थयोर्वाचकः । अञ्जसेत्यव्ययं तत्त्वे–शी-घ्रार्थे च मिथुशब्दो द्वावित्यर्थकः । भाजक्शब्दः शैघ्र्ये वर्तते । चिरस्य–चिरात्राय–चिरस्यऽचिरं–चिरेण–श्चिरादित्येते चिरार्थकाः । अस्तमिति विनाशे । आनुषक्-शब्दः–आनुपूर्व्यार्थकः अनुषक्शब्दः–अनुमाने । अम्नस्श-ब्दः–शीघ्रसाम्प्रतिकयोरस्ति । स्थाने इत्यव्ययं युक्तार्थकम् । चरं शब्दः–ईषदुत्कर्षार्थकः । सुदि शब्दः–शुक्लपक्षबोधकः । बदि शब्दः–कृष्णपक्षबोधकः । इत्यादि । चाद्यव्ययशब्दानुदा-हरति–चेत्यादिना । चशब्दः–समुच्चयाऽन्वाचयेतरेतर-

योग-समाहारेत्यर्थचतुष्टये वर्तते। वाशब्दो विकल्पाद्यर्थतुष्टये। तदुक्तं कोशे—

वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये।

इति। ह्वेति-प्रसिद्धौ। अह्वेति-पूजायाम्। एवशब्दोऽवधारणार्थकः-अनवक्लृप्त्यर्थकश्च। एवमिति-उक्तपरामर्शे। नूनं शब्दो-निश्चये तर्के च वर्तते। शश्वच्छब्दः-पौनः पुन्ये-नित्ये सहार्थे च वर्तते। युगपच्छब्दः-एककालार्थकः। भूयसिति-पुनरर्थे-आधिक्ये च। कूपच्छब्दः-प्रश्न-प्रशंसयोरास्ति कुविदिति-भूत्यर्थे-प्रशंसायां च वर्तते। नेदिति-शङ्का-प्रतिषेध-विचार-समुच्चयार्थकः। चेच्छब्दो-यद्यर्थे। चणिति-चेदर्थे। कच्चिदिति-इष्टप्रश्ने। यत्रेति-अनवक्लृप्तौ--अमर्षे--गर्हे--आश्चर्ये च वर्तते। नहेति--प्रत्यारम्भे। हन्तेति--हर्ष--विषादे--अनुकम्पायां-वाक्यारम्भे च। माकिः-माकिं--नकिरिति त्रयो--वर्जनार्थकाः। माङ् नञ् शब्दौ--स्वरादिषु प्रागुक्तौ। नचानयोरत्र पाठो व्यर्थ इति वाच्यम्। तस्य निपातत्वलाभाय सार्थक्यात्। नचोक्तशब्दद्वयस्य निपातत्वे लब्धे किम्फलं स्यादिति वाच्यम्। आद्युदात्तत्वसिद्धेरेव फलत्वादिति प्राञ्चः। फिट्स्वरेणाऽऽद्युदात्तत्वसिद्धौ। तदुक्तिश्चिन्त्येति बोध्यम्। केचित्तु-सत्त्ववचनानामप्यव्ययसंज्ञायै स्वरादिपाठ इति प्राहुस्तदप्ययुक्तम्। लक्ष्मीवाचकस्यापि माशब्दस्याऽव्ययत्वापत्ते र्दुर्वारत्वात्। एवञ्चोभयत्र पाठश्चिन्त्यप्रयोजन इत्यवधेयम्॥

यावत्तावच्छब्दौ साकल्य-अवधि-मान-अवधारणेत्यर्थचतुष्टये वर्तेते। साकल्ये उदाहरणं यथा-यावत्कार्यं तावत्कृतम्। अवधावुदाहरणं यथा-यावद्गन्तव्यं तावत्तिष्ठ। मा-

ने उदाहरणं यथा- यावद्दत्तं तावद्भुक्तम् । अवधारणे उदाहरणं यथा-यावदमत्रं ब्राह्मणानामन्त्रयस्व । स्वै-विशेष-वितर्कयोः । द्वै शब्दो-वितर्कार्थकः । ( न्वै इति पाठान्तरम् ) । रै शब्दौ-दानाऽनादरयोरस्ति । श्रौषट्-वौषाडिमौ-हविर्दाने वर्तेते । स्वाहाशब्दो-देवतोद्देश्यकदानेऽस्ति । स्वधाशब्दः-पितृद्देश्यकदाने । तुम्मिति-तुङ्कारे । तथाहीति-निदर्शनार्थकः । खलुशब्दो-निषेध-वाक्यालङ्कार-निश्चयेषु । किल् शब्दः-वार्त्ताऽ-लीकयोर्वर्तते । अथशब्दः-मङ्गल-अनन्तर-आरम्भ-प्रश्न-कात्स्न्र्य-अधिकार-प्रतिज्ञा-समुच्चयेषु वर्तते । स्मशब्दः-अतीत-पादपूरणयोरस्ति । आदह शब्दः-अपक्रम-हिंसा-कुत्सनार्थकः । अहमित्यव्ययं-सुबन्तप्रतिरूपकम् । वास्मित्यव्ययम्-युवामित्यर्थे । अस्तीत्यव्ययं तिङन्तप्रतिरूपकम् । एवमस्मीत्यव्ययम्-अहमर्थे । आहेत्यव्ययम्-उवाचेत्यर्थे । आसेत्यव्ययं बभूवेत्यर्थे । इत्यादि ॥

तद्धितश्चाऽसर्वविभक्तिः । अत्र सर्वशब्दस्य (सर्वः पटो दग्ध) इतिवदवयवकात्स्न्र्यार्थत्वादाह-यस्मात्सर्वा विभक्तिरिति । वचनत्रयात्मिका विभक्तिरित्यर्थः । नोत्पद्यत इति । किन्त्वेकवचनात्मिकैव विभक्तिरुत्पद्यत इत्यर्थः । ननु सुबादिविधायकसूत्रस्य ( द्व्येकयो र्द्विवचनैकवचने ) इत्यादिसंख्याबोधकशास्त्रैः ( प्रातिपदिकार्थलिङ्गेत्यादि ) कारकबोधकशास्त्रैश्च सहैकवाक्यत्वेन सुपां विधानमिति पक्षे अव्ययार्थे संख्यायाः कारकस्य चासत्त्वाद्विभक्त्युत्पत्त्यसम्भवेनैकवचनोत्पत्तिरपि न सम्भवति । नच (अव्ययादाप् सुपः) इति ज्ञापकाश्रयणेनाव्ययाद्विभक्त्युत्पत्तिः स्यादिति वाच्यम् । तथा सति । स-

र्वासामपि विभक्तीनामुत्पत्तिसम्भवात् । किञ्च–विहितानां नियम इति पक्षेऽपि सर्वेषु प्रातिपदिकार्थकर्माद्यर्थेषु विभक्तीनां विधेयतया प्रधानप्रत्ययस्यानुरोधात् गुणभूतप्रकृतिभेदकल्पनया सकलविभक्तीनामुत्पत्तौ लोपेनैव जातस्य निवृत्तिः स्यात् सत्यां च तन्निवृत्तौ कल्पितगुणस्वरूपस्य स्वत एव निवृत्तिः स्यात् । एवञ्चैकवचनमपि न सम्भवति । अर्थनियमप्रत्ययनियमभेदाभ्यां नियमस्य द्वैविध्यमस्ति । तत्र प्रकृतापेक्ष–सामान्यापेक्षभेदाभ्यां प्रत्ययनियमस्यापि द्वैविध्यमस्ति । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते कर्मादियोग्यप्रातिपदिकात्प्रथमैवेत्यर्थनियमाऽऽकारः । विभक्तीनामानियतत्वात् पक्षेऽस्मिन् सप्ताऽपिविभक्तयोऽव्ययेभ्यः समुत्पद्यन्ते। कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव न करणादौ । कर्मादियोग्ये कर्मादिरहितप्रातिपदिकार्थे एव प्रथमा न तु कर्मादौ । संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि न तु द्वित्वादावित्याकारः प्रकृतार्थापेक्षप्रत्ययनियमः । अत्राऽपि पक्षेऽव्ययेभ्यः सप्तानामपि विभक्तीनां लाभः । अथ प्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव नान्यस्मिन् । प्रातिपदिकाच्चेत्प्रथमा तर्हि मात्रग्रहणात् ( पर्युदासन्यायेन ) कर्मादियोग्ये कर्मादिरहितप्रातिपदिकार्थे एवेत्याद्याकारः सामान्यापेक्षप्रत्ययनियमः । अस्मिन्पक्षेऽव्ययेभ्य एकस्या अपि विभक्तेर्नोत्पत्तिसम्भव इति चेन्न । विभक्तिविधावुद्देश्यतावच्छेदकाऽवच्छिन्नादेकवचनमित्यर्थकेन ( एकवचनमि ) यतैव सूत्रेणेष्टसिद्धावेकग्रहणसामर्थ्यादेकत्ववत्यप्येकवचनमित्यर्थज्ञापनादव्ययेभ्य एकवचनोपपत्तेः । न चोक्तार्थज्ञापनाद्द्वित्व–बहुत्वयोरप्येकवचनमापद्येतेति वाच्यम् । तत्रैकवचनस्य द्विवचन–

बहुवचनाभ्यां बाधात् । द्विवचन-बहुवचनविधायके सूत्रद्वये द्विबहुग्रहणसामर्थ्यादेकत्वाऽभावेऽप्येकवचनादि भवतीति भावः । द्वित्वे द्विवचनस्य-बहुत्वे बहुवचनस्य च विधानेन द्वित्वाद्यभावे कर्मादौ ( एकवचनमि ) तिवचनमन्तराऽप्येकवचनस्य सिद्धावुक्तवचनस्य सामर्थ्येणाऽप्राप्तप्रापणार्थत्वात्कर्माद्यभावेऽपि प्रवृत्तौ विनिगमकाऽभावादव्ययेभ्यः सर्वविभक्त्येकवचनं सम्भवतीति ध्येयम् । अव्ययेभ्यः सर्वविभक्त्येकवचनोत्पत्तेरेव ( अव्ययादाप् सुपः ) इत्यत्र प्रत्याहारग्रहणं चरितार्थमन्यथाऽव्ययेभ्यो विभक्त्यनुत्पत्त्या व्यर्थं स्यात् । ( तृतीयासप्तम्योर्बहुलमि ) ति सूत्रे तृतीया-सप्तम्योरित्यपि चरितार्थमिति दिक् ॥

कृन्मेजन्तः । सूत्रे मान्त इति न कृदन्तस्य विशेषणं किन्त्वेजन्तस्यैव तद्विशेषणत्वमवधेयम् । न च मान्तस्यैव कृदन्तविशेषणत्वे को दोष इति वाच्यम् । तथा सति प्रशांमशब्दस्य श्रुत्या मान्तत्वस्य प्रत्ययलक्षणद्वारा कृदन्तत्वस्य च सत्त्वात्प्रकृतसूत्रेणैवाऽव्ययत्वासिद्धौ गणे तत्पाठस्य वैयर्थ्यापत्तेः । न च मान्तस्य कृदन्तविशेषणत्वाऽभावे किम्फलमिति वाच्यम् । प्रतामौ लक्ष्माचक्षाणौ लौरित्यादावव्ययत्वानतिप्रसङ्गस्यैव फलत्वात् । न च कृदन्तस्यैजन्तविशेषणत्वसद्भावे आधिशब्दस्य चतुर्थ्येकवचने सम्बोधनैकवचने च गुणे कृते आधये-हे आधे इत्यत्र कुम्भकारशब्दस्य चतुर्थीबहुवचने कुम्भकारेभ्य इत्यत्र ( बहुवचने कुम्भकारेभ्य इत्यत्र (बहुवचने झल्येदि) त्येत्वे च कृते कृत एजन्तत्वादव्ययसंज्ञा दुर्वारा स्यात् । नचाऽव्ययसंज्ञाया गुणाद्यपेक्षयाऽन्तरङ्गत्वात्तदृष्ट्या गुणादे र्बहिरङ्गत्वेनाऽसिद्धतया नोक्तस्थलेऽव्ययसंज्ञाविधानात्संज्ञाकार्यस्य च बहिरङ्गत्वेन सं-

ज्ञाया अपि बहिरङ्गत्वस्याऽक्षततयोक्तदोषस्य तदवस्थत्वात् । नचाऽव्ययमिति महासंज्ञाकरणेन लिङ्गाद्यनन्वयिनामेवाऽव्ययसंज्ञाविधानादाधये इत्यादीनान्तु लिङ्गाद्यन्वयित्वेन नोक्तदोषः सम्भवतीति वाच्यम् । लिङ्गाद्यन्वयिन्यव्ययीभावादाविव प्रकृते लिङ्गाद्यन्वयसद्भावेऽपि दोषप्रसक्तेः सम्भवादिति वाच्यम् । ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये ) ति परिभाषयाऽव्ययसंज्ञाबाधेनाऽदोषात् । न चोक्तपरिभाषया सन्निपातविघातकस्य लुको बाधेऽपि संज्ञाबाधे न मानमिति वाच्यम् । सन्निपातविघातकशास्त्रनिवृत्तेरिव सन्निपातविघातकशास्त्रहेतुभूताऽव्ययसंज्ञाया अपि तया निवृत्तेः । साक्षात्परम्परया वा स्वसन्निपातविघातकशास्त्रप्रवृत्तौ स्वयमनिमित्तं भवतीति परिभाषार्थस्वीकारात् । न च परम्परया सन्निपातविघातकशास्त्रे परिभाषाप्रवृत्तिस्वीकारे किम्फलमिति वाच्यम् । उपादास्तेत्यत्र कित्त्वोत्तरमित्त्वनिवृत्तेरेव तत्फलत्वात् । अन्यथा ( परम्परासन्निपातविघातके परिभाषाऽप्रवृत्तौ ) एज्विषये सन्निपातनिमित्तकास्वीयैज्विषयत्वरूपसन्निपातविघातक-( क्ङिति च ) तिसूत्रे परिभाषया निवृत्तेऽपि तया कित्त्वस्यानिवृत्तेरित्यलम् ॥

अथ विहितविशेषणान्नेह—अत्युच्चैसाविति । उच्चैरतिक्रान्तावत्युच्चैसावित्यत्राधिकरणशक्तिप्रधानस्याप्युच्चैश्शब्दस्य शक्तिविषये शक्तिमत्प्रधानत्वेन द्वितीयान्ततया ( अत्यादयः क्रान्ताद्यर्थे द्वितीयये ) तिसमासेऽवयवभूतादुच्चैरित्यव्ययात्परस्य सुपो लुक् प्राप्नोति तद्व्यावृत्तये विहितविशेषणमभ्युपगन्तव्यमित्यभिप्रायकोऽयं ग्रन्थः । ननूक्तस्थलीयदोषवारणाय विहितविशेषणाङ्गीकारात्तेनैवाऽऽधय इत्यत्रत्यस्यापि दोषस्य वा-

रणात्स्वरादिनिपातपरिभाषया वारणपरभाष्यविरोध इति चेन्न । अङ्गसंज्ञाविधायकसूत्रे विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताऽङ्गविशेषणादित्यर्थः । तथा च आप्सुप्भ्यामाक्षिप्ताङ्गस्याऽव्ययरूपस्यैव ग्रहणेन कुम्भकारेभ्य इत्यादावुक्तपरिभाषयाऽव्ययसंज्ञानिवृत्तिद्वारा लुग्निवृत्तिपरभाष्येणाविरोधात् ।

ननु ( अव्ययप्रसंज्ञाविधौ प्रयोजनं सर्वनामाऽव्ययसंज्ञायामि ) ति भाष्येण तदन्तविधौ विहितविशेषणसद्भावेऽप्यत्युच्चैसिति समुदायस्याव्ययत्वातिप्रसङ्गो दुर्वार इति चेन्न । अव्ययेति महासंज्ञाकरणसामर्थ्येन लिङ्गाद्यन्वयायोग्यस्यैवाव्ययसंज्ञाविधानादत्युच्चैसिति समुदायस्य लिङ्गाद्यन्वययोग्यत्वेनातिप्रसक्तेरभावादित्यभिप्रेत्याह-यद्यप्यव्ययसंज्ञायां तदन्तविधिरस्तितथापि न गौण इति । सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदत्वेन बोधकमित्यव्ययेतिमहासंज्ञाकरणबलात्तादृशार्थानामेव गणेऽनुकरणावश्यकत्वादितरेषामनुकरणे प्रमाणाऽभावान्न समुदायस्याऽव्ययत्वमिति भावः । वस्तुतः, ( प्रधानाऽप्रधानयो र्मध्ये प्रधाने कार्यसंप्रत्यय ) इति न्यायात् । (१)सर्वनामसंज्ञासाहचर्याच्च (२)प्रसिद्धा-

---

(१) ननु ( प्रधानाऽप्रधान ) न्यायस्यार्थनिर्देशविषयत्वादिह च स्वरादिनिपातानां शब्दपरत्वेनार्थपरत्वाभावान्नोक्तन्यायावसर इत्यत आह–सर्वनामेति ॥

(२)प्रसिद्धमित्यस्य व्याख्यानं पदान्तरानपेक्षेति । अन्तरङ्गमित्यस्याऽनुपसर्जनीभूतमित्यर्थः । अयंभावः, उच्चैश्शब्दस्य केवलप्रयुक्तस्योर्द्ध्वदेशनिष्ठाधिकरणत्वप्रतिपादकत्वेन स्वार्थमात्रप्रतिपादकतयाऽन्तरङ्गत्वम् । अत्युच्चैसावित्यत्र तु वृत्तिघटकस्य राजपुरुष इति

न्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनोऽ ग्रहणान्न समुदायस्य नाऽव्ययवयवस्य संज्ञा भवतीति एतादृशार्थस्य ग्रहणादेव भाष्ये सर्वनामसंज्ञासूत्रस्थाऽपसर्जनप्रतिषेधमनुवर्त्यात्युच्चैसावित्यादावनव्ययत्वस्प्रतिपाद्य तत्प्रत्याख्यानरीत्याऽस्यापि प्रत्याख्यानमभिहितम् । तथा च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव अव्ययात्परत्वस्याप्यभावात् । न च उच्चैरौ उच्चैराभ्यामित्यत्राव्ययात्परस्या विभक्ते र्लुग्वारणाय विहितविशेषणादेरावश्यकत्वमिति वाच्यम् । उक्तप्रयोगाणाम्भाष्येऽनभिधानात् ।

ननु (अव्ययादाप्सुपः) इत्यत्राप्ग्रहणं व्यर्थम् । अव्ययसंज्ञकशब्दानां लिङ्गत्वाऽभावाट्टापश्च स्त्रियां विहितत्वेनाऽव्ययादविहितत्वादित्याह—आब्ग्रहणं व्यर्थमलिङ्गत्वादिति ॥

इत्यव्ययप्रकरणम् ॥

समाप्तोऽयं द्वितीयो भागः ।



समासावयवस्य यथैकार्थीभावबलाद्राजशब्दो राजसम्बन्धिपुरुषप्रतिपादकः पुरुषशब्दश्च राजसम्बन्धिपुरुषप्रतिपादकस्तथोच्चैश्शब्दस्याप्यूर्द्ध्वदेशाधिकरणकर्मकासिक्रमणकर्तृप्रतिपादकत्वादन्तरङ्गत्वमिति भावः ॥

# विशेष सूचना



निम्नलिखित पुस्तकें विना मूल्य मिल सकती हैं परन्तु, दूरसे मंगानेवाले प्रार्थी को किसी कालेज, स्कूल, अथवा संस्कृत पाठशाला के अध्यक्ष, अथवा ग्राम के प्रसिद्ध रईस के हस्ताक्षर सहित प्रमाण पत्र अवश्य भेजना चाहिये।

सिर्फ डाक व्यय के लिए टिकट भेजना होगा।

१। पंक्तिप्रदीप–सटिप्पण प्रथमभाग ≋)॥ टि०(व्याकरण)
२। पंक्तिप्रदीप-सटिप्पण द्वितीयभाग ।–) टि०(व्याकरण)
३। अनु[illegible] पसालज्ञ [illegible] ।ट०(वेदान्त)।
४। महाव[illegible] इत्यव्ययप्रकरण " ≋)॥ टि०(वेदान्त)।

मिलने का पता—

अध्यक्ष,

टीकमाणी संस्कृत कालेज, बनारस सिटी.

अथवा—

सेठ सरूपचन्द पृथ्वीराज रूंगटा संस्कृत पाठशाला,

पो: बगड़, शेखावाटी, राजपुताना।

अथवा—

श्रीमान् सेठ स्वरूपचन्द पृथ्वीराज रूंगटा,

[illegible] ठि: मारवाड़ी बाजार, बंबई।